TRIVANDRUM SANSKRIT SERIES.

No. CXXI. No. 121

Śrī Citrodayamañjarī.

No. X.




THE

# VAIKHÂNASÂGAMA

OF

**Marīci**

EDITED BY


K. SĀMBAŚIVA ŚĀSTRĪ

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,

1935.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२१.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः १०.

# वैखानसागमः

मरीचिप्रोक्तः

रस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितः ।

स च
अनन्तशयने
महामहिमश्रीचित्रावतारमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

कोल्लमाब्दाः ११९०. क्रैस्ताब्दाः १९३५.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE

Vaikhānasa, a very ancient Āgamic work, is one of the long-cherished gems adding splendour to the Śrī Citrodayamañjari Sanskrit Series, the publication of which has eagerly been looked up to by learned men in Mysore and other distant lands. This work is called Vaikhānasa as it is an elaborate treatment by the sage Marīci, of the subjects dealt with in the Āgama founded by the sage Vikhanas, as is evident from the statement found at the outset of the work,

"तस्मादग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चनं.गृहे देवतायतने वा भक्त्या नारायणमर्चयेदित्यृषिणा वैखानससूत्रे समासेनोक्तम् । तदहमशेषं विशेषेण समन्त्रकं सप्रयोगं क्रमेण विस्तरतो वक्ष्यामि" ॥

As the work begins with the words मरीचिरुवाच and closes with इत्याह मरीचिः, it is seen that Marīci is the teacher and expounder of this Āgama; and it is in conformity with the view that the work has been labelled in the manuscript as वैखानसं मरीचिप्रोक्तम्. The word Vaikhānasa denotes a prescribed course of religious conduct applicable to all classes of people. When the great poet Kālidāsa refers to Vaikhānasavrata to be observed by Śakuntala,

"वैखानसं किमनया व्रतमा प्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम् ।"

he only means the religious conduct generally to be adhered to by all people. Even though there are many Dharmaśāstras written by Gautama and other sages, the mere names of authors like Gautama and others have not the power of connoting Dharma generally, while the unqualified word Vaikhānasa has got that power — a fact testifying to the wide popularity of the Vaikhānasa Āgama.

It is probable that Vikhanas, the Sūtrakāra and author of Vaikhānasadharmapraśna and other religious works is the ancient sage who founded the religious and Agamic schools of his name and that they were explained and enlarged by Marīci and others. As Marīci is to be taken as belonging to the well-known group of seven Ṛṣis, it goes without saying that Vikhanas must be even more hoary a sage. It is not therefore possible to fix the date of Vikhanas or his follower Marīci. If however we are fortunate

enough to come across the manuscripts of original Dharma-sūtras of Vikhanas on which the treatises of Marīci are based, we shall have an opportunity of making a critical study of the life and other particulars of Vikhanas the founder of the school and Marīci, the expounder.

From the following śloka found at the outset of the Arcanādhikāra and Khilādhikāra which are attributed to Bhṛgu,

"नारायणः पिता यस्य माता चापि हरिप्रिया ।
भृग्वादिमुनयः पुत्रास्तस्मै विखनसे नमः ॥"

and also from the questions put by sages to Bhṛgu in the same context,

"नमस्ते भगवन् ब्रह्मन्! नमस्ते ब्रह्मणः सुत ! ।
त्वमेव सर्वं वेत्तासि त्वमेव ब्रह्मणः प्रियः ॥"
"ब्रह्मपुत्र ! मुनिश्रेष्ठ ! त्वमेव ब्रह्मणः प्रियः ।
त्वमेव सर्वं वेत्तासि त्वमेव वदतां वरः ॥"

it is seen that Vikhanas was the son of Śrī Nārāyaṇa and that Bhṛgu, Marīci and other sages were the sons of the former, a fact pointing to the hoary antiquity of the sage Vikhanas and Marīci, the author of the present work. Pratiṣṭhā-vidhidarpaṇa, an Agamic work of the Vaikhānasa school, written by Narasimha Vājapeyi, son of Mādhavācārya, shows the successive teachers of Āgamas in the following verse,

"नारायणो ब्रह्मण आह सर्वं
वैखानसं वैदिकमन्त्रयुक्तम् ।
सोऽयं विराजो विखना मुनीन्द्रः
स काश्यपादेरवदत् तदेतद् ॥".

which makes it evident that Vikhanas is not later than Brahman who sprang from the Naval-lotus of God Padmanābha. As it is proper that Vikhanas was the first-born Aurasa son of Goddess Lakṣmī and Nārāyaṇa and Brahma sprang afterwards from the Naval-lotus of that supreme deity, there is no incongruity in taking Vikhanas and Brahman as the sons of the same father. And hence it is that the father and mother of Vikhanas are separately mentioned in the line,

"नारायणः पिता यस्य माता चैव हरिप्रिया ॥"

But in the statement that Bhṛgu was the son of Brahman, the latter word should be taken as meaning only Vikhanas of Brahmanic power. Accordingly, we can take the above verse of Narasimha Vājapeyi to mean that Brahman after having received instruction from Nārāyaṇa on the Āgamas of Vikhanas, became Vikhanas himself.

Thus we find that all the above facts go to establish a very ancient date to the sage Vikhanas. We can however fix the date of Vikhanas in the period of Brāhmaṇas and Purāṇas when unlike in the Vedic period, Viṣṇu and other deities were accorded shapes and forms accompanied by their wives. As the modern historical research has assigned for Brahmanas and Puranas, a date not later than the 7th century B. C., I think the same must be the lower limit of the date of Vikhanas, Marīci and other sages also.

The Āgamas and Tantras relating thereto are mainly of two kinds : namely, Vaikhānasa and Pāñcarātra. The Āgamas started by Vikhanas are known as Vaikhānasa, while those that are based on Pañcarātra are called Pāncaratra. The first is found to be almost Vaishnavite and the second both Vaishnavite and non-Vaishnavite. Pañcaratra means an aggregate of five Rātras or School of Wisdom, as is borne out by the following extract from Jñānakhaṇḍa of the Brahmapurāṇa.

"रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।
तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥
पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ।
ब्राह्मं शैवं च कौमारं वासिष्ठं कापिलं परम् ॥
शौनकीयं नारदीयमिदं सप्तविधं स्मृतम् ।"

Vaikhānasāgama is also of various kinds as is clear from the following statement of Narasimha Vājapeyi, in his Pratiṣṭhāvihhidarpaṇa,

"ज्ञानात्मकं काश्यपसत्यकाण्ड-
संज्ञानकाण्डं खलु तर्ककाण्डम् ।
काण्डेषु पञ्चस्वपि काश्यपोऽष्टा
+ + चतुष्षष्टिसहस्रसंख्याः ॥(?)
ज्ञेयतन्त्रोत्तरतन्त्रनामा
विष्वाख्यतन्त्रं खलु पूर्वतन्त्रम् ।

अत्रिप्रणीतं सकलं च पञ्च-
  मष्टोत्तराशीतिसहस्रसङ्ख्यम् ॥

खिलं पुरातन्त्रकथासचित्र-
  मानक्रियार्चोध्वरवर्णकीर्णाः ।
प्रगृह्य नैरुकखिलाधिकारं
  भृगूदितास्तेष्वपि पूर्वसङ्ख्याः ॥

जयाह्वया + ष्टकसंहिता च
  संज्ञानकाह्वया विजया + +. +
मरीचिनोक्ता विजयाभिधान-
  सत्याह्वयाद्यास्वपि लक्षपद्यम्॥

एतानि संवीक्ष्य मरीचिमार्गात्
  सर्वं प्रतिष्ठाविधिदर्पणाख्यम् ।
प्रयोगसौकर्यनिदानभूतं
  वक्ष्याम्यहं सर्वमिहाङ्कुराद्यम् ॥"

The above quotation also tells us that Marīci wrote another extensive work containing hundred-thousand ślokas which came to be known as Jaya and Satya and that other writers following in his footsteps wrote many treatises on Āgama. This statement is corroborated by the fact that the author of the Pratiṣṭhāvidhidarpaṇa reveals his high regard towards Marīci by paying homage to that great sage thus:—

"प्रणम्य विष्णुं परमेष्ठिनं च
  वैखानसं तं भृगुकाश्यपादीन् ।
मरीचिमस्मद्गुरुम् ........."

The edition of the work is based on a palm leaf manuscript belonging to Manalikkara Matom, near Padmanabhapuram, South Travancore. It is written in Tamil Grantha characters and has an appearance of being 3 or 4 centuries old. Expressing my heart-felt thanks to the owner of the library for the loan of the manuscript, I place the edition of this ancient Āgamic work before the appreciative public.

Trivandrum,
3-9-1111.

K. SĀMBAŚIVA ŚĀSTRĪ.

---

॥ श्रीः ॥

# निवेदना ।

इदं वैखानसं नामागमनिबन्धनमतिपुरातनं किमपि सुचिरप्रतीक्षितं सुमनःसुरभि स्वमस्याश्चिरोदयमञ्जर्योः । महीशूरप्रभृतिसुविदितविदेशजना अपीदमहमहमिकयोपलब्धुमुत्कण्ठन्ते ।

इदं च विखनसा महर्षिणोपज्ञातस्यागमस्य मरीचिमुनिप्रपञ्चितं किमपि रूपं विखनःकल्पितविषयान् प्रपञ्चयद् वैखानसं व्यवह्रियते । उक्तं चोपक्रम एव—"तस्मादग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चनं गृहे देवतायतने वा भक्त्या नारायणमर्चयेदित्यृषिणा वैखानससूत्रे समासेनोक्तम् । तदहमशेषं विशेषेण समन्त्रकं सप्रयोगं क्रमेण विस्तरतो वक्ष्यामि" इत्यादि । 'मरीचिरुवाचे'त्युपक्रमेण 'इत्याह मरीचिः' इत्युपसंहारेण च मरीचिमहर्षिरस्य प्रपञ्चकः प्रवक्ता दृष्टः । तदनुगुणं चाभिधानं मातृकायां स्याद् घटितं 'वैखानसं मरीचिप्रोक्तम्' इति । सामान्यतो वैखानसशब्देन सर्वजनीनसंस्करणक्षमा अनादिपरम्परागता धर्माः कथ्यन्ते । महाकविः कालिदासोऽपि —

"वैखानसं किमनया व्रतमा प्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम् ।"

इति शकुन्तलानुष्ठानमाकारयन् वैखानसशब्दस्य तत्तज्जनाचरणीयधर्मे वृत्तिं मनसि करोति । गौतमादिषु धर्मसूत्रकारेषु बहुषु सत्स्वपि नानुपहितगौतमादिशब्दानां सामान्यतो धर्मकथनेऽस्ति प्रवृत्तिनिमित्तं यथा वैखानसशब्दस्य । तदिदमवगंस्यते यद् वैखानसशब्दस्य तावती प्रसिद्धिरिति ॥

विखनाश्चायं सूत्रकारो वैखानसधर्मप्रश्नवैखानसगृह्यसूत्रवैखानसश्रौतसूत्रादिनैकागमनिबन्धकर्ता स्यादतितरां प्राक्तनः कूटस्थो द्रष्टा धर्मागमतन्त्रस्य, यमुपजीव्य मरीच्यादयो निबन्धारः प्रथन्ते । मरीचेरपि सप्तर्षिमण्डलान्तर्भावे निरूपणीये जाग्रति सुतरां विखनसोऽतिप्राचीनत्वमनुक्तमपि गंस्यते । तस्माद् विखनसस्तदुपजीवकस्य मरीचेर्वा न जीवितसमयः काम्प्याधुनिकीं चरितकोटिमलमाटीकितुम् । यदि नाम वयं कृतभागधेया मरीचिमहर्षेरुपजीव्यानि तानि वैखानसधर्मसूत्राणि मूलभूतान्युपलभेमहि, स्यादय-

मवसरः कस्याश्चन चर्चाया जीवितचरितनिबन्धनायाः, तस्य वा कूटस्थस्य विखनसोऽस्य वा प्रपञ्चकस्य मरीचेः। भृगुप्रोक्तार्चनाधिकारे खिलाधिकारे चोपक्रमे —

"नारायणः पिता यस्य माता चापि हरिप्रिया।
भृग्वादिमुनयः पुत्रास्तस्मै विखनसे नमः॥"

इति दर्शनात्, तत्रैव महर्षिप्रश्ने भृगुं प्रति —

"नमस्ते भगवन्! ब्रह्मन्! नमस्ते ब्रह्मणः सुत!।
त्वमेव सर्वं वेत्तासि त्वमेव ब्रह्मणः प्रियः॥"

(अर्चनाधिकारे)

"ब्रह्मपुत्र! मुनिश्रेष्ठ! त्वमेव ब्रह्मणः प्रियः।
त्वमेव सर्वं वेत्तासि त्वमेव वदतां वरः॥"

(खिलाधिकारे)

इत्यारम्भणाच्च श्रीनारायणपुत्रो विखनाः, तत्पुत्रा भृगुमरीच्यादय इति सिध्यति। अतोऽप्युपपन्नमतिपुरातनत्वं विखनसो मरीचेश्च प्रस्तुतस्यागमप्रणेतुः। श्रीमाधवाचार्यसूनुवाजपेययाजिश्रीनरसिंहयज्वना विरचिते प्रतिष्ठाविधिदर्पणे वैखानसे —

"नारायणो ब्रह्मण आह सर्वं
वैखानसं वैदिकमन्त्रयुक्तम्।
सोऽयं विराजो विखना मुनीन्द्रः
स काश्यपादेरवदत् तदेतद्॥"

इत्यागमपरम्परानिरूपणाद् विखनाः श्रीपद्मनाभनाभिपद्मजन्मनो ब्रह्मणोऽप्यनर्वाचीनः प्रथते। युक्तं चेदं श्रीनारायणलक्ष्म्योरौरसःपुत्रो विखनाः, तदनन्तरं नाभिकमलजन्मा च ब्रह्मेति। द्वयोरपि तयोरेकपितृत्वसम्भवे वैषम्याभावात्। अत एवोचितं विखनसो जन्मनि —

"नारायणः पिता यस्य माता चैव हरिप्रिया।"

इति मातापित्रोः पृथक्कथनम्। भृगुं प्रति 'ब्रह्मणः सुते'त्यादिवचने तु ब्रह्मपदेन ब्राह्मण्यवान् विखना बोध्यते। नरसिंहवाजपेयिकथिते पद्ये —

"सोऽयं विराजो विखना मुनीन्द्रः।"

इति वचनेन वैखानसतन्त्रोपदेशसमनन्तरं पञ्चजन्मैव विखनाः सम्प्रतिपन्न इति कार्योपाधिसम्प्रतिपन्नं विखनोनामधेयं ब्रह्मण एवेत्यभ्यूहे तु सर्वमनाविलम् । सर्वथा विखनसः सर्वप्राचीनता सर्वतः सम्मतैव प्रसीदति । तस्या अस्याः प्राचीनतायाः का नाम पार्यन्तिकी सीमेति पर्यालोचनायामिदमिदमवश्यं पुरोधानीयम् । यद्—विष्ण्वादिदेवतानां सह पत्न्यादिभिः संसरन्तीनां निगमकस्य ब्राह्मणस्य पुराणस्य च कस्कः समय इति । वेदकाले पुनरासां देवतानां प्रकटतरप्रतिष्ठाधनवगतेः । अतः साम्प्रतिकचरित्रदिशा परिक्लृप्तात् क्रिस्त्वब्दात् प्राक् सप्तशतसंवत्सरीपरिमितात् समयादनर्वाचीनः कूटस्थो विष्णुर्विखना मरीच्यादिरिति च सिद्धम् ।

द्वये भवन्त्यागमास्तन्निबन्धनास्तन्त्रात्मानश्च मुख्या नाम्ना वैखानसाः पाञ्चरात्राश्च । विखनोमुनिदृष्टा वैखानसाः, पञ्चरात्रमूलाः पाञ्चरात्राश्चेति तेषामन्वर्थमभिधानम् । तत्र प्रथमे प्रायो वैष्णवाधिष्ठानाः, द्वितीय उभयाधिष्ठानाः । पञ्चरात्रशब्दस्य चेयं व्युत्पत्तिः पञ्चानां रात्राणां समाहार इति । रात्रशब्दस्य ज्ञानमर्थः । तथाच ब्रह्मपुराणे जन्मखण्डे —

तन्त्रम् ।

> "रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।
> तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥
> पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ।
> ब्राह्मं शैवं च कौमारं वासिष्ठं कापिलं परम् ॥
> शौनकीयं नारदीयमिदं सप्तविधं स्मृतम् ।"

इत्यादि । एवं वैखानसं च नैकविधम् । तथाच प्रतिष्ठाविधिदर्पणे नरसिंहवाजपेयिभिरुक्तं —

> "ज्ञानात्मकं काश्यपसत्यकाण्ड-
> संज्ञानकाण्डं खलु तर्ककाण्डम् ।
> काण्डेषु पञ्चस्वपि काश्यपोऽष्टा-
> ++ श्चतुष्षष्टिसहस्रसङ्ख्याः (?) ॥
> आत्रेयतन्त्रोत्तरतन्त्रनामा
> विष्णवाख्यतन्त्रं खलु पूर्वतन्त्रम् ।

अत्रिप्रणीतं सकलं च पद्य-
मष्टोत्तराशीतिसहस्रसङ्ख्यम् ॥

खिलं पुरातन्त्रकथासचित्र-
मानक्रियार्चाध्वरवर्णकीर्णाः ।
प्रगृह्य नैरुक्तखिलाधिकारं
भृगूदितास्तेष्वपि पूर्वसङ्ख्याः ॥

जयाह्वया + ष्टकसंहिता च
संज्ञानकाख्या विजया + + + ।
मरीचिनोक्ता विजयाभिधान-
सत्याह्वयाद्यास्वपि लक्षपद्यम् ॥

एतानि संवीक्ष्य मरीचिमार्गात्
सर्वं प्रतिष्ठाविधिदर्पणाख्यम् ।
प्रयोगसौकर्यनिदानभूतं
वक्ष्याम्यहं सर्वमिहाङ्कुराद्यम् ॥"

इति ॥

एभ्य उद्धृतेभ्यः पद्येभ्योऽन्यदप्यवगम्यते । यन्मरीचिमहर्षिणा लक्षपद्यात्मकं किमपि विपुलतमं निबन्धनं वैखानससम्बन्धि व्यरचि । यद् विजयाख्यं सत्याह्वयं चेति । किञ्च मरीचेरस्य महतो निबन्धकस्य मार्गमुपजीव्यान्येऽप्यागमनिबन्धनेषु प्रवृत्ताः । अत्रेदमुद्धृतपद्याधिष्ठानं प्रतिष्ठाविधिदर्पणमेव मुख्यमुदाहरणम् । यदयं दर्पणकारो मरीचिं मुख्यं स्वीयं गुरुं प्रणमति --

"प्रणम्य विष्णुं परमेष्ठिनं च
वैखानसं तं भृगुकाश्यपादीन् ।
मरीचिमस्मद्गुरुम् ... ... ...

इति । एवं महतोऽतिप्रहतस्य च पुरातनस्यागमस्य प्रकाशनायास्य मणालिक्करमठीयश्चिचतुरशतवर्षदेशीयो द्रमिलग्रन्थलिपिस्तालपत्रादर्श एकोऽभवदवलम्बः । तस्यास्य यथावत्परिशोधनोपयोगिनः स्वामिभ्यः कृतज्ञतां प्रकाशयन्नस्मि तमिमं सज्जनसमक्षमवतारयामि ॥

अनन्तशयनम्,
३-९-११११.

के. साम्बशिवशास्त्री.

# विषयानुक्रमणिका ।

॥ श्रीः ॥

श्रीगणपतये नमः ।

# वैखानसं मरीचिप्रोक्तम् ।

## प्रथमः पटलः ।

### ऋषिप्रश्नोत्तरम् ।

मरीचिं महामुनिं स्वशिष्यार्पितकुशासनसमासीनं सर्वज्ञं जितेन्द्रियं शुद्धं नानालोकनिवासिनो धर्मसंसक्ता ऋषयः समागम्याभिवन्द्य भगवन्! केन मार्गेण, कैर्मन्त्रैः, कं देवमर्चयन्तः, कान् लोकान् गमिष्यन्तीति (ऋषय ?) ऊचुः ।

मरीचिरुवाच — श्रुत्यनुकूलमार्गेण चतुर्वेदोद्भवैर्मन्त्रैर्देवं नारायणमर्चयेत् । तद् विष्णोः सालोक्यादिपदावाप्तिर्भवतीति नारायणं परं ब्रह्म परं ज्योतिरक्षरं सर्वभूताधारं सर्वात्मकं सर्वाधारं सनातनं परं पुरुषमर्चयेत् । तद्विमानार्चनं ग्रामाग्रहारयोर्वासिनामनाहिताग्नीनां सामान्यमग्निहोत्रफलदमाहिताग्नीनां सर्वनिष्कृतिहोमार्थं च भवेत् । तस्मादग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चनं गृहे देवायतने वा भक्त्या नारायणमर्चयेदित्यृषिणा वैखानससूत्रे समासेनोक्तम् । तदहमशेषं विशेषेण समन्त्रकं सप्रयोगं क्रमेण विस्तरतो वक्ष्यामि । तस्माद् यत्र यत्र होमविधानं तत्र तत्रान्वाघारस्विष्टकृत्प्रभृत्यन्तहोमाश्चान्यैतन्त्राणि, तद्वैखानससूत्रे स्यात् । तद्वैखानससूत्रोक्तविधानेन निषेकादिसंस्कारैः संस्कृतमाचार्यमर्चकपरिचारकस्थापकान् ऋत्विजश्च वरयेत् । तदाराधनं द्विविधममूर्तं समूर्तं चेति । अग्नौ हुतममूर्तम् । प्रतिमाराधनं (स) मूर्तम् । तच्छ्रेष्ठं यजमानाभावेऽप्यविच्छिन्नं तिष्ठति । तद्विमानार्चनं सर्वक्रतु-

---

१. 'न्या', २. 'न्यै मन्त्राः त' क. पाठः.

P. T. 1604. 500. 28-8-1166. B

फलदं सर्वकामप्रदं चेति ब्रह्मा चाशंसते। तस्मात् क्रमेण विस्तरतो वक्ष्यामि। तदवहितमनसः शृणुध्वमित्याह मरीचिः॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
ऋषिप्रश्नोत्तरं नाम
प्रथमः पटलः॥

---

## अथ द्वितीयः पटलः।

### अथालयभूपरीक्षाविधिः।

आरम्भकालात् पूर्वस्मिन् यजमा(नेना? न आ)चार्यं सर्वकार्योपदेशकं वैखानससूत्रोक्तविधिना निषेकादिसंस्कारैः संस्कृतं, विप्रं, वेदविदं, नित्यस्वाध्याययुक्तं, गृहस्थं पत्न्यपत्यसंयुक्तं, दयादिसंयुक्तं, शुभलक्षणसंयुक्तं, भूपरीक्षादिसर्वक्रियामार्गज्ञं ज्ञानयोगविदं जितेन्द्रियं नित्यध्यानपरं निश्चलं नित्यार्चनतत्परं वैष्णवं भक्तिमन्तमेकं गुरुं वरयित्वाभिवन्द्य सम्पूज्य याचेत। आचार्यो यजमानेन भूमिं सम्यक् परीक्षयेत्। यथेष्टमासे शुक्लपक्षे कृष्णपक्षे त्रिधाद्यर्के कर्त्रनुकूलके भूपरीक्षां कारयेत्। तद्दिनात् पूर्वमङ्कुरानर्पयेत्। हर्म्यागारादिशिल्पशास्त्रज्ञं, लक्षणसम्पन्नं, शुद्धमरोगिणं कुशलं शिल्पिनमाहूय वैष्णवैः सार्धं देवेशं ध्यायन् दिवा कन्यां पुरस्कृत्य सर्वालङ्कारसंयुक्तां प्रीयतां भगवानिति देवेशं प्रणम्य आत्मरक्षां कृत्वा तं देशं सम्प्रविश्य प्रदक्षिणं गत्वा चतुरश्रमायताश्रं वा प्रागवनतामुत्तरा(वात? वन)तां समां वा भूमिं शब्दस्पर्शवर्णरसगन्धैः सम्परीक्षयेत्। वीणावेणुदुन्दुभिगजतुरगध्वनियुतां सुखसंस्पर्शनां श्वेतपीतकृष्णरक्ताभां मधुराम्लतिक्तकटुकषायलवणरसां सुगन्धसंयुक्तां प्रदक्षिणोदकवतीं क्षीरवृक्षतुलसीकुशदर्भविष्णुक्रान्तिस्थलारविन्ददूर्वायुतां भूमिं सम्यक् परीक्षयेत्। सुमुहूर्ते त्वाचार्यः प्राङ्मुख उदङ्मुखो वा स्थित्वा मेदिन्यादि समुच्चार्य हस्ताभ्यां भूमिमभिमृश्य 'इदं विष्णुरि'ति मन्त्रेणैवावाहयेत्। नपुंसकवृक्षाढ्यामूषरश्मशानकपालास्थिपाषाणशर्कराकीर्णां कीट-

---

१. 'गन्तमु' ख. पाठः. २. 'पातां' क. पाठः.

वल्मीकसङ्करूपतृणभस्माङ्गारतुषकेशान्विताम् अन्त्यजातिभूयिष्ठां भूमिं त्यक्त्वा पूर्वोक्ते देशे हस्तायतविस्तारावगाढं चतुरश्रं खनित्वा, तद्वटे तन्मृदं प्रक्षिपेत्। अधिके महावृद्धिः, हीने हीनं, समे समं विद्यात्। अथान्यैर्निमित्तैः संलक्ष्यागारमारभेत । ग्रामादीनन्येषु दैवं विहाय चतुःषष्टिपदमेकाशीतिपदं षट्पञ्चाशद् द्विशतपदं वा कृत्वा, तन्मध्यब्रह्मभागं चतुर्धा कृत्वा, तद्वायव्यांशे पश्चिमे पूर्वमध्यसूत्रादुत्तरे दक्षिणपादपार्श्वे प्रासादप्राकारां भित्तिमाश्रित्यैवं सङ्कल्प्य देवेशं विष्णुं नवषट्पञ्चैकमूर्तिप्रतिष्ठामर्चयेत् । ऐशान्ये शङ्करभवनं प्राङ्मुखवारुणदेशे प्राङ्मुखमासनं स्थानकं वा, आदित्यांशे भास्करालयं प्रत्यङ्मुखं, याम्ये विन्ध्यवासिनीं, प्राङ्मुखं भृशे विघ्नेशं, सुग्रीवे षण्मुखम्, अभितो मातृकोष्ठं, पराङ्मुखे जयन्ते दौवारिके कृष्णस्यालयं, पुष्पदन्ते शोषिणे राघवस्य, महेन्द्रे महामत्स्यसत्यकेतुमत्स्यालयं, नैर्ऋते वाराहं, जयन्ते चान्तरिक्षे वा नारसिंहं, रोहिणे वामनं त्रिविक्रमं, यक्षगन्धर्वे बलभद्रं, मुख्ये परशुपाणिनं, सूरते वैकर्किणं सोमेशानं गृहक्ष(तं ? ते) दैवतं वासुदेवं, वितथे मानुषं वासुदेवं, कृष्णांशे त्वादिमूर्त्तिं, भृङ्गराजे ग्रामान्, बाह्ये वा पञ्चवीराणां स्थानं, ग्रामस्य मध्ये (वाह्यो ? बाह्ये) दिक्षु विदिक्षु वा सर्वत्र विष्णुस्थानकासनशयनकभुविवार्चवौ (?) ........ ग्रामप्रेक्षकमेव कारयेत् । ग्रामाद् बाह्येऽपि यत्रैव विम्बैर्वास्तव्यं चेत्, तत्रैव मध्ये दिशासु वा देवीभ्यां सहितं रहितं वा संस्थापयेत्। वने नद्यद्रिपार्श्वे तटाकारामसमीपे विविक्ते देशे वा प्राग्द्वारमुत्तमोत्तमम् । पश्चिमद्वारमुत्तमम् । दक्षिणद्वारं मध्यमम् । उत्तरद्वारमधमम् । सहस्रविप्राधिकग्रामादौ मध्ये विष्णुमनेकमूर्त्तिविधानेनार्चयेत् । अशक्तश्चेदेकमूर्तिविधानेन वा । तदूने पञ्चविंशद्वयादर्वागपि तन्मध्ये पञ्चमूर्त्तिं प्राङ्मुखं चैकमेकमूर्त्तिं वा । तेषां नगर्यांश्च पश्चिमे चैकमूर्तिविधिना प्रतिष्ठाप्यार्चयेत् ॥

इति वैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
भूपरीक्षालयदेशविधिर्नाम
द्वितीयः पटलः ॥

## अथ तृतीयः पटलः ।

### अथोर्ध्वं कर्षणविधिः ।

मार्गशीर्षादिद्वादशमासेष्विष्टमासे शुक्लपक्षे यजमानानुकूलर्क्षे यत्र देवालयं कुर्यात्, तत्रैकाद्येकोनषष्टिकान्तं यथेष्टशक्त्या विमानं मण्डपं सप्राकारं चतुर्दिशं सीमाविनिर्णय इति । अत्र तृणगुल्मलताद्यैः संशोध्य, उन्नतावनतं समीकृत्य, युगलाङ्गलादीनि चाहरेत् । युगं वैष्णवं द्विपट्प्रादेशं, तथा कार्ष्णायसमयमसनेन पञ्चतालफलशरीषेण चतुर्हस्त लमपिं (?) पञ्चप्रादेशमङ्गुलपरीणाहप्रतोदं शेषं युक्त्यैव कारयेत् । मौञ्जीं तृवृतं रज्जुमाहृत्य, वृषौ श्वेतौ कृष्णौ वा मिश्रवर्णौ सम्पूर्णाङ्गौ सुमुखावरोगिणौ न रुष्टौ स्वर्णभृङ्गौ रूप्यखुरौ च कृत्वा सर्ववाद्यसमायुक्तं यजमानो गुरुश्च वैष्णवैः सार्धं तां भूमिं सम्प्रविश्य, तस्य पश्चिमे प्रपां कृत्वा, तन्मध्ये विष्वक्सेनं प्राङ्मुखं दक्षिणे चक्रमुत्तरे (चक्रमुत्तरे ?) वीशं च धान्यैः पीठे कृत्वा, आवाह्यार्च्य, मुद्गान्नं गरुडस्यान्ययोग्यग ......रूपान्नं निवेद्याभिमुखे वृषौ प्राङ्मुखौ संस्थाप्य, तृणमुष्टिं प्रदायाचार्यो यजमानेन वस्त्रोत्तरीयाद्यैरभिपूज्य दक्षिणां दत्त्वा, मौञ्जीरज्जुमादाय, वृषौ रुद्रमन्ये निबन्धयेत् । त्रियम्बकमिति युगलाङ्गलं च वैष्णवमन्त्रमुच्चार्य, तद्भुवं पश्चिमादिरेखां कर्षयेत् । पश्चात् कर्षकमाहूयालङ्कृत्य, सर्वत्रापि बहुशः कर्षयित्वा, द्विजा(नि?न्) वाचयित्वा, सर्वान् व्रीहीन् वापयेत् । उत्तमं षष्टिप्रियङ्ग्वा(पि ? दि) मध्यमं तिलसर्षपादीन् वापयेत् । अप्सन् सोममभ्यर्च्य, विष्णुसूक्तेनाभिमृश्य, सोमं राजानं वैष्णवं चोक्त्वा, नैर्ऋत्यां दिशि सर्वत्र वापनं कृत्वा, वारुणैर्मन्त्रैर्जलं देयम् । पश्चाद् रक्षां विधाय, प्राप्ते सर्वसस्येषु पश्चिमे पूर्ववद् विष्वक्सेनाद्यैः समाराध्य, निवेद्याम्भा (?) च, तत्र समानीयानभ्य, गोदानसूक्तेन तानि सस्यानि गोगणेभ्यो निवेदयेत् । अथवा त्वरितं कालयापनभीत्या वा तथा भूषणं कृत्वा, पलालभाराणि दूर्वादीनि तृणानि वास्तीर्य, तथैव गोगणेभ्यो निवेदयेत् । तां भूमिं संशोध्य समं कृत्वा, प्रागन्ताश्चोत्तरान्ताश्च दशभिः सूत्रैरेकाशीतिविभागं कृत्वा, तन्मध्ये नवभागं ब्राह्मं, तत्प्राच्यामर्यम्णः षड्भागं, तद्दक्षिणे षड् दण्डधरस्य, तत्पश्चिमे षड् पाशभृतः तथा धनदस्योत्तरे

षट्पदम् । आग्नेय्यां सवितुः सावित्रस्य च द्वे पदे । तथा नैर्ऋत्यामिन्द्रेन्द्रजयौ, तथा वायव्ये रुद्ररुद्रजयौ, तथैशान्ये अपापवत्सौ च प्रत्येकं द्विपदाधिपाः । तद्बहिश्चैशान्यादीशं पर्जन्यं जयन्तं महेन्द्रमादित्यं सत्यकं भृशमन्तरिक्षमग्निं पूषाणं वितथं गृहक्षतं यमं गन्धर्वं भृङ्गराजमृषिं निर्ऋतिं दौवारिकं सुग्रीवं पुष्पदन्तं सरित्पतिमसुरं शोषिणं रोहं जवनं नागं मुख्यं भल्लाटं सोममर्गलमदितिं सूरिदेवं च द्वात्रिंशद् देवान् पृथक् पृथगेकपदाधिपांश्च (स्थापयेत्) । एते(षां) पञ्चचत्वारिंशद्देवानां प्रत्येकं द्विप्रस्थैश्चरुं पक्त्वा, सगुडघृतदधिसक्तुमुत्तमं ब्राह्मणमर्यमादीनां चतुर्णां सावित्र्यादीनां मध्यमे ब्राह्मणस्यैकेन वाधमम् । अन्येषां द्रोणैस्तण्डुलैरेकपात्रे चरुं पक्त्वा तत्तन्नाम्ना नमोन्तेन पूर्वमुदकं पुष्पं पश्चाद् बलिं दत्त्वा, पुष्पादीनि संशोध्य, गर्भालयप्रदेशे प्रागन्ताश्चोत्तरान्ताः पञ्चभिः सूत्रैः षोडशभागं कृत्वा, तत्सूत्रसन्धाविधानादिनागमभूतं यक्षं दुर्गां घोटमुखीं धात्रीं पपुषं राक्षसं जयं कृष्णं सुरुण्डं शिवं प्राणं कवं शक्रं पुरुहूतं विघ्नां यशसं भद्रां वेदभृतं तापसं सन्धृष्टां विद्यामभितं पाञ्चभौतिं चैतेषामेकपात्रे द्रोणार्धैश्चरुं पक्त्वा, तत्तन्नाम्ना पूर्ववद् बलिं दत्त्वा, पुण्याहमपि वाचयेत् । अनिशं चैवं भूमिशुद्धिं कृत्वा, तरुणालयं विना विमानं ध्रुवबेरं कौतुकाद्यं च कृत्वा प्रतिष्ठां कारयेद्वारकं तरुणालयं पूर्वमित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
कर्षणबीजविधिर्नाम
तृतीयः पटलः ॥

---

## अथ चतुर्थः पटलः ।

अथोर्ध्वं पूर्वं तरुणालयस्थानादैशान्ये सौम्ये वायव्ये पूर्वपश्चिमयोरैन्द्रसूत्रादुत्तरभागे त्रिहस्तादित्रिहस्तान्तं तरुणालयद्वितीयावरणे तृतीये वा समारभेत् । भित्तिमूलविशालमात्राङ्गुलेन द्वितालत्रितालचतुस्तालं वा तदवशेषनालीगृहविशालं समं त्रिपादमर्धं वा मुखमण्डपं यथा मूलालयद्वारं. तथा तरुणालयं मृण्मयमुपरिष्टात् तृणाच्छादनं

लोष्टाच्छादनं यात्रानुक्तं सर्वं द्वितीयं प्ररुणालयस्योक्तविधिना कारयेत् । नैव शिलेष्टकैस्तन्मध्ये द्विवेदिसहितमर्चापीठं च कृत्वा पश्चात् फालबेरं खदिरासनचम्पकार्जुनपनसवकुलमधुकाश्वत्थबिल्ववटीभिर्विधिनाहृत्य शोपयित्वा त्वचं व्यपोह्य मानाङ्गुलेन सप्ताङ्गुलं नवाङ्गुलमेकादशाङ्गुलं वा देवीभ्यां सहितं वा देवं सलक्षणमानसंस्थानकं कृत्वा स्थापनादिवसात् पूर्वं विधिनाङ्कुरानर्पयित्वाक्षिमोचनं कृत्वाधिवास्य. बालालयाभिमुखे दक्षिणे वा यागशालां कृत्वा, तोरणाद्यैरलङ्कृत्य तन्मध्ये शय्यावेदीं द्विहस्तायतविस्तारां तत्तुरीयांशोत्सेधां प्राच्यां सभ्याग्निकुण्डं तत्प्राच्यामैशान्यां वा स्नानवेदीं च कृत्वा पश्चादग्निं परिकल्पयेदित्येके बालधामस्योत्तरे वैखानससूत्रोक्तविधिना वास्तुहोमं कृत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं वाचयेत् । सभ्याग्निकुण्डे चाघारं हुत्वा बालयाभिमुखे कुम्भद्रोणद्वयपूर्णाखण्डस्फुटितकालरहितं त्रिगुणेनैकसूत्रेण वा वैष्णवं मन्त्रमुच्चार्य प्रदक्षिणमावेष्ट्य साविधानं शुचीवो हव्येति प्रक्षाल्य धारासु सप्तेत्यपामुत्पवनं कृत्वा कुम्भजलेन नमः सुलोमीत्यापूर्य 'इदमापः शिवा' इत्यभिमृश्य चन्दनोशीराद्यैर्वासयित्वा वस्त्रयुग्मेनावेष्ट्य सुवर्णेनाष्टमङ्गलपञ्चायुधसुवर्णचिह्नं नव च रत्नकुशकूर्चांश्च पृथक् पृथग् विष्णुगायत्र्या क्षिप्त्वा धान्यपीठे कुम्भं संन्यस्याचार्यश्चोत्तराभिमुखो भूत्वा ब्राह्ममासनमास्थाय प्रतिष्ठोक्तक्रमेण ध्यायन् कुम्भे समावाह्य पश्चात् शर्करसूक्तं समुच्चार्य कुम्भं बिम्बं समादाय स्नानश्वभ्रे प्रतिष्ठाप्य कलशैश्चतुर्दशैः संस्नाप्य वस्त्रोत्तरीयाद्यैरलङ्कुर्यात् । ........ परिरभ्यर्च्य शाययेद् धान्ये । पञ्च शयनानि वासांसि वास्तीर्य तस्मिन् देवं कुम्भं निवेश्य पुण्याहान्ते तण्डुलोपरिन्यस्तसौवर्णतान्तवं वा 'स्वस्ति देवे'त्यादिनोपध्याय वैष्णवेति शयने शाययेत् । उत्तराच्छादनं कृत्वाग्निं सुसमुज्ज्वाल्य वैष्णवं हुत्वान्ते हौत्रं प्रशंस्यावाहनजुष्टाकारस्वाहाकारं च हुत्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं सर्वदैवत्यं च हुत्वाग्निमानभ्य रात्रिशेषं व्यपोह्याचार्यः प्रभाते स्नात्वागारं प्रविश्याचम्य देवमुत्थाप्याष्टोपचारैरभ्यर्च्याचार्यादिभ्यो दक्षिणां दत्त्वा मुहूर्ते समनुप्राप्ते स्थापको देवमादायाचार्यः शिरसा कुम्भं धारयन् सर्ववाद्यसमायुक्तं स्तो-

अध्वनिस्समायुक्तं तोयधारापुरस्सरं प्रदक्षिणं कृत्वाभ्यन्तरं प्रविश्य चरराशौ शुभोदये प्रात'स्तद्विष्णुरि'ति देवं संस्थाप्य विष्णुसूक्तमात्वा- हार्षादिकं जप्त्वा देवपादस्पृशो भुवर्भुवर्भूरिति बिम्बस्य मूर्ध्नि नाभिपादेषु च क्रमेण विन्यस्य यकारं पादयोरन्तरे पीठे न्यस्याकारं हृदये न्यस्य प्रणवैर्वेष्टयित्वा कुम्भस्थां शक्तिमिदं विष्णुरिति कूर्चे- नादायायातु भगवानिति बिम्बस्य मूर्ध्नि विष्णुमावाहयामीति स- ज्ञयावाहयेत् । दक्षिणे पूर्वे वामे हरिणीमावाह्य पीठान्तभाणादि- सुभद्राद्यावरणत्रयदेवानावाह्यासनाद्युपचारैरभ्यर्च्य पुण्याहं वाचयित्वा दक्षिणे ब्रह्माणं मार्कण्डेयं वामे शङ्करं पत्न्या पितरं द्वारेषु धात्रा- दिद्वारदेवद्वारपालविष्ववसेनगरुडश्रीभूतादिमहाभूतान्तं नवभेदेष्वेक- मार्गेण पर्षदानावाहयेत् । पायसं शुद्धान्नं वा प्रभूतं निवेदयेत् । अत्रावाहनविसर्गं च हुत्वा नित्यार्चनविधानेन नित्यं सम्यगर्च- येत् । नवषट्पञ्चमूर्तिस्तरुणालयविशेषं पूर्वोक्तदेशे तस्य प्राकार- मनतिक्रम्य नवहस्तायतविस्तारं तरुणालयं कृत्वा तस्यैकाशीतिभागं कृत्वा तन्मध्ये नवभागं गर्भागारं तद्बहिः षोडशभागं तस्याभ्यन्त- रभित्तिस्तद्बहिश्चतुर्विंशतिभागमलिन्दं तद्बहिर्द्वात्रिंशद्भागं बाह्यभित्ति- स्तम्भितं चतुर्दिक्षु चतुर्द्वारयुतमन्यज्जालकं वा समं त्रिपादमर्धं मुख- मण्डपसंयुक्तं गर्भागारं सप्तसप्तपदं कृत्वा ब्राह्मे विष्णुमादिमूर्तिं तत्प- श्चिमे मानुषभागे तृतीयतलकौतुकस्य द्वितालोच्छ्रयं पीठं कृत्वा तस्या- लिन्द्रे तद्द्वारदक्षिणे पुरुषमूर्तिं प्राङ्मुखमलिन्दे दक्षिणे दक्षिणामुखं सत्यं तथा पश्चिमे पश्चिमामुखमच्युतं तदुत्तरे चोत्तराभिमुखमनिरुद्धं तस्यालीन्दे चानिरुद्धमूर्तेर्वामपार्श्वे द्वितीयतलवाराहमुत्तराभिमुखं त- स्यालीन्द्रेऽच्युतमूर्तेरुत्तरपार्श्वे पश्चिमाभिमुखं नारसिंहं तस्यालीन्द्रे सत्यमूर्तेः पश्चिमतो दक्षिणाभिमुखौ नरनारायणौ कृत्वा, एतन्नवमूर्ति- प्रतिष्ठाक्रमेण प्रतिष्ठापयेत् । षण्मूर्तिप्रतिष्ठा चैव बालागारं कृत्वा वाराहनारसिंहौ नरनारायणौ च हित्वा विष्ण्वादिपञ्चमूर्तीस्तृती- यतलकौतुकं च षण्मूर्तिप्रतिष्ठापने तथैव बालागारं कृत्वा तृतीयतल- देवं द्वितीयतलवाराहादीन् हित्वा विष्ण्वादिपञ्चमूर्तीः प्रतिष्ठाप्या- र्चयेत् । एतेषां बालबेराणि पूर्ववत् कृत्वा प्रत्येकमक्षरं मेषाधिपा- मूर्तेर्योगशालायामालयाभिमुखे तत्प्राच्यां पुरुषमूर्तेः तत्प्राच्यां तृतीय-

तलस्यालयाद् दक्षिणे सत्यमूर्त्तेर्यागशाला। तद्दक्षिणे नरनारायणालयस्य पश्चिमयाच्युतमूर्त्तेर्यागशाला, तत्प्रतीच्यां नारसिंहस्यालयादुत्तरेऽनिरुद्धमूर्त्तेर्यागशाला। तस्योदीच्यां वाराहमूर्त्तेर्यागशाला। एवं षोडशद्वादशाष्टचतुःस्तम्भैर्युक्तं प्रत्येकं तोरणपूर्णकुम्भपिधानध्वजदर्भमालाद्यैरलङ्कृत्य तेषां मध्ये शय्यावेदिं यथाक्रमेण चतुस्त्रिद्विहस्तविस्तारायतां तुरीयांशोत्सेधां चतुरश्रामच्छिद्रां कारयति। आदिमूर्त्तेः पञ्चाग्निं पौण्डरीकाग्निकुण्डं च ततः शयनस्य पञ्चाग्निमेवं पुरुषमूर्त्तेराहवनीयं सत्यमूर्त्तेरन्वाहार्यमच्युतमूर्त्तेर्गार्हपत्यमनिरुद्धमूर्त्तेरावसथ्यं वाराहस्य सभ्यं नृसिंहस्य नरनारायणयोः पौण्डरीकाग्निं कारयति। विष्णुमादिमूर्त्तेः शयानस्य प्रत्येकं सभ्याग्निमेव कारयेदिति केचित्। तद्यागशालायां प्रत्येकं स्नानश्वभ्रं च कृत्वालयस्योत्तरे वास्तुहोममेकमेव कृत्वा गर्भागारे पर्यग्निपञ्चगव्याभ्यां संशोध्य पुण्याहं वाचयित्वा सर्वहोमानामाघारं हुत्वा सान्ते सर्वेषामाचार्यास्तत्तद्बेराभिमुखे प्रतिष्ठोक्तविधिना कुम्भान् सम्पूज्याचार्यः सप्तभिः कलशैः संस्नाप्य तत्तद्वेद्यां धान्योपरि वेदाहमित्यण्डजादीनि पञ्च शयनानि वासांसि वास्तीर्य सर्वान् देवान् तत्तत्कुम्भं च तत्तद्वेद्यां समारोप्य पुण्याहान्ते प्रतिसरान् बन्धयित्वा 'यद् वैष्णवमि'ति प्राक्शिरः शाययेत्। तत् प्रधानाग्नौ होत्रं प्रशंस्य तत्तन्मूर्त्तिमन्त्रान् तत्तज्जपपार्षदानामावाहनं कारयेत्। आदिमूर्त्तेरनन्तशयनस्य सभ्याग्नौ वैष्णवं विष्णुसूक्तं श्रीसूक्तं भूमिर्देवत्यं च हुत्वा पुरुषमूर्त्तेराहवनीये पुरुषसूक्तं सत्यमूर्त्तेरन्वाहार्ये विष्णुसूक्तमच्युतमूर्त्तेर्गार्हपत्ये अतो देवादिवैष्णवमनिरुद्धमूर्त्तेरावसथ्ये नौसूक्तमेकैकाक्षरं चतुष्कृत्वो वाराहस्य सभ्याग्नौ क्ष्मामेकामिति मन्त्रेणाष्टाधिकशतं हुत्वा नृसिंहस्य गार्हपत्याग्नौ 'यो वा नृसिंह' इति अष्टाधिकशतैर्हुत्वा नरनारायणयोः पौण्डरीकाग्नौ सत्यः सत्यस्थ इति विष्णुगायत्रीं चाष्टोत्तरशतं हुत्वात्रानुक्तं सर्वं महाप्रतिष्ठाक्रमेण हुत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा सर्वेषामाचार्याणां दक्षिणां दत्त्वा सर्वं देवदेवानुन्यासं विना राशौ तत्तत्स्थाने प्रतिष्ठाप्य पुण्याहं वाचयित्वा नित्यार्चनविधानेनाभ्यर्च्य हविर्निवेद्य षण्मूर्त्तिप्रतिष्ठा चेद् वाराहं नारसिंहं नरनारायणौ हित्वा षण्मूर्त्तिना 'संस्थाप्यार्चयेत्। पञ्चमूर्त्तिप्रतिष्ठा प्रतिष्ठादनन्तशयनवाराहादीनां विना, आदिमूर्त्याादिपञ्च-

मूर्तीः संस्थाप्यार्चयेत् । एष विशेषोऽन्यत् सर्वं समानम् । अस्मिन्नेकत-लविमाने ध्रुवबेरस्यैकस्यैव कौतुकात् पञ्चैव सत्यतस्तेषां कौतुकानां बालस्थाने स्थापनां यदीच्छेत्, पूर्वं तरुणालयं सालीन्द्रं गर्भगृहम-भ्यन्तरभित्तिविहीनं कृत्वा तत्पदे विष्ण्वादिपञ्चमूर्तीनां कौतुका-दीनां पञ्चाग्नीन् परिकल्प्य होमं हुत्वा विधानात् संस्थाप्यार्चयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते तरुणालय-
विधिर्नाम चतुर्थः पटलः ॥

## अथ पञ्चमः पटलः ।

अत ऊर्ध्वं प्रथमेष्टका शिला वा विन्यसेत् । मासानां फाल्गुन-चैत्रवैशाखतैष्यज्येष्ठेषूत्तमम् । श्रावणाषाढकार्त्तिकाश्वयुजमासेषु मध्य-मम् । शेषेष्वधमम् । पूर्वपक्षे कृष्णपक्षेऽन्त्यत्रिधाभागं हित्वा श्रवण-रोहिणी त्रीण्युत्तराणि हस्तस्वातिपुनर्वसुवारुणमैत्रेष्वेकस्मिन् यजमाना-नुकूलर्क्षे स्थिरराशावनिन्दितेष्वारभेत् । कृष्टभूमिमध्ये चतुर्दिशं चतुर्हस्त-जलेन समं कृत्वा तन्मध्ये शङ्कुं स्थापयेत् । तच्छङ्कुवृक्षान् सारव(न्तो? तो) याज्ञिकान् वामानाङ्गुलेनाष्टाङ्गुलं दशाङ्गुलं द्वादशाङ्गुलं वायामसदृशं मूलनाभं तदग्रमर्धनाभं च त्रिवृत्तं शङ्कुं कृत्वोदयात् पूर्वं तन्मध्ये शङ्कुद्विगुणमानेन मण्डलमालिख्य तन्मध्ये शङ्कुं संस्थाप्य पूर्वाह्णा-पराह्णयोश्छायां यदि तन्मण्डलान्तर्गतां तद् बिन्दुद्वयं कृत्वा तद्बिन्दु-द्वयान्तर्गतसूत्रं प्रसार्य तत्पूर्वापरद्विगुणच्छायां दक्षिणतो वामे निधाय तच्छङ्कुं नरतनुरनुरूपं तस्मात् षण्णवतिभागं कृत्वैकांशं तदङ्गुलं त-दङ्गुलेनापच्छायां प्रतिमासं विशोधयेत् । मेषे मिथुने सिंहे तुलायां च रविस्थिते द्व्यङ्गुलं नीत्वा, कुलीरे वृश्चिके मीने चतुरङ्गुलं धनुःकुम्भे षडङ्गुलं मकरेऽष्टाङ्गुलमृषभे कन्यायां नवाङ्गुलच्छाया भवेत् । मासि मासि उक्ताङ्गुलीस्त्रिंशद्भागं कृत्वा दिने दिने चैकभागं युक्त्या शोध-यति । तस्मिन् पुनर्बिन्दुद्वयं कृत्वा तयोर्मध्यं पूर्वापरं पूर्वं प्रसार्य दक्षि-णोत्तरं तद्बिन्दुद्वयान्मत्स्यवद् भ्रमीकृत्य तत्पुच्छाननयोः सूत्रं प्रसार्य तत्पश्चिमे जलान्तं शिलान्तं वा खनित्वा वालुकैरापूर्य हस्तिपादेन दृढीकृत्य समाहातीते तत् खातं पञ्चधाकृत्य त्रिभागावनते चोत्तमं,

द्विभागावनते मध्यममेकभागावनतं चाधमम् । तस्मिन् शिला वाथेष्टका वा संन्यस्येत् । तयोर्लक्षणम् । युग्मायुग्महस्तविमानानां तद्धस्तं प्रति त्र्यङ्गुलं द्व्यङ्गुलं संवर्धयेत् । यावत्तावदङ्गुलिसङ्ख्यासमायामं तस्यार्धविस्तारं तस्यार्धवाहुल्यमेव चतुःशाला वाथेष्टकाग्रं पादमुखं पृष्ठं च संलक्ष्य वाहरेत् । अङ्कुरानर्पयित्वा जलाधिवासं त्र्यहमेकाहं वा कृत्वा तत्स्थानात् प्रमुखे षोडशद्वादशाष्टचत्वारो वा पादैर्युक्तं प्रपां कृत्वा तोरणाद्यैरलङ्कृत्य पूर्वरात्रौ तत्स्थानादुत्तरे वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां संशोध्य पुण्याहं कृत्वा यागस्थानस्य मध्ये चतुर्दिशं द्विहस्तायतविस्तारां तालोत्सेधां वेदिं कृत्वा प्रागादिचतुरग्निकुण्डं, तत्प्राच्यामैशान्यां वा स्नानश्वभ्रं च कृत्वा पश्चा(द ? दा)घारं हुत्वाघोरान्त शिला वाथेष्टका वा स्नानश्वभ्रे प्रतिष्ठाप्य तत्प्राच्यां व्रीहिं दण्डवत् पङ्क्तिं कृत्वा चतुर्दशकलशान् विन्यस्य विधिना स्नाप्य वेद्यां धान्योपरि पञ्चवस्त्राण्यास्तीर्य शिलाद्यं च प्रत्येकं वस्त्रमावेष्ट्य तानि चतुर्वेदरूपाणि ध्यात्वा प्रागादि विन्यस्य पुरुषादिमूर्त्तीर्नामभिरभ्यर्च्य तन्मध्ये नवरत्नानि विन्यस्य तस्मिन् रत्नेशमभ्यर्च्य पुण्याहं कृत्वा प्रत्येकं स्वस्ति देवेति प्रतिसरान् बद्ध्वाचार्यश्चतुर्वेदमन्त्रैः शिलाद्यं प्राच्यामुत्तराग्रं दक्षिणे प्रागग्रं पश्चिमे चोत्तराग्रमुत्तरे प्रागग्रं च शाययेत् । उत्तराच्छादनं कृत्वा आहवनीये हौत्रं प्रशंस्य पुरुषादिचतुर्मूर्त्तिं नृत्तेशं विष्णुं दिग्देवतामू(र्तीनामिभि ? र्तीः नामभि)रावाह्य जुष्टाकारस्वाहाकारांश्च कृत्वा देवं ध्यायन्नाहवनीये पुरुषसूक्तमैन्द्रमाग्नेयं वैष्णवं चान्वाहार्ये विष्णुसूक्तं ब्राह्मं याम्यं नैर्ऋतं च गार्हपत्ये वैष्णवमेकाक्षरादीन् वारुणं वायव्यं चावसथ्ये वैष्णवं रुद्रस्तोत्रं सौम्यं रौद्रं च प्रत्येकं दशकृत्वो हुत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा मुहूर्ते समनुप्राप्ते यजमानेनाचार्यस्थापकादीन् वस्त्रोत्तरीयाद्यैरलङ्कृत्य दक्षिणां दत्त्वा सर्वालङ्कारसंयुक्तं ग्रामं बालागारं वा शकुनसूक्तेन प्रदक्षिणं कृत्वा तद्देशं प्रविश्याग्निं विसृज्याचार्यो यजमानस्य पत्न्या सार्धं विमानं निश्चित्य सूत्रं प्रसार्य द्वारं हित्वाभ्यन्तरद्वारं दक्षिणे यवद्वयं हित्वा भित्तिमध्ये चतुरश्रमुपलिख्यात्र नवभागं विभज्याचार्यं प्राङ्मुखमासयित्वा प्राणायामं च कृत्वा देवं ध्यायन्, अग्निमीले इत्यैन्द्रे पदे प्रथमेष्टका शिला वाग्र-

मूर्ध्वाननमाग्नेय्यां तत्पादमिषेत्वोर्जेत्वेत्यादिना याम्ये द्वितीयेष्टकाग्रं नैर्ऋत्यां पादमग्ने आयाहीति वायव्ये तृतीयेष्टकाग्रं वारुणं पादं शन्नो देवीरित्यैशे चतुर्थेष्टकाग्रं सौम्ये पादं क्रमेण संन्यस्य तन्मध्ये ब्राह्म-मन्त्रमुच्चार्य नवरत्नं सुवर्णं वा निक्षिप्य पश्चाच्छिल्पिनमाहूयाभि-पूर्य तेनैव क्रमेण दृढीकृत्योपरिष्टाद् भित्तिमूलं सोपपीठमधिष्ठानं केवलमधिष्ठानं कृत्वा पादपट्टादिवर्गाभ्यां विमानं पञ्चतलं चतुस्तलं त्रितलं द्वितलमेकतलं वा परिकल्पयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते प्रथमशिलेष्टका-
विधिर्नाम पञ्चमः पटलः ॥

---

## अथ षष्ठः पटलः ।

अथातो विमानविधिं वक्ष्ये । नलिनकादिषण्णवतिविमानानि त्रिचतुर्हस्तादि रुद्रार्ककरान्तमेकभूमेः, पञ्चषड्ढस्तादि त्रयोदश चतु-र्दशकरान्तं द्विभूमेः, सप्तकराष्टकादि पक्षषोडशकरान्तं त्रितलस्य, सप्त-दशहस्तादि षण्णभ्यर्च्येतिकरान्तं (?) चतुर्भूमिं वा शिल्पशास्त्रोक्तमु-त्तरे वक्ष्यामो पञ्चतलादि द्वादशतलान्तं युग्मायुग्महस्तैर्युक्ताः संयोज-यन्त्येवं तलं प्रतिमानं दशधा भवन्ति । एतेष्वष्टहस्तैर्वायामसमचतु-रन्तमुपरि वृत्तं ग्रीवशिखरं चापि वेसरं तथैव सुग्रीवं द्राविडी स्याद् विमानविपुलस्य सप्तदशोत्सेधं शान्तिकमधाधिकोत्सेधं पौष्टिकं पादो-नद्विगुणं जयदं द्विगुणं तमद्भुतं तदष्टांशोऽधिकद्विगुणं सर्वकामितं स्या-दर्पितमनर्पितमिति द्विविधं भवत्यर्पितमनर्पितमलीन्द्रयुक्तमित्येवं कल्प-येद् विमानस्य विस्तारं पदबाह्यमुत्सेधमुपानस्थूपिपर्यन्तं स्यान्मान-सूत्रं विन्यस्यैशान्ये किञ्चिदधिकमाग्नेये न्यूनमेवमेव कल्पयेत् । अन्यथा चेत् सर्वं नश्यति । मानसूत्राद् बहिर्हस्तमध्यर्धं द्विहस्तं सार्धवाधिकविस्तारामयुतं जलान्तं वा दृढप्रकृति द्विहस्तं हस्तमेकहस्तं वा खनित्वा तत् खातं चतुर्थांकृत्य द्व्यंशं त्र्यंशं वा वालुकोपलश-कलेष्टकाद्यैर्जलेन सम्पूर्य मुसलैर्हस्तिपादैर्दारुतुण्डैर्महच्छिरैर्वा दृढीकृत्य शेषांशं पादमर्धं त्रिपादं हस्तविमानं वा महति विमानं चेदधिष्ठानाद् द्विगुणमध्यर्धसमं वा खातकुण्डं प्रकल्पयेत् । तस्योर्ध्वे तिष्ठनमुपपीठं कुर्यात् ॥

अथातोऽधिष्ठानादधस्तादुपपीठमुन्नतार्थं वा कल्पयेत् । अधिष्ठा(नं द्विगुण ?)द्विगुणं पादोनद्विगुणमध्यर्धमुत्तमम् । पादाधिकं तत्समं पादहीनं मध्यमम् । पञ्चभागा त्रिभागमर्धपादमधमम् । एवमुपपीठोत्तुङ्गं नवधा हेतुरुत्तमत्रये कपोतासनं कुर्यात् । तत्तुङ्गभागमर्कभागं कृत्वा खुरमेकांशसार्धांशो शतं वंशं षडंशं कन्दामर्धांशं (?) परीकम्पमेकांशं पद्मं सार्धांशमालिङ्गमर्धांशमन्तरितमेकांशं प्रतिमुखमर्धांशं वाजनमेतत् कपोतासनम् । मध्यमत्रयेषु पद्मासनं कुर्यात् । तुङ्गं नवधाकृत्यैकांशमुपानं पद्मकेशामंशमर्धांशं कम्पं त्र्यर्धांशं कण्ठं अर्धांशं कम्पमेकांशं पद्मं सार्धांशं पट्टिकैतत् पद्मासनम् । (य ? अधम ?)यत्रयेषु भद्रासनं कुर्यात् । तत्तुङ्गं सप्तधा विभज्य सार्धांशं पादुकमर्धांशं कम्पं त्र्यंशं कण्ठमर्धांशं कण्ठमर्धांशं कम्पमेकांशं पद्मकण्ठेहमं भक्तिवशेन पादान् नासीं चायुग्मां सङ्ख्यैः संयोजयेत् । तदुत्सेधं त्रिधाकृत्वैकां वा सार्धदण्डं द्विदण्डं वा पादत्रि ुलं पादान्तरं गुहासु सिंहेभव्यालभूतनाटकादीनि कारयेत् । अथवाथ त्रयेषु कल्परहितमार्जवं वेदिकाभद्रं वा युक्तितः कारयेत् । एतेषामधिष्ठानस्योपानबाह्यतस्तदुत्सेधं नवधाकृत्यैकं तदिनभागं तदुपपीठं निर्गमनवविधं भवति । अधिष्ठानस्योपानं तद्बहिः पाददण्डादि त्रिदण्डान्तः पाददण्डे पाददण्डेऽपि द्व्यामुपपीठनिर्गमद्वादशभेदं स्यात् । एतद्बहिरङ्गानां प्रत्येकं तदुत्सेधसमनीयं स्यात् । अथवा पादमर्धं त्रिपाददण्डं वा युक्तितः कुर्यात् । तद्बाह्ये प्रकृतिनिर्गमं यथाबलवशं युक्त्या कारयेत् ॥

अथातोऽधिष्ठानरूपकरणभेदानि पादबन्धं प्रत्यङ्गबन्धं हरिहरहिरण्यगर्भाणां सामान्यरूपकरणं विशेषविधानं च द्वारि तत् प्रकृतितलं निर्गमं स्यात् । पादबन्धं पद्मबन्धं पुष्पबन्धं श्रीप्रियाम्बुजं प्रतिबन्धं प्रतिक्रमं कपोतबन्धं श्रीबन्धमित्यष्टावधिष्ठानानि भवन्ति । तेषां क्रमेण भावान् वक्ष्यामि । तत्राधिष्ठानोत्सेधं त्रयोविंशतिभागं कृत्वा जन्मतलोपरि चैकांशं खुरमष्टांशं जगतीं सप्तांशं त्रिपट्टकुमुदमेकांशं कम्पं द्व्यंशं महापट्टी चैकांशमूर्ध्वपट्टी चैतत् पादबन्धं स्यात् ॥

उत्सेधं त्रिरष्टभागं कृत्वैकांशमुपानं ह्यंशं पद्ममेकांशकम्पं षडंशं जगती पञ्चांशं त्रिपट्टकुमुदमेकांशकम्पं ह्यंशं कण्ठमेककांशपद्मं ह्यंश-कण्ठमेकांशपद्मं ह्यंशं महापट्टी चैकांशकम्पमेतत् पद्मबन्धं स्यात् ॥

उत्सेधं षड्विंशतिभागं कृत्वैकांशं खुरमेकांशं पद्ममेकांशं कम्पं पञ्चांशं जगती चैकांशं पद्ममेकांशं धृकैकांशं पद्मं चतुरंशं वृत्तकुमुदं त्रिपट्टमेवेति केचिदेकांशं पद्ममेकांशं कम्पं ह्यर्धांशं कण्ठमेकांशं कम्प-मेकांशं पद्मं ह्यर्धांशं महापट्टी चैकांशं पद्ममेकांशं कम्पमेतत् पुष्पबन्धं स्यात् ॥

उत्सेधमेकविंशतिभागं कृत्वैकांशं पादुकं पञ्चांशं पद्ममेकांश-दलमेकांशं दलं त्र्यंशं वृत्तमन्तरितं द्व्यंशं प्रतिमुखमेकांशं कुमुदमे-कांशं पद्ममेकांशकम्पं द्व्यंशकण्ठमेकांशं कम्पमेकांशं पद्मं द्व्यंशं महा-पट्टी चैकांशं पद्ममेकांशमूर्ध्वपट्टी चैतच्छ्रीप्रियाम्बुजं स्यात् ॥

उत्सेधमष्टादशांशं कृत्वा दशकांशखुरमेकांशं पद्मं षडंशं जगती पञ्चांशं वृत्तकुमुदमेकांशमालिङ्गमेकांशं ह्यन्तरितं ह्यंशं प्रतिमुखमेकांशं वाजिनमेतत् प्रतिबन्धं स्यात् ॥

उत्सेधमेकोनविंशदंशं कृत्वैकांशं पादुकं सप्तांशं जगती षडंशं वृत्तकुमुदमेकांशमालिङ्गमेकांशमन्तरितं ह्यंशं प्रतिमुखमेकांशे वाजिनं नागवक्रसमं प्रत्यवसानमेतत् प्रतिक्रमं स्यात् ॥

उत्सेधं सप्तविंशतिभागं कृत्वा ह्यंशं पादुकं षडशं पद्ममेकांशं कण्ठमेकांशं (पाव? वाज)नमेतत् कपोतबन्धं स्यात् ॥

उत्सेधं द्वात्रिंशद्भागं विभज्य ह्यंशमुपानमेकांशं क्षुद्रोपानं स-प्तांशं पद्मं दलं त्र्यंशं वृत्तकुमुदत्रिपट्टाः केचिदेकांशं दलमेकांशं दलमे-कांशं कम्पं ह्यंशं कण्ठमेकांशमुपरिदलं त्र्यंशं पद्ममेकांशमालिङ्गमेकांश-मालिङ्गमेकांशमेकांशं कण्ठमेकांशं दलं चतुरंशं वृत्तकुमुदमेकांशं दल-मेकांशं कम्पं त्र्यंशं कण्ठमेकांशं कम्पमेकांशं पद्मं चतुरंशं कपोतमेकां-शमालिङ्गमेकांशमन्तरितं ह्यन्तरितं ह्यंशं प्रतिमुखमेकांशं वाजनमेत-च्छ्रीबन्धं स्यात् । एतेषु नासिकाङ्घ्रीत्युक्त्या संयोजयेत् ॥

उत्सेधं त्रयश्चत्वारिंशदंशं कृत्वा होमोश्चरसांशं तत्समं वेदि-काब्जं रसांशं पादुकमेकांशमष्टांशं जगती सप्तांशं कुमुदं कम्पमेकांशं

कन्धरं त्र्यंशमुपरिकम्पमेकांशं पट्टिका एकांशं कम्पमिति भूमिबन्धं स्यात् ॥

पादबन्धं जन्मादिपञ्चवर्गेषु सत्तदङ्गावसाने द्वारस्थलं सङ्कल्पयेत् । अन्येषु पट्टिकाङ्गेष्वेवं युक्त्या कारयेत् । प्रत्यङ्गेषु प्रवृत्तेरुपरि द्वारस्थलं सङ्कल्पयति । प्रतिच्छेदनं न कुर्याच्चेद् विनाशाय भवति । सर्वेषामङ्गानां प्रवेशनं निर्गममेकदण्डादित्रिदण्डान्तं पाददण्डेन विवृद्ध्या विमानविस्तारबाह्याङ्गनिर्गमं नवविधं स्यात् । एतेष्वष्टप्रमाणेन नोपानविस्तारं त्रिचतुःपञ्चषट्सप्तांशं कृत्वैकैकांशं खुरनिर्गमं शेषं जगतीविस्तारं तत्समं कुमुदं तत्समं बाह्यात् कण्ठप्रवेशं सर्वेषां पट्टिकामम्बुजं कम्पं दीनान्तदुत्सेधं त्रिचतुष्पञ्चषडंशं कृत्वैकांशं निर्गममेवं युक्त्या कारयेत् ॥

अथैकभूमिं वक्ष्ये । अधिष्ठानपादप्रस्तरग्रीवाशिखर ........चेति षड्वर्गयुतमेवैकमथवा चतुर्वर्गयुतं स्याच्छान्तिकोत्सेधषडंशं कृत्वैकांशमधिष्ठानमर्धांशपादतुङ्गशिखरं द्व्यंशमर्धांशस्तूपिकोदयमेव चतुर्वर्गयुतमथवा शिखरक्रियालुपो विमानेन कारयेत् । शान्तिकोत्सेधमष्टभागं कृत्वैकांशमधिष्ठानं तद्द्विगुणं स्तम्भायतं तदुपरि प्रस्तरमेकभागं कण्ठमेकं द्व्यंशं शिखरमेकांशं स्तूपिकोदयं स्यात् ॥

पौष्टिकोत्सेधं नवधा कृत्वा तदेकांशमधिष्ठानं पादार्धाधिकद्व्यंशं पादायामं प्रस्तरं पादार्धोनांशं सपादांशं कण्ठपादोनत्र्यंशं शिखरमेकांशं स्तूपि स्यात् ॥

जयदोत्सेधं दशांशं कृत्वा एकांशमधिष्ठानं द्व्यर्धांशं पादं त्र्यंशमेकांशं प्रस्तरं सार्धांशं कर्णं त्र्यंशं शिखरमेकांशं स्तूपितुङ्गं स्यात् ॥

अथोद्भुतोत्सेधमेकादशांशं कृत्वा पादांशमधिष्ठानं तद्द्विगुणं स्तम्भायतं तदुपरि प्रस्तरमेकांशं सार्धांशं कर्णं त्र्यर्धांशं शिखरं सपादांशं स्तूपिकोदयं स्यात् ॥

सर्वकामितोत्सेधं द्वादशांशं कृत्वा पादांशमधिष्ठानं तद्द्विगुणं स्तम्भायतं सपादार्धांशं प्रस्तरपादार्धांशं कण्ठं तदुपरि प्रस्तरमेकांशं सपादांशं कण्ठं सपादोनत्र्यं शिखरमेकांशं स्तूपिकोदयं स्यात् ॥

अद्भुतोत्सेधेऽप्येवं योजयेदिति केचित् । अथवा शान्तिकपौष्टिकजयदानां क्रमेण सप्तषट्पञ्चभागं कृत्वा तत्तदेकांशं हित्वा समारोपयेदित्येके । विमानविस्तारं त्रिचतुष्पञ्चसप्तनवैकांशभागं कृत्वा यथाक्रमेणैकद्वित्रिचतुष्पञ्चषडंशाश्च गर्भगृहविस्तारं शेषं भित्तिविस्तारं स्यात् । विमानस्य विस्तारं त्रिपादमर्धं वा । मुखमण्डपं तद्द्व्यन्तरत्रयोदशभागं कृत्वायामं सप्तविंशतिभेदास्तृतीयसङ्ख्याभिश्चोत्तममध्यमाधमभेदेनेदं नवधा भवत्युत्तमानाम् । विपुलं विमानविस्तारसमं सान्तरालं तस्य वेशनं द्विदण्डदण्डार्धं पादं वा तदायामं हस्तेन पदमर्धं त्रिपादमेकहस्तादि पञ्चहस्तान्तं सभित्तिकमभित्तिकद्वारजालकं वा कुर्यान्मध्यनीचानामन्तरालं विना पादेनैकदण्डादि दण्डान्तं विवृद्ध्या नवभेदैः प्रवेशं कारयेत् । अन्यत् सर्वेषामन्तरालं विना चैतैः प्रमाणैर्निर्गमं कारयेत् । अथवा मुखमण्डपं कृत्वा तत्प्रमुखे मुखमण्डपप्रमाणेष्वष्टप्रमाणेनायामं कृत्वा तदायामेन पादाधिकमर्धाधिकं त्रिपादाधिकं द्विगुणं द्विगुणार्धं त्रिगुणं विस्तारमथवा विमानात् पादमर्धं त्रिपादं वाधिकविस्तारायामयुतमध्यममण्डपं कुर्यात् । एतान् मध्यभद्रतोरणाद्यैर्युक्तं वा त्रिवर्गाढ्यं कुर्यात् । विमानस्य प्रमुखं विना पार्श्वत्रयेषु मध्यभद्रं विमानविपुलात् त्रिभागैकं चतुर्भागाद् द्विभागं पञ्चभागात् त्रिभागं वा निर्गमदण्डमध्यर्धं द्विदण्डं त्रिदण्डं वा पादं तस्यावसाने कुर्यात् ॥

तोरणानामुत्सेधः स्थलादुपर्युत्तराधस्ताच्चतुश्चतुर्भागाद् द्विभागं त्रिभागाद् द्विभागं पञ्चभागात् त्रिभागं वा तोरणपादोत्सेधमर्धं त्रिपादैकमथवा दण्डेन त्रिचतुष्पञ्चदण्डविस्तारं तस्य पादबाह्यं तत्पादवशेन तदङ्गानि मानयेत् । तोरणान्तरगाढप्रवेशदण्डं त्रिपादमर्धं वा पादं वा तुङ्गशेषात् त्रि....त्सेधमुत्तरान्तं पञ्चवर्गयुतं पार्श्वयेममकस्य मध्ये परमं गाढयुक्तं नानालतापत्रजातिविचित्रितसर्वालङ्कारैर्युक्ता यथाशोभं कारयेत् ॥

विमानस्याधिष्ठानादुपर्युत्तराधस्तात् पादं तुङ्गं तद्रसमुनिवसुनन्दभागं कृत्वा तदेकांशं वेदिकोत्सेधं तत्तुङ्गं चतुर्धा कृत्वार्धांशं कम्पं

द्व्यंशं कण्ठमर्धांशं कम्पमेवं प्रत्यङ्गेषु योजयेत् । अथवा रसांशं कृत्वैकांशं कम्पं त्र्यंशं कण्ठं शेषमुपरिबन्धं स्यात् । पट्टिकाङ्गेषु तुङ्गार्धं गलं शेषं त्रिधा कृत्वा परिबलं पूर्वं कारयेत् । अथवा चतुर्धा कृत्वैकांशेन गलाधस्तात् कम्पं कारयेदिति केचित् ॥

पादोत्सेधं सप्ताष्टनन्दनन्ददशभागैकं कृत्वैकांशं पादविपुलमथवाधिष्ठानोच्चत्रिचतुष्पञ्चभागं कृत्वैकांशं वा विमाननिर्देशहस्तसङ्ख्याङ्गुलिभिर्वा पादविष्कम्भं स्यात् । तच्चतुष्पञ्चषडंशं कृत्वैकांशं हीनं भित्तिपादविपुलं तद्रसमुनिवसुनन्दधा विभज्यैकांशोनमग्रस्तारदतद् (?) दण्डसंज्ञकम् । तेन सर्वाङ्गप्रमाणनिर्णयकरं स्यात् । पादाश्चतुर्विधाश्चतुरश्राष्टाश्रषोडशाश्रवृत्ता इति मिश्रं मिश्रमानं कारयेत् । समं युग्मं श्रेष्ठम् । विषममयुग्मं निषिद्धम् । एकत्रिपञ्चसप्तनन्दभक्तिवशेन संयोजयति पादमूलेऽर्धदण्डेन पद्मं तदुपरिकण्ठेन चतुरश्रं षोडशाश्रं वृत्तं भित्तिपादान्तरभित्तिप्रवेशं पाददण्डं पाददण्डं स्यात् । दारुशिलास्तम्भेषु मूलमध्याग्रेषु चतुरश्रमध्यमेऽष्टाश्रं षोडशाश्रं वृत्तं वा सर्वत्र सर्वैः समन्तान्नयेत् । पद्मोपरि सिंहव्यालनागादीनि कल्पयेदिति केचित् । पादाग्रे पोतिका वीरकाण्डफलकानामेकैकदण्डोत्सेधं त्रिदण्डं वा फलकायाः पादोनकुम्भोच्चं तत्समं पोतिकोत्सेधं वेति केचित् । फलकोत्सेधार्धतादीतुङ्गभ्रुगोस्तुङ्गं तदर्धं पाददण्डं पाताद्यधस्तादेकदण्डेन मालास्थानं धृगवीरकाण्डानां विपुलं पादविपुलमेव पादस्य कण्ठेन पादात् क्रमेण तादी चोर्ध्वभागविस्तारं तत्कण्ठेन क्रमविस्तारं तत्कण्ठेन फल............ । अथपोधिकादीनां लक्षणम् । परे चतुष्पञ्चषड्दण्डायामं चतुर्विंशतिभागं कृत्वा पञ्चांशं पोधिकोत्सेधं तत्समं वीरकाण्डं तत्समं फलकोत्सेधं गलमेकांशं वेदांशं कलशं गलमेकांशं त्र्यंशं तादि तदधस्ताल्लशुनं दण्डं त्रिपादमर्धं वा पद्ममर्धदण्डेन पत्रमर्धदण्डं मुक्तामालार्धं त्रिपादं दण्डं वा कारयेत् । अथवा पादायामं त्रिभागं कृत्वाधो द्व्यंशं नीत्वोर्ध्वभागं पूर्ववदंशं कारयेत् ॥

त्रिचतुष्पञ्चदण्डायामं पोधिकायामं त्रिदण्डं सार्धत्रिदण्डं चतुर्दण्डं वा फलकायामं कारयेत् । द्विदण्डं सपादं सार्धदण्डं वा कलश-

विस्तारं सपादं सार्धदण्डं वा ताट्यग्रविस्तारं कन्धरलशुनाब्जपत्रमालानि पादविस्तारसमं कारयेत् । अथवा पादकर्णेन ताटी तत्कर्णेन ताटी तत्कर्णेन घटविस्तारं तत्कर्णेन फलकां तत्कर्णे पोथिकां कारयेत् । ततोर्ध्वाद्धस्तविस्तारं त्रिभागं चतुर्भागं पञ्चभागं वा कृत्वा एकांशं शिखां कारयेत् । चतुस्त्रिद्व्यङ्गुलं शिखादिकं कारयेत् । तोरणानामुत्सेधं द्वारोदयदशनं वाष्टभागं कृत्वा सप्तषट्पञ्चांशं चरणायामं शेषं झषमानं कारयेत् । त्रिचतुष्पञ्चदण्डं पादबाह्यविस्तारमुत्सेधार्धं विपुलं कारयेत् । करविस्तारं तत्समं पादाधिकं वा पोथिकाविस्तारं नानाचित्रतरङ्गादीनि कारयेत् । फलकोत्सेधं त्रिचतुर्भागं कृत्वैकांशेन वेत्रमधस्तात् पद्मं शेषं युक्त्या कारयेत् । अथवा कुम्भताटीनामुत्सेधं तत्तद्विस्तारात् त्रिभागेन वा कारयेदित्येके ॥

अथ द्वारलक्षणं वक्ष्ये । पदायामं द्वारोत्सेधं तदर्धविस्तारं विस्तारादधिकमानं विमानानिर्देशाङ्गुलेनैकाद्यष्टाङ्गुलान्तं नवधा भवन्ति । अथवा दण्डेन पाददण्डे पादादिकं द्विदण्डान्तमेवं नवविधं स्यात् । हस्तेन पादं सार्धपादमर्धमित्तिविस्तारसमं वा बहलद्वारविपुलं पादोत्सेधं सप्ताष्टनन्ददशभागं कृत्वा षट्सप्ताष्टनवभागं शुद्धद्वारविशेषांशं द्विधा कृत्वैकांशं भुवङ्गमेकांशं पतङ्गमथवा भुवङ्गमानं त्रिभागैकं शेषं पतङ्गमानं स्यात् । तत्समं दक्षिणोत्तरस्तम्भनिर्गमं तद्बहलात् पादाधिकं पादोनद्विगुणं द्विगुणं वा तेषां विपुलं बहलविस्तारं नानापुष्पवल्लिकाः कारयेत् । अथवा तन्महाद्वारं षोडशांशं कृत्वा त्रयोदशांशं शुद्धद्वारोत्सेधं सप्तांशं वा द्वारविस्तारं शेषांशं द्विधा कृत्वैकांशं भुवङ्गमेकांशं पतङ्गं स्यात् । अन्यत् सर्वं पूर्ववत् कारयेत् ॥

कवाटद्वयविस्तारायामं शुद्धद्वारसमं तयोर्बाहुल्यद्वारस्थं बहलोऽर्धं तत्पादाधिकं पादहीनं वा तयोरूर्ध्वाधःशिखायुक्तं शेषं युक्त्यैव कारयेत् । द्वारपट्टिकां शुद्धद्वारसमायामं तस्य विस्तारं द्वारविस्तारादष्टांशैकांशं तस्यार्धं पादं वा बाहल्यं वामकवाटान्वितं नानाचित्रैर्विचित्रितं तदर्धं पार्श्वपट्टिकाग्रन्थित्रयोपेतपञ्चसप्तनवाद्ययुग्मं यष्टिसमायुक्तं कारयेत् । शक्तश्चेत् पट्टिकान् यष्टीश्च लोहजमेव कारयेत् । आयसेन पुष्पमु-



5639

कुलशङ्कुभिरतिदृढं कृत्वायसपट्टैश्चन्द्रार्धैस्तुष्याकारैर्वज्राकारैराम्रमुकुलाकारैः शोभनार्थं रक्षार्थं संयोज्य तयोरूर्ध्वाधस्तान्मध्ये च फलकैर्भुवङ्गपतङ्गयोर्मध्ये द्विवलयं पुलकोपेतं कारयेत् ॥

द्वारषडङ्गानि स्थापनाक्रमं प्रथमं भुवङ्गमुत्तरशीर्षं दक्षिणपादमूर्ध्वाननं द्वितीयं दक्षिणहस्तमुत्तराभिमुखं तृतीयमुत्तरहस्तं दक्षिणाभिमुखं चतुर्थमूर्ध्वपट्टिकाद् दक्षिणशीर्षमुत्तरपादमधोमुखं स्थाप्य पश्चात् पञ्चमं दक्षिणकवाटमुत्तराभिमुखं षष्ठमुत्तरकवाटं दक्षिणाभिमुखं तक्षकेण स्थाप्य पश्चाद्धातृविधातृभुवङ्गपतङ्गपतिरिति वरगान् तत्तन्मन्त्रेणाचार्येण स्थापयेत् । द्वारस्तम्भकवाटवृक्षान् शिरीषपुन्नागनिम्बवकुलार्जुनमधुकासनाद्यैरन्यैः शुभैः पुंवृक्षान् विधिनाहृत्य तद्दारून् द्विधा कृत्वा दक्षिणे दक्षिणस्तम्भं दक्षिणकवाटं च वामांशमुत्तरस्तम्भमुत्तरकवाटं च तस्योर्ध्वभागमूर्ध्वपट्टिकामधरपट्टिकां च कारयेत् । एवमेकवृक्षालाभे चैकजातीयैः शिलास्तम्भं वा कारयेत् । कवाटपृष्ठमभ्यन्तरबन्धनार्थं दारुणा यन्त्रं यन्त्रिकां च कृत्वा बाह्यपार्श्वे चायसेन रक्षाबन्धनपरयन्त्रं यन्त्रिकामायतवलयोपेतमायसेन काञ्चनेन वा नालिकां कृत्वार्पयेत् ॥

प्रस्तरस्य प्रस्तरोत्सेधमेकविंशतिभागं कृत्वा त्र्यंशमुत्तरमेकांशं वाजनं त्र्यंशं पत्तिभिर्वाजनमेकांशं सप्तांशकपोतमालिङ्गान्तरितमेकैकांशं वाजनं स्यादुत्तरे चार्धचतुर्भागैकं वा निर्गमं वलन्तकस्य तत्समं पादोनमर्धं वा कपोतस्य समं त्रिपादमर्धं वा दण्डं सार्धं द्विदण्डं वा निर्गममर्धदण्डेन लम्बनं चेति केचित् । प्रत्यालिङ्गयोर्मानसूत्रसममेवान्तरितं वाजनानामुत्सेधं निर्गमः स्याद् दण्डं सार्धं द्विदण्डं कपोतोत्सेधं वा नासिकायास्तुङ्गतारं त्रिभागैकभागेनावगाढयुतं तुङ्गार्धं वाजना वा शिखोत्सेधं सिंहवक्त्रवत् कारयेत् ॥

अथ ग्रीवस्य तदुत्सेधं चतुष्पञ्चभागं कृत्वैकांशं वेदिकोदयग्रीवरूपवशेन चतुरश्रमष्टाश्रं वृत्तं वा पूर्ववद् वेदिकां कारयेत् । वृत्तग्रीवेऽप्यष्टाश्रं वेति केचित् । कण्ठार्धेषु कोष्ठव्यत्ययनेन मानयित्वा तयोर्मध्यमपट्टं स्यात् । एवं समचतुरष्टाश्रं कर्तव्यम् । गलोदये वेद्यवशे-

पित्वांशं द्वादशभागं कृत्वाष्टांशं ग्रीवतुङ्गं सार्धांशमुत्तमम् । अर्धं वाजनं सार्धांशं हंसवाज(न)मर्धं स्यात् । अथवा षोडशभागं कृत्वाष्टांशं गलोदयं शेषांशैरुत्तरादीनि कुर्यात् । तेषां निर्गमं पूर्ववत् । एतान् शिखरे संयोजयेदिति केचित् । मानसूत्रान् सपट्सप्ताष्टांशैकहीनं वेदिविस्तारं तस्मात् तथैव कर्णविस्तारमथवा तयोर्वेद्युत्सेधमानेन प्रवेशं कारयेत् ॥

अथ शिखरस्य हंसवाजनस्य बहिरर्धदण्डं दण्डं सार्धं द्विदण्डं वा शिखरस्योष्ठविपुलं हंसवाजनस्य षोडशांशैकहीनं मध्यविपुलं हंसवाजनसदृशमुदरविपुलं तथैवेति केचित् । अथवा वेदिविस्तारसदृशमोष्ठविस्तारविपुलं तदष्टांशैकहीनं मध्यविपुलं तच्चतुर्विंशतिभागैकहीनमुदरविशालं स्यात् । तत्पञ्चभागं त्र्यंशं वालिकस्याधः पट्टिकां तत्पञ्चांशाद् युगांशमूर्ध्वपट्टिका तस्मात् तथैव पत्यानारन्तचतुर्भागैकं कर्णिकाकारं शिखरोत्सेधार्धमुदरं तस्मात् कर्णिकान्तं क्रमात् संक्षिप्तं त्र्यङ्गुलं चतुरङ्गुलं वा वलिकमण्डलविस्तारार्धोत्सेधम् अर्धदण्डं त्रिपाददण्डं वा पद्मतुङ्गमर्धदण्डं कर्णिकोत्सेधमथवा पद्मादूर्ध्वं स्तूपिना संयोजयेदिति केचित् । शिखरोत्सेधमष्टभागं कृत्वा चतुष्पञ्चषडंशावसाने मूर्ध्नेष्टकं स्थापयेत् । नासिकाग्रे नासिकाकण्ठे वा कारयेदिति केचित् ॥

नासिकाविधिं वक्ष्ये । शिखरव्यासात् त्रिचतुष्पञ्चभागैकं नासिकाविस्तारं तत्समं त्रिपादं त्रिभागं त्रिभागं वा ग्रीवानासिनिर्गमदण्डं सार्धं द्विदण्डं वा गाढप्रवेशं विस्तारस्य त्रिचतुष्पञ्चभागैकहीनं ग्रीवादुपरि नासिकोत्सेधं त्रिभागैकविस्तारदण्डवेशयुतं गाढशेषं नानाविचित्रितवक्त्रपट्टी तदर्धं त्रिपादं वा शिखोच्चं तत्त्रिभागैकं कण्ठं त्र्यंशेन सिंहवन्मुखं कुर्यात् ॥

अथायादिपरीक्षणम् । उत्सेधहस्तेऽष्टगुणितेऽर्कत्रिघनैरपहृते शेषमायं नक्षत्रं स्यात् । वासे त्रिनवगुणितेऽष्टापहृते शेषं योनिव्ययं भवति । पार्श्वसमस्तयोर्नवगुणहते सप्तत्रिंशदपहृते शेषं वारतिथि ............ यो भवति । एवं विमानगोपुरादिभवनकरणहस्ते मण्डपावरणगृहादीनां

व्यासायामसमूहकरैः प्रतिमादीनामुत्सेधाङ्गुलिभिः रथादीनां व्यास-समूहमात्रैरायादीनि परीक्षयेत् । अतोऽल्पदोषगुणाधिकमपि गृहीतव्यं स्यात् । हस्तच्छेदे पादमर्धं त्रिपादं संयोज्य गणयेत् । तच्छेषं हीना-धिक्यं युक्त्या कुर्यात् । अङ्गुलिच्छेदे यवैर्युक्तं तथैव कारयेत् । अत्रा-नुक्तं शिल्पशास्त्रोक्तविधिना कुर्यात् । पश्चात् सुधावर्णाद्यलङ्कारयेत् । भूतौ व्यालसिंहाद्यैर्भूषयेद् वलभूविद्याधरहंसभूतनाटकादीनि कुर्याद् द्वारेषु द्वारपालान् शिखरे महानास्यन्तरे पूर्वे पुरुषं दक्षिणे सत्यं पश्चिमे-ऽच्युतमुत्तरे वराहं वेति केचित् । दक्षिणायां दिशि द्वारे तत्तन्मूर्ती-द्वारदक्षिणभागे चान्यान् यथाक्रमेण स्थानकमासनं वा कल्पयति । मुखमण्डपदक्षिणबाह्ये विघ्नेशमुत्तरे विन्ध्यवासिनीमाग्नेयादिषु कोणेषु भूतेरुपरि गलस्थाने वाहनवाहनागारं भृङ्गेशं वान्यस्मिन् सर्वत्र देवस्य विजयक्रीडनाद्यैरेव कारयेत् ॥

अथातो द्वितलविधिं वक्ष्ये । तद्व्यायामं नवधा विभज्य त्र्यंश-गर्भविस्तार उपरि गृहपिण्डमलीन्द्रहाराश्चैकैकांशे समावृता भवन्ति । बाह्यभित्तिमष्टधा विभज्य तदेकांशं कूटतारं मध्ये द्व्यंशशाला तयोर्मध्ये चैकमंशं पञ्जरविशा........शेषार्धांशैर्हारान्तरं कारयेत् । अथवा मान-सूत्राद् बहिः कूटकोष्ठपञ्जराणां निर्गमं पादमर्धं त्रिपादं दण्डदण्डार्ध-द्विदण्डं वाप्येवं समसूत्रं चेत् कूटाद् बहिस्तथैव कोष्ठनिर्गमं कारयेत् । अलीन्द्रं वालुकैरापूर्य (घन)मेव सावकाशं सञ्छादितं वा परिकल्पयेत् । ऊर्ध्वेऽलीन्द्रं त्यक्त्वाभ्यन्तरभित्तीरुपरि भूमिं कारयेत् । उत्सेधमेकोन-विंशदंशं कृत्वाधिष्ठानद्व्यंशं चतुरंशं पादपादोनद्व्यंशं प्रस्तरं त्र्यर्धांश-वेदिकैकांशं कण्ठं सवासपादाद्यग्न्यंशं शिखरं पादोनद्व्यंशं स्तूपिकेत्येवं शान्तिकपौष्टिकाद्युत्सेधानां पूर्वोक्तांशेषु पञ्चांशं संयोज्य पादयोः शि-रसि चैकैकांशं स्तूपीं विनान्येष्वर्धांशं संयोज्य विभजेत् । एवं सर्वं ह्येवं कुर्यादुपरितलपादोत्सेधमष्टधा विभज्यैकांशं वेदिकोदयं द्व्यर्धांशं कण्ठं त्र्यंशं शिखरं सार्धांशं स्तूपिकेत्यन्तरप्रस्तरं चेदेकादशभागं विभ-ज्यैकांशवेदिकोदयं त्र्यंशं पादं सार्धांशं मञ्चमर्धांशं वेदिं सपादांशं कण्ठं पादोनत्र्यंशं शिखरमेकांशं स्तूपी चेत्येव सर्वत्र कूटकोष्ठादीनि कारयेत् । प्रवेशनिर्गमं दण्डेन यथाशोभं यथाबलवशान्नयति । मुखम-ण्डपदक्षिणवामयोरूर्ध्वाधिरोहणार्थसोपानं च युक्त्या कारयेत् ॥

अथातो त्रितलविधिं वक्ष्ये । व्यायामं त्रयोदशभागं कृत्वा त्र्यंशं गर्भगृहं परितो गृहपिण्ड्यलीन्द्रभागस्तद्बहिश्चालीन्द्रहारौ, सङ्कल्प्याभ्यन्तरालीन्द्रं वालुकैरापूर्य घनमेव कृत्वा बाह्यालीन्द्रं सावकाशं च सञ्छादितं कारयेत् । बाह्यभित्तौ परितः कूटशालादीनि पूर्ववत् कृत्वालीन्द्रं त्यक्त्वा तदभ्यन्तरभित्तौ मध्यतलं सालीन्द्रं सञ्छादितं तस्मिंश्च कूटशालादीनि पूर्ववत् कुर्यात् । अलीन्द्रं त्यक्त्वा गृहपिण्डादुपरि भूमिं कारयेत् । मुखमण्डपं शय्यासोपानं युक्त्या सङ्कल्पयतीति । उत्सेधं चतुर्विंशतिभागं कृत्वाधिष्ठानं द्व्यंशपादं चतुरंशं प्रस्तरं पादोनद्व्यंशं पादं पादोनचतुरंशं मञ्चं पादं त्र्यर्धांशं वेदिं सार्धांशं कण्ठं त्र्यंशं शिखरं सपादांशं स्तूपिकेत्येवं शान्तिकपौष्टिकाद्युत्सेधानां पूर्वोक्तांशेषु सप्तांशं संयोज्य पादेषु शिरसि चैकैकांशमन्येष्वर्धांशं संयोज्य युक्त्या सर्वत्राप्येवं कारयेत् । एतेषां विन्यासविशेषं मूर्तिभेदं चोत्तरे वक्ष्यामः ॥

चतुस्तलं वक्ष्ये । व्यायामं सप्तदशभागं कृत्वा त्र्यंशं गर्भगृहं तत्परितश्चैकैकांशैर्गृहपिण्ड्यलीन्द्रहारादयः कल्पयति । तत्तलावसाने कूटाद्यैस्तत्तद्भित्तिं समापयेदधस्तलं सर्वत्र घनमेव कृत्वा तस्योर्ध्वे परितोऽलीन्द्रं त्यक्त्वा तदभ्यन्तरेऽलीन्द्रत्रयेषु प्रागादिचतुर्दिक्षु मुखमण्डपसंयुक्तं गर्भगृहं सङ्कल्प्य पुरुषान् संस्थापयेत् । आग्नेयादिषु कोणेषु प्राङ्मुखपश्चिमामुखं तथैव कृत्वा कपिलादीन् संस्थापयेत् । तदूर्ध्वे परितोऽलीन्द्रं त्यक्त्वा मध्ये विष्णुमूर्तेर्गर्भागारं मुखमण्डपयुक्तं दक्षिणे नारायणनारसिंहानां गर्भागारं कृत्वोर्ध्वे परितोऽलीन्द्रं त्यक्त्वा मध्ये प्राङ्मुखं शयनस्य गर्भागारं मुखमण्डपं च कृत्वा परितस्तलं प्रति शय्यासोपानं प्रादक्षिण्यवशेन युक्तितः कुर्यात् । उत्सेधं पञ्चत्रिंशदंशं कृत्वाधिष्ठानं त्र्यंशं प्रस्तरं पञ्चांशं मञ्चं चतुरंशं चरणं सार्धांशं कपोतं त्र्यंशमङ्घ्रयुच्चं पादांशं मञ्चमर्धांशं वेदिकैकांशं ग्रीवं त्र्यर्धांशं शिखरं पादोनद्व्यंशं स्तूपिकेत्येतच्छान्तिकपौष्टिकाद्युत्सेधानां पूर्वोक्तांशेष्वष्टांशं संयोज्य पादेषु शिरसि चैकैकांशं स्तूपिं विनान्येष्वर्धांशं संयोज्यैवमूह्यैव कुर्यात् । शिखरे पादांशं हित्वा स्तूपीनां सह संयोजयेदित्येके ॥

अथातः पञ्चतलं वक्ष्ये । पूर्वोक्तांशेषु तारे चतुरंशं संयोज्य परितोऽलीन्द्रहारौ सङ्कल्प्याधस्तलं घनमेव कृत्वोपरितलेषु अष्टदिक्षु गर्भगृहं सङ्कल्प्य प्रागादि(षु) नृसिंहादीन् संस्थापयेत् कल्पयेत् । तस्योपरि चतुस्तलोक्तप्रकारैरेव कुर्यात् । उत्सेधेषु, पूर्वोक्तांशेषु षोडशांशं संयोज्याधस्तलस्याधिष्ठानं चतुरंशमष्टांशं स्तम्भं चतुरंशं प्रस्तरमेतदेव विशेषोऽन्यत् सर्वं पूर्ववत् । तस्मिन् (शान्तिक)पौष्टिकाद्युत्सेधानामधस्तलस्य पादे चैकांशमन्ययोश्चैकांशं पूर्वोक्तांशेषु योजयित्वा सर्वमूह्यैव कुर्यात् । एवं षट्तलादिद्वादशतलान्तं तारे चतुरंशं तुङ्गे कलांशं संयोज्योत्सेधभेदार्थं द्व्यंशाधिकविभक्तेनैव तलं प्रति युक्त्या संयोज्य कुर्यात् । सर्वेषां तलानामधस्तलं घनं कृत्वा षट्तलस्य द्वितीयतलस्य द्वितीयतले प्राच्यां मध्ये पञ्च वीरान् दक्षिणे राघवमुत्तरे कृष्णं च दक्षिणमध्ये नृसिंहं तत्पूर्वे वामनं पश्चिमे त्रिविक्रमं पश्चिमे मध्ये वाराहं दक्षिणे परशुराममुत्तरे बलभद्रं चोत्तरे मध्ये कल्किणं तत्पश्चिमे कूर्मरूपं पूर्वे मत्स्यात्मकं च प्राङ्मुखान् दक्षिणे पश्चिमादिगर्भगृहे संस्थापयेत् । तदुपरि पञ्चतलोक्तवत् ॥

सप्ततलस्य द्वितीयतले देवस्य विजयक्रीडारूपाणि प्रागादिदिक्षु विदिक्ष्वन्तरालेषु पूर्ववद् गर्भगृहं कृत्वा स्थापयेत् । अष्टतलस्य द्वितीयतले प्राच्यां दक्षिणाद्युत्तरान्तं सनकं सुभद्रं मित्रं सनातनं च प्राङ्मुखान् दक्षिणपश्चिमादिप्रागन्तां सुखावहं ह्यात्मकं त्रिसर्वं च दक्षिणामुखान् पश्चिमे दक्षिणाद्युत्तरान्तं सनातनं रामदेवीशिवसनत्कुमारं च पश्चिमामुखानुत्तरे संवहं पुण्यं विश्वं सुवहं चोत्तरामुखान् गर्भगृहं कृत्वा संस्थापयेत् । अन्यत् सर्वं पूर्ववत् ॥

नवतलस्य द्वितीयतले प्रागादिदिक्पालदेवानादित्यान् वसून् रुद्रान् मरुतोऽश्विनौ सप्तऋषीन् सप्तरोहिण्यो मातृगणानपि सर्वं पूर्ववत् सर्वस्मिन् यथेष्टस्थाने गृहान् कृत्वा सर्वान् देवान् सङ्कल्पयेत् । दशतलाद्येकतलान्ततलं प्रति यथाक्रमेण पितामहं महाविष्णुं रुक्माभं सदाविष्णुं स्फटिकाभं नारायणं चतुर्भुजमथवा द्वितलादिद्वादशतलान्तं क्रमेण विस्तारत्रिभागादित्रयोदशभागान्तं क्रमेण विस्तारं विभज्यैकांशं गर्भगृहं शेषांशैर्गृहपिण्डालीन्द्रहारादयः कूटशालाद्यैः

शय्यासोपानसंयुक्तं वेणुरन्ध्रवद् गर्भोपरि गर्भगृहं मुखमण्डपं च परिकल्प्यादितलं घनमेव कृत्वोपरितलत्रयेषु महाविष्णुं नारायणमन्येष्वधस्तात् स्थानकासनशयनभेदेन विष्णुमूर्तिं सर्वां स्थापयेत् । अष्टतलादूर्ध्वं मूर्तिस्थापनां नाचरेदित्येके । सर्वस्मिन् विमाने विस्तारात् त्रिभागैकभागविशालमेकदण्डान्त्यकदण्डान्तं द्वादशभेदैर्निर्गमयुतमध्यपत्रं कुर्यात् । महति विमानं चरेत् । भद्रेऽपि पार्श्वयोः कल्पयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानतलविधिर्नाम

षष्ठः पटलः ॥

## अथ सप्तमः पटलः ।

अथातः प्राकारलक्षणं वक्ष्ये । रक्षार्थं मङ्गलार्थं तत् प्रासादार्धं त्रिपादं समं पादाधिकमर्धाधिकं वा प्रथमावरणम् । तत् सपादाधिकमर्धाधिकं पादोनद्विगुणं त्रिगुणं चतुर्गुणं पञ्चगुणं वा द्वितीयावरणम् । तस्योक्तप्रमाणे पष्टिप्रमाणेन तृतीयावरणादि सप्तप्राकारान्तं कारयेत् । प्राकारस्य परितश्चतुरश्रीकृत्य तत् पादाधिकमर्धाधिकं त्रिपादाधिकं द्विगुणं द्विगुणार्धं त्रिगुणं त्रिगुणार्धं चतुर्गुणं वा मुखायामः । प्रथमावरणस्य तत्परितश्चतुरश्रीकृत्यैवमेव द्वितीयावरणादिसर्वप्राकाराणां प्रासादस्य परितश्चतुरश्रीकृत्यैवं मुखायामं योजयेदिति केचित् । हस्तानां त्रिधा प्रोक्तमधममध्यमोत्तममिति यथाक्रमेण त्रिहस्तं पञ्चहस्तं सप्तहस्तमथ त्रयो नवैकादश त्रयोदश मध्यमत्रये पञ्चदशसप्तदशैकोनविंशद्धस्तमुत्तमत्रयमेव सप्तप्राकारान्तं कारयेत् । तेषां मुखायामः पूर्ववदास्थानाङ्कणप्रमुखे दक्षिणे पश्चिमे चोत्तरे वा विस्तीर्णदेशे तत्तद्दिशि चोद्य प्राकारसममायामस्तत्समं त्रिपादमर्धं वा विस्तारमङ्कणं कृत्वा तस्मिन्नास्थानमण्डपं कारयेत् । अथवालयाभिमुखे परितश्चोत्तरे वा बहूदकं सुविस्तारं तटाकं कृत्वा तत्परितः शिलयेष्टकया वा तीरं कारयेदिति केचित् । एकप्राकारमधमम्, द्विप्राकारं मध्यमम्, त्रिप्राकारमुत्तमम् । त्रिप्राकारं मध्यमाधमम्, चतुष्प्राकारं मध्य-

ममध्यमम्, पञ्चप्राकारं मध्यमोत्तमम्। पञ्चप्राकारं मध्यमाधमम्। षट्प्राकारमुत्तमोत्तमं स्यात्। प्राकाराणां विष्कम्भं हस्तपादाधिकमर्धाधिकं त्रिपादाधिकं द्विहस्तं वा'। तत्र चतुष्पञ्चषट्सप्ताष्टनवगुणं वा भित्त्युत्सेधं विस्तारादष्टांशोनमग्रविपुलं प्रासादस्य पादद्वयप्रागुपानाद् वा प्राकारभित्त्यन्तरमुत्तमं भित्तिमध्यमम्। भित्तिरुत्तमम्। तेषां प्राङ्मुखे द्वारं गोपुरं वा कृत्वाधस्ताद् द्वारि मार्गं वा प्राच्यामुदीच्यां वा दक्षिणोत्तरपश्चिमेषु क्षुद्रद्वारं युक्तितः कारयेत्। एतेषां बहिरावरणेऽप्येवं द्वारं गोपुरं च कुर्यात्। प्रथमावरणं विनाऽन्येषां प्राकाराणामेकद्वित्रिभित्तियुतमालिकां कारयेत्। प्रथमावरणमुखायामं सकलं सञ्चारयेदिति केचित्। विमानस्य चतुर्दिक्षु मध्यमस्तम्भं विवर्ज्य तन्मध्यभित्तिविष्कम्भं किञ्चिद् व्यक्तं सर्वतः समं वा कृत्वा प्राकारस्य भित्तिविष्कम्भं विधिना कृत्वावशेषितांश्चतुर्धा कृत्वा एकांशं प्रासादस्य परितः शय्यादेशं भक्त्यैव सञ्चरेत्। तद् द्वित्रिभूमियुतं भित्तेरुपरि भित्तिं पादोपरि पादं कारयेत्। पादोपरि भित्तिमिष्टकोपरि शिलाभित्तिं न शिलयाथेष्टकया वा कृतमण्डपं शिलया दारुणा वाच्छादयेत्। प्रासादपादुकादुत्तरान्तं सप्तधा कृत्वा द्विभागं तस्याधिष्ठानं पञ्चभागं पादोदयं नवधाकृत्य द्विभागमधिष्ठानं सप्तांशं पादायाममानाङ्गुलेन षष्ट्यङ्गुलादूर्ध्वं षडङ्गुलविवृद्ध्याष्टोत्तरशताङ्गुलान्तं स्तम्भोच्चं नवधा भवति। तत्पादविष्कम्भं सप्ताङ्गुलं समारभ्यैकाङ्गुलविवृद्ध्या पञ्चदशाङ्गुलान्तं नवधा पादविष्कम्भं सार्धं द्विहस्तार्धं पादं पादं वर्धयेत्। सार्धचतुष्कम्भकान्तिन्नवधा (?) भक्तिमानं भक्तिपार्श्वेऽपि भित्त्यर्धान्वितमेव कारयेदुत्तराणि परितः प्राक्पश्चिमयोरुत्तराग्रं दक्षिणोत्तरयोः प्रागग्रं संयोज्य तस्योपरि तुलादीन् संन्यसेत्। एवमेव शैलजलास्तरमूर्ध्वे लुपाभित्तिं संछादयेदिति केचित्। सशिलास्तम्भोपरि दारुस्तम्भं प्रयोक्तव्यम्। दारुपादोपरि शिलास्तम्भं न योजयेत्। अथवा तन्मुखायामं युग्मभित्तिसमायुक्तं द्वारदिगन्तरोत्तराणि संन्यस्य तस्योपरि प्रागन्तमुत्तरान्तं च चतुस्तलादीनास्तरेद् द्वारशोभादिभेदेष्वेकमार्गेण गोपुरं कारयेत्। अथवाधिष्ठानान्ते द्वारं हित्वा तद्द्वारबाह्ये चोभयोः पार्श्वयोस्तस्मिन्नभ्यन्तरभक्तिवशादेकभक्तियुतं सोपानं वा

कारयेत् । हस्तस्तम्भं तुलादीन् युग्मायुग्मं च संयोजयेत् । अत्रानुक्तं सर्वं शिल्पशास्त्रोक्तमार्गेण कुर्यात् ॥

अथोर्ध्वगोपुराणां लक्षणं वक्ष्ये । द्वारशोभाद्वारशालाद्वारप्रासादद्वारहर्म्यद्वारगोपुरमिति पञ्चधा भवन्ति । तेषां क्रमेण विस्तारो वक्ष्यते । मूलप्रासादद्वित्रिचतुष्पञ्चषडंशं कृत्वा, एकांशेनद्वारशोभादीनामाभासानां विशालं स्यात् । सप्ताष्टनवदशैकादशभागं कृत्वा, एकांशेनं विकल्पनां चतुष्पञ्चषट्सप्ताष्टांशं कृत्वैकांशं व्यपोह्य शेषांशैर्मध्यमानां त्रिभागैकमर्धं त्रिभागाद् द्विभागं चतुष्पञ्चांशयोरेकोनमिति द्वारशोभादीनामुत्तमानां विशालं स्यात् । अथवा हस्तमानद्विहस्तादिद्विरष्टान्तमेकहस्तेन विवृद्ध्या द्वारशोभादीनामेकैकं त्रित्रिभेदेन क्षुद्राणां त्रिपञ्चभेदाः स्युः । अन्यं त्रिहस्तान्त्रेकत्रिंशत्करान्तं द्विद्विहस्तं विवृद्ध्या द्वारशोभादीनामल्पानां त्रिपञ्च भेदाः स्युः । नवहस्तादि सप्तत्रिंशत्करान्तं द्विद्विहस्तविवृद्ध्या मध्यमानां विशालं पञ्चपङ्क्तिभेदा स्युः । अथोत्तमानां विशालं पञ्चहस्तादि त्रयोदशहस्तान्तं द्विद्विहस्तविवृद्ध्या द्वारशोभाविशालं पञ्चविधं भवति । पञ्चदशहस्तादि त्रयोविंशद्धस्तान्तं द्विद्विहस्तविवृद्ध्या द्वारशालविशालं स्यात् । पञ्चविंशद्धस्तादि त्रयस्त्रिंशद्धस्तान्तं द्वारप्रासादस्य । पञ्चत्रिंशत्करादि चत्वारिंशद्धस्तान्तं द्वारहर्म्यस्य । नवपञ्चकरादि त्रिपञ्चाशत्करान्तं द्वारगोपुरव्यासमित्येव पञ्चानां व्यासं पञ्चविंशतिभेदमवसीयते । तेषामुदितविशालस्य पादमर्धाद् त्रिभागं द्विभागात् पादोनद्विगुणं द्विगुणं वायामं पञ्चविधं स्यात् । उत्सेधविन्यासगण्यालङ्कारादीनि सर्वाणि मूलप्रासादस्योक्तमार्गेण एकतलाद्यर्कतलान्तमूह्यैव गोपुराणि कारयेत् । अधिष्ठानपादबन्धमेव सञ्चारविस्तारं सार्धहस्तं सत्रिपादद्विहस्तं द्विहस्तार्धं पादोनत्रिहस्तं त्रिहस्तम् इति सप्तधा भवन्ति । तत्तद्द्विगुणमुत्सेधः स्यात् । अथवा मूलभूमेरधिष्ठाङ्घ्रितुल्यद्वारतुङ्गतदर्धविस्तारमथवा तद्विस्तारत्र्यङ्गुलाद्येकविंशदङ्गुलान्तं द्व्यङ्गुलविवृद्ध्या संयोज्यैवं द्वारविस्तारं दशधा भवति । गोपुराणां निर्गमविस्तारार्धं त्रिभागैकं पञ्चभागं प्राकारभित्तिबाह्यतः कुर्यात् । अन्यत् सर्वं मूलप्रासादस्योक्तविधिना कारयेत् ॥

अथ परिवाराणामालयं गर्भन्यासममं पादहीनमर्धं वा त्रिहस्तं पञ्चहस्तं वा मुखमण्डपसहितं कृत्वा परिवाराणां ध्रुवकौतुकसंयुक्तमुत्तमं कौतुकं विना तत्स्थाने पीठं कृत्वार्चये(त्) । मध्यममालयं ध्रुवकौतुकं विना यथोक्ते देशे शैलजमैष्टं वा मानाङ्गुलेन वा द्वादशाङ्गुलोत्सेधानि द्विगुणायतविस्तृतानि भागोन्नतविस्तरौ परितस्त्रिवेदिसहितानि पीठानि कृत्वा यथा चैकवेदिकं यथालाभप्रमाणेन पीठं कारयेदिति केचित् । एतदधममार्गार्चनं स्यात् । अन्यथा महत्तरो दोषो भवेत् । परिवाराणामालयमण्डपं कूटं वा प्राकाराश्रयमेव कर्तव्यम् । पीठं चेदालयाश्रयमेव कारयेदित्येके ॥

अथालयाभिमुखे महामण्डपं मूलायसमध्यर्धं द्विगुणं द्विगुणार्धं त्रिगुणं त्रिगुणार्धं चतुर्गुणमिति विस्तारं सप्तधा भवति । समचतुरश्रमायतचतुरश्रं वा युग्मपादायुग्मपङ्क्तिकं मूलालयस्यादिभूमिप्रमाणेनाधिष्ठानपादप्रस्तरं च कृत्वाच्छाद्य मध्ये मध्ये सभां युक्त्या कल्पयेत् । तत्तत्प्रमुखे तथैव नृत्तमण्डपमाग्नेयादिकोणेषु तथैवास्थानमण्डपं कारयेत् । प्रथमावरणे द्वितीये वा मालिकाविहीने यत्र तत्रालयाभिमुखे मुखमण्डपपूर्वं सोपानपूर्वं वा कृत्वा द्वितीयावरणे त्रयं निर्ऋतिवरुणवायुकुबेरेशानां च दक्षिणे श्रियं वामे हरिणीं च क्रमाच्च स्थाने प्रागादि सुभद्रससर्वभयात्मकसुखावहरामदेवसंवहपुण्डदेवसुवहाश्च द्वितीयावरणे मित्रसनातनादिसनन्तनशिवसनत्कुमारविश्वसनकास्तृतीयावरणे इन्द्रादि (द)क्षिणे भित्तिपार्श्वे पितामहपुण्यौ वामे गङ्गाधरपद्मापितरौ द्वाराङ्गानि षड् विधातृभुवङ्गपतङ्गपतिरावणान्त्ययक्षादिविमानपालाः शिखराग्रेषु स्तूपिवर्गाधस्तात् प्रागादिचतुर्दिक्षु बहिर्मुखानां तद्धस्तादधिष्ठानवर्गस्य परितः प्रागादीन् यक्षविवस्वन्तक्षत्ताराणां पीठं सङ्कल्प्यार्चयेत् । द्वारपालाश्च मणिकं सन्ध्यभ्यन्तरद्वारे विखनसतापसौ प्रथमावरणादिसप्तप्राकारद्वारेषु क्षतिष्विण्डतीर्थौ विघ्नेशनागेशौ शङ्खपद्मौ तुभणबलिन्दौ नन्दकशार्ङ्गौ चक्रशङ्खचूलिनौ चण्डप्रचण्डावित्येतेऽष्टादश द्वाराधिपान् समर्चयेत् । सोमेशानयोरन्तरे विष्वक्सेनः प्रथमावरणाद्यङ्कणे चतुर्भागात् त्रिभागे श्रीभूतगरुडचक्रध्वजशङ्खयूथाधिपाश्चभान्ताश्चैतेऽनपायिनश्च तथा तत्सूत्रे संयोज्यैवार्च-

येदिति केचित् । प्रथमावरणे द्वितीये वा प्रागादीशानान्तमिन्द्रादीन् प्राग्द्वारादिद्वारदक्षिणपार्श्वे कोणेषु प्राग्द्वारादुत्तरे भास्करमिन्द्रादि दक्षिणाद्यन्तराले च चन्द्राङ्गारबुधबृहस्पतिकाव्यमन्दराहुकेतूंश्चैतान् ग्रहान्, तृतीयावरणे गङ्गायमुनानर्मदासिन्धूः प्रागादिचतुर्दिक्षु तत्तद्द्वारदक्षिणपार्श्वे पूर्वद्वारोत्तरोत्तरे दुर्गामाग्नेयादिकोणेषु ससन्धि श्रियं श्रेष्ठां धात्रीं चान्तराले सुरासुरसुन्दरीस्वाहास्वधामायासंह्लादिनीराकासिनीवालीत्येताः पचनालये हविरक्षकं पुष्पमण्डपे पुष्पपारकं वारिचश्चयं च पार्श्वे पूरुषं प्लोतवस्त्रोत्तरीयादिसद्द्रव्यसञ्चयपार्श्वे त्वष्टा शय्यास्थाने कौमोदकी हविर्द्रव्यासिसञ्चयस्थाने सर्वेश्वरं होमस्थाने बलिरक्षितमर्चयेत् । चतुर्थावरणे पूर्वद्वारोत्तरे गविष्ठं दक्षिणे पृथिवीं पश्चिमे श्रीदेवीं दक्षिणेऽग्निमुत्तरे वायुं चाग्नेयादिकोणेषु ऋग्यजुःसामं चान्तराले शिवं विष्णुं तक्षकं शुभभूतनायकं पवित्रं पावनं क्षितिजं च पञ्चमावरणे पूर्वद्वारोत्तरे दक्षिणे चक्रभूरनुमतिदक्षिणे ब्रह्माण्या(द्याः)ः सप्त मातृः पश्चिमे जयाद्यष्टाप्सर(स)श्चोत्तरे काठिन्यादिसप्तरोहिण्यश्चाग्नेयादिकोणेषु वत्सरा(दी)न् प्राणादीन् मरुतः शतरुद्रानन्तराले चैशानेन्द्रयोरन्तरे अजैकपादेकादशरुद्रादीनिन्द्राग्न्योरन्तरे गन्धर्वान् यमनीलयोर्मध्ये मुनीन्(नीलयोर्मध्ये मुनीन् ?) नीलवारुणयोर्मध्ये मृतजान्वरुणोदानयोर्मध्येऽश्विनौ सोमोदानयोरन्तरे वसवश्चाष्टौ सोमेशानयोर्मध्ये विद्याधराश्चाष्ट प्राकारे प्राग्द्वारादुत्तरे तुम्बुरुं तद्द्वारदक्षिणे ऋतून् पश्चिमे प्रजापतिमुत्तरे मुद्गलमाग्नेय्यां हलेशं नैर्ऋत्यावेक्षं वायव्यां जाम्बवमैशान्यां वसुमन्तराले प्राच्यामुत्तरे मकरकिंनरमिथुनौ दक्षिणे प्रह्लादं दक्षिणे कामं (पि ? प्र)पां च पश्चिमे (ह)व्यमाग्नेय्यां पचनागारं विमानसमं पादाधिकमर्धाधिकं पादोनद्विगुणं द्विगुणं द्विगुणार्धं त्रिगुणमिति विस्तारं सप्तधा भवति। विस्तारात् पादाधिकमर्धाधिकं वायामं चतुरश्रं च शालोपेतं मध्ये कूटं तद्बहिर्दक्षिणतो वा मूलधाम पादुकान्तोत्सेधं चतुर्धा कृत्वैकांशमधिष्ठानं सोपपीठं वा द्व्यंशं पादावर्गमेकांशं प्रस्तरं तत्प्राकाराभ्यन्तरं प्राकारमध्यमं प्राकारबाह्यभित्तिविष्कम्भं हस्तमात्रं पादहीनं पादाधिकं वा मण्डपाकारं लुपायुक्तं वा कारयेत् । द्वारदक्षिणे पूर्ववत् प्रथमेष्टकाः शिलाः स्थाप्य तत्रैवान्ते स्थापयेत् । सुधाकर्म कृत्वाभ्यन्तरे प्राच्यां

दक्षिणाद्युत्तरान्तं चुल्लीयुग्मायुग्मसङ्ख्यान्तरदक्षिणशालामध्ये सोपानद्वारमुत्तरतो हविर्द्रव्योपदंशादिसञ्चयस्थानमधस्ताद् दक्षिणतः प्राच्यां वा वारिमार्गं कारयेत् । प्रथमावरणे द्वितीये वा दक्षिणे होमस्थानं कारयेदिति केचित् । यागशाला द्वितीयावरणे प्रदक्षिणे चाग्नेय्यां पञ्चसप्तनवहस्तायतविस्तारं चतुर्द्वारयुतं मण्डपं कूटं वा कुड्यस्य बाह्यं तु । अथ भक्तिपादकं तत्पादस्य बाह्यमिति युक्तम् अभ्यन्तरं कुड्यस्य अभ्यमथ पादयुक्तिकं सूत्रस्य । एवं मतिमान् पुरातनैः । अभ्यस्य भक्तिबहुयुक्तिशोभितं मात्रायतारचतुरं तु कर्णकम् । कर्णेषु पादमथ कण्टकं क्रमात् पादस्य युक्तमथपादनाहकम् । कृत्वात्रानुक्तं शिल्पशास्त्रोक्तविमानं कारयेत् ॥

अथ परिवारविधानम् । मुखमण्डपे सोपानमध्ये श्रीभूतं प्रथमावरणादीन् यथाक्रमेण तत्तदग्रायामं चतुर्धा सर्वत्रापि तृतीयांशे श्रीभूतगरुडचक्रध्वजशङ्खमहाभूताक्षहान्तानां क्रमेण परिकल्पयेत् । अथवा द्वितीयावरणे द्वितीयांशे शङ्खं तृतीयांशे चक्रं ध्वजं च चतुर्थावरणे तृतीयावरणे यूथाधिपं पञ्चमावरणे तृतीयांशे चाक्षहमथवा गोपुराद् बाह्ये प्रासादस्यार्धायामं नीत्वा तत्रैवा स्याक्षहान्तस्य पीठं परिकल्पयेत् । अथवा सर्वत्र प्रथमावरणाद्यङ्कणस्याग्रविस्तारं चतुर्धा कृत्वा तद्विमानपार्श्वादिद्वितीयांशे गरुडं तृतीयांशे बलिपीठं च विधिना कल्पयेदित्येके । एकप्रकारमधमं द्विप्रकारं मध्यमं त्रिप्रकारमुत्तमं त्रिप्रकारमधमं चतुष्प्रकारं मध्यमं पञ्चप्रकारमुत्तमं पञ्चप्रकारमधमं षट्प्रकारं मध्यमं सप्तप्रकारमुत्तमं परिवाराणामालयं पचनालयपुष्पसञ्चयस्नानोदकपानीयस्थानं नृत्तमण्डपं च मूलालयप्रेक्षस्नपनमण्डपास्थानमण्डपं प्राकारगोपुरं चेद् बहिर्मुखं तद्धर्मेनगर्भगृहमभ्यन्तरमुखं ज्ञात्वैवमारभेत् । प्राग्द्वारे देवतागारे प्रथमावरणे द्वितीये आदित्येशानयोरभ्यन्तरे स्नानोदकपानीयवारिपुष्पसञ्चयस्नानप्लोतवस्त्रोत्तरीयगन्धताम्बूलाभ्यर्चनाद्रव्याणां सञ्चयस्थानमैन्द्राग्नेययोर्मध्ये शय्यादेशहविर्द्रव्यसञ्चयस्थानं महानसं च दक्षिणे द्वारे सोमेशानयोर्मध्ये स्नानोदकादिद्रव्यसञ्चयस्थानं सोमेशानयोर्मध्ये सूर्यास्थानं च सर्वत्रापि महानसमाग्नेये चैव कारयेत् ॥

पर्षदानां स्थानं वक्ष्ये । गर्भगृहे ध्रुवबेरस्य पादयोर्मध्ये विष्णुस्तस्य परितः प्रागाद्यैशानान्तं पुरुषकपिलसत्ययज्ञाच्युतनारायणानिरुद्धपुण्यश्च द्वितीयावरणे वाराहसुभद्रनारसिंहशिवात्मकवामनः सर्वोद्वहेति त्रिविक्रमसर्वविद्येश्वराश्च तृतीयावरणे इन्द्रादियाजनिकामिनीं चोत्तरे चन्द्रभां सुन्दरं च सप्तप्रकारे पूर्वद्वारोत्तरे ब्रह्माणं दक्षिणेऽर्यमणं दक्षिणे दण्डधरं पश्चिमे पाशभृतम् उत्तरे धनदमाग्नेयादिकोणेषु सवितृसावित्रेन्द्राजौ रुद्रं रुद्राजापवत्सौ चान्तराले प्रागादिचतुर्दिक्षु ईशादिपदं देवतान् क्रमेण कारयेत् । अत्रानुक्तान् सर्वान् ब्राह्मपीमहतीं कृत्वा सर्वान् देवानिति सङ्कल्प्यार्चयेत् । एतेषामनुक्तं सर्वं भृगूक्तविधिना कारयेत् ॥

यूथेशस्य पीठे यथोक्ते देशे गर्भागारविस्तृताद् द्वारोत्तुङ्गाद् वा पञ्चभागं त्रिभागं द्विभागं त्रिभागैकभागमर्धं वा हस्तमानं त्रिहस्तं द्विहस्तमेकहस्तं वा पीठव्यायामं विस्तारात् तत्समोत्सेधं तन्मध्ये पूर्ववत् प्रथमेष्टकां शिलां वा विन्यस्य पीठोत्तुङ्गं षोडशभागं कृत्वैकांशमुपानाच्चतुरंशं जगतीं त्र्यंशं कुमुदमर्धांशं कम्पं चतुरंशं कण्ठमर्धांशं कम्पमर्धांशं महापट्टिका तस्योर्ध्वं कम्पमर्धांशं चतुर्दिशं मध्ये मध्ये शङ्खनादसमन्वितं भूताकारयुतं वा कृत्वा समाप्तेष्टकां संन्यस्य तत्तुरीयांशमूर्ध्वपद्मं तत् पद्मं पञ्चधा कृत्वैकांशं पद्माधारावृतकम्पं तस्योर्ध्वे त्र्यंशमधोदलं षोडशांशमूर्ध्वदलमूर्ध्वाधः षोडशदलैर्युक्तं पद्मं कुर्याद् विस्तारं सप्तांशं कृत्वा षडंशं कम्पं पञ्चांशमधःपद्ममेकांशमूर्ध्वपद्मं सकर्णिकं कारयेत् । तुङ्गात् पादार्धं वोपपीठयुक्तं वा पीठमेवं कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्राकारगोपुरपर्षदाविधिर्नाम सप्तमः पटलः ॥

## अथाष्टमः पटलः ।

अथोर्ध्वं गर्भन्यासविधिं समुद्रात् पर्वतान्नदीतीराद्ध्रदात् खलाद् वल्मीकात् कुलीरवासाद् गजदन्तोद्धृताद् वृषविषाणोद्धृताच्च मृत्तिकां वज्रमौक्तिकवैडूर्यशङ्खजस्फाटिकपुष्यकान्तनीलबृह-

न्मणीमनःशिलाहरितालाञ्जनश्यामकासससौराष्ट्रगोरोचनागैरिकपा-रदाः शालिनीवारकुङ्कुमापकुलुत्थनिष्पावतिलसर्षपमुद्गयवान् सुवर्ण-रजतताम्रपित्तलायसारकूटवृत्तलोहवैकृतत्रपुसीसायसान् यथाक्रमेणाहरेत्। हेमरूप्यताम्रायसान् लोहांश्च पद्मोत्पलकुमुदकल्हारकन्दांश्चाहरेत् । सु-वर्णेन चिह्नानि स्रुक्स्रुवकमण्डलच्छत्रचामरद्वयध्वजतुलामोदयुगला-ङ्गलपञ्चगजगरुडं कूर्मचक्रशङ्खगदाशार्ङ्गासिपञ्चायुधान् श्रीवत्सपूर्णकु-म्भेर्यादर्शनमत्स्ययुग्माङ्कुशशङ्खावर्तानष्ट मङ्गलान् सुवर्णेन यथालाभ-मानेन कारयति ॥

फेलायामविशालं त्रिःपञ्चसप्तनवैकादशत्रयोदशपञ्चदशसप्तद-शैकोनविंशदेकविंशत्रयोविंशत्पञ्चविंशदङ्गुलान्यथाक्रमेणैकतलादिद्वाद-शतलविमानानां गर्भभाजनं तद्भित्त्युच्चविस्तारसममष्टांशोनं षड्भागोनं वा तस्य बाहुल्यं यवैकद्वित्रिचतुष्टयैर्वा नवकोष्ठयुतमच्छिद्रां रम्यां पेलां कारयति । कोष्ठभित्त्युच्चं विस्तारार्धं त्रिभागैकं वा तद्विधानं यथो-चितमध्याङ्गुलीभित्त्युच्चनिर्व्रणवृत्तचतुरश्रं वा शुद्धेन ताम्रेण कारयेत् । अथवा तत्प्रासादविष्कम्भं तदष्टांशोनं तत्पादहीनं वा फेलायामविशालं शेषं पूर्ववदिष्टं शुभर्क्षे कर्त्रनुकूलर्क्षे रात्रौ शुभोदये गर्भन्यासं कृत्वा आलयाभिमुखे दक्षिणे वा कृत्वा तोरणाद्यैरलङ्कृत्य तन्मध्ये द्विह-स्तायतविस्तारां तालोत्सेधां व्रीहिभिर्वेदिं कृत्वा तत्प्राच्यामाहवनीया-ग्निकुण्डं कृत्वा सायाह्ने देवाभिमुखे धान्यराश्युपरि प्रागग्रवस्त्रमास्तीर्य फेलां विन्यस्य तस्मिन् पूर्वं मृदादिद्रव्याणि सम्भृत्याचार्यश्चोत्तराभि-मुखो भूत्वा गायत्र्या प्रणवाद्यया भृतानि द्रव्याणि सम्प्रोक्ष्य मेदिनी देवीति फेलामभिमृश्य ब्रह्मादिनवपदेषु तत्तद्दैवत्यमन्त्रै रत्नधातुबीज-लोहान् क्रमेण विन्यसेत् । अष्टदिक्षु मङ्गलान् यथाक्रमेण तत्तद्दिगीश-मन्त्रैः संन्यस्योत्तराच्छादेनाच्छाद्य, दिक्परिच्छेदनं कृत्वा तस्याल-यस्योत्तरे वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यामालयं संशोध्य पुण्याहं वाचयित्वाहवनीयाग्नेराघारं हुत्वा धान्यवेद्यां पञ्चवस्त्राणि चास्तीर्य तन्मध्ये स्वस्तिसूक्तेन फेलां द्रव्यसहितं संन्यस्य तस्मिन्नस्मिँल्लोकमिति ध्यात्वा नागेन्द्रं तस्यैव परितश्चेन्द्रादिलोकपालांश्चाभ्यर्च्य वस्त्रेणावे-ष्ट्योपरि पुष्पाणि विक्षिप्याधिवास्याग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं

श्रीसूक्तं महीसूक्तं ब्राह्मं नागदैवत्यं च हुत्वा पश्चान्नागराजायेन्द्रायाग्नये यमाय निर्ऋतये वरुणाय वायवे सोमायेशाय नारायणाय सर्वरत्नेभ्यः सर्वधातुभ्यः सर्वबीजेभ्यः सर्वलोहेभ्यो नदीभ्यः पातालेभ्यो वृक्षेभ्यो दिग्गजेभ्यः स्वाहेति व्याहृत्यन्तं कृत्वा तन्नामतः परिषेकं कृत्वा तद्रात्रौ सुमुहूर्ते प्राप्ते त्वाचार्यादीनां वस्त्रोत्तरीयाभरणैरलङ्कृत्य दक्षिणां दत्त्वाचार्यस्तद्गर्भभाजनं शिरसा धारयन् वाद्यघोषसमायुक्तमालयं प्रदक्षिणीकृत्याभ्यन्तरं द्वारदक्षिणे स्तम्भसमीपे ब्राह्मणो यजमानश्चेत् पट्टिकोपरि क्षत्रियस्य कुमुदोपरि वैश्यस्य जगत्युपरि शूद्रस्य पादुकोपरि चैवं स्थानं सङ्कल्प्यात् । अथवा पट्टिकादधो द्व्यङ्गुलं द्व्यङ्गुलमाधीनं क्षत्रियादीनां कारयेत् । तस्मिन् मेदिनीमभ्यर्च्योत्तमसूक्तं जप्त्वेदं विष्णोर्वीर्यमिति ध्यात्वा मेदिनीं देवीं विष्णुर्योनिं ध्रुवसूक्तं च जप्त्वा तत्रैव गर्भं स्थापयेत् । पश्चादग्निमासाद्य स्विष्टाकारं पूर्णाहुतीं यजेत । अग्निं विसृज्य ततः शिल्पिनमाहूय दृढीकरणं कृत्वा तस्योपरिष्टाद् विधिना विमानं कारयेत् ॥

अथ समाप्तेष्टका वा शिला वा विन्यासविधिः । पूर्वपक्षे कर्त्रनुकूलर्क्षे शुभे मुहूर्ते समाप्तिकां कुर्यात् । पूर्ववद् विधिनाङ्कुरार्पणं कृत्वा विमानमेकद्रव्यकृतं श्रेष्ठं द्विद्रव्यकृतं मध्यमं त्रिद्रव्यकृतमधमम् । एकद्रव्यकृतविमाने तद्द्रव्येण मूर्ध्नि विन्यासमन्यं योग्यद्रव्यमुपरिस्थितं तेनैव मूर्ध्नि विन्यासं कारयेत् । इष्टकोपरि पादुकां पट्टिकान्तं शिलयैव कृतं न दोषाय भवेत् । शिलयाथेष्टकया वा दारुणा वा पादुकादिस्तूप्यन्तं यत् कृतं मसूरकान्तं प्रस्तरान्तं वा शिलयैव कृत्वा शेषमिष्टकया कल्पितं यत् तद् द्विद्रव्यकृतमेव शिखरं लुपाविधानेन कृत्वोपरि लोष्टाच्छादनं त्रिद्रव्यकृतं तदेवं शक्तश्चेत् ताम्ररजतरुक्ममयैराच्छादयेच्चेदुत्तमं भवति । सर्वेषां स्तूपिं लोहजमेव कारयेदित्येके । तस्यालयपादविस्तारं द्विगुणायामं तस्यार्धविस्तारं तस्यार्धं बाहल्यमेवं कृत्वा, तस्य स्थानं शिखरान्तेऽर्धनासिकाग्रान्ते वाम्रजं खदिरवं (खादिरवै ? वे)रोक्तवृक्षैर्वाहृत्य एकतलप्रासादे बहुतले वा मूलतलपादविष्कम्भाद् द्वादशाष्टषड्गुणं वा कीलं दैर्घ्यं तत्पादविष्कम्भात् त्रिपादमर्धात् त्रिभागैकभागं वा विस्तारं तत्षडंशैकांशस्तूपिकाग्रविस्तारं तस्यायामं सप्तधा कृत्वा त्रिभागं मूलचतुरश्रं शेषं शिखराकारं वा

कारयेत् । अथवा तदूर्ध्वतलपादायामसमं तत्पादविष्कम्भविस्तारमग्रमेकाङ्गुलायतं मध्ये सुषिरं समचतुरश्रं कृत्वा तत्कीलादधस्तात् सशिखरं युक्तितः कारयेत् । आद्येष्टकवदन्त्येष्टकानामधिवासनहोमाद्यं सर्वं स्तूपिकीलसहितं कृत्वा कीले विष्णुं तदाधारे महीं देवीं प्रागादिष्वष्टकादिपुरुषाद्या मूर्तयस्तद्वाह्ये प्रागाद्युत्तरान्यक्षोविवस्वन्मित्रं क्षत्तारं चैवाभ्यर्च्य शयने शाययित्वा प्रतिसरमाबध्योत्तराच्छादनं कृत्वाहवनीयादिषु पूर्ववद्धुत्वा रात्रिशेषं विनीय प्रभाते स्नात्वालयमाविश्य प्रदक्षिणं कृत्वाचार्यादिभ्यो दक्षिणां दत्त्वा नववस्त्रोत्तरीयाद्यैरलङ्कृत्य स्थापकाः शिला वाथेष्टका वा कीलसहितं ग्राममालयं वा प्रदक्षिणं कृत्वैरसङ्कुरं विमाने समारोप्य शिल्पिना सार्धं सूत्रं प्रसार्य शिलामथेष्टका वा तन्मध्ये च्छिद्रे पूर्वं प्रागग्रं तच्छिद्रे तन्मूलं दक्षिणेच्छिद्रगं दक्षिणे तन्मूलं पश्चिमच्छिद्रगं पश्चिमे तन्मूलमुत्तराग्रमेव तच्छिद्रं पूर्ववच्चतुर्वेदादिमन्त्रैरूर्ध्वाननं संन्यस्य सुधयालिप्य तन्मध्ये रत्नं सुवर्णं वा यथाशक्ति विन्यस्य मेदिनीमन्त्रेण पूर्वाग्रं न्यस्य तस्योर्ध्वे सुषिरे विष्णुसूक्तेन स्तूपिकीलं प्रतिष्ठापयेत् । शिल्पिनमाहूय दृढीकरणं कृत्वा शिखरं समाप्य तस्मिन् प्रागादिचतुर्दिक्षु न्यक्षादीन् ध्यात्वावाह्याभ्यर्च्य शेषांशं विधिना कारयित्वा शक्तश्चेत्ताम्रजं सौवर्णं वा कृत्वा तस्याधस्तात् सुवर्णानुलेपनं च कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते गर्भन्यासान्त्येष्टकादिविन्यासविधिर्नामाष्टमः पटलः ॥

## अथ नवमः पटलः ।

अथातः परिवाराणां नवभेदमालयान्तर्गतदेवान् द्वारपालान् सर्वतः सामान्यमुच्यते । विष्वक्सेनश्रीभूतगरुडचक्रध्वजशङ्खमहाभूतैर्युक्तमधमाधमम् । एतैः सार्धं विमानपाललोकपालैर्युक्तमधममध्यमम् । एतैः सह द्वितीयावरणस्थदेवा हविरक्षपुष्परक्षकबलिरक्षकैर्युक्तमधमोत्तमम् । एतैः सह तृतीयावरणस्थदेवान् मध्यमाधमम् । एतैश्चतुर्थावर-

पञ्चदेवान् मध्यममध्यमम् । एतैः सह कुहूरनुमतिः सप्तमातृः जया-
दिरोहिणीं च मध्यमोत्तमम् । चैतैः सह पञ्चमावरणस्थदेवानुत्त-
माधमम् । सषट्प्राकारस्थदेवतैः सहोत्तममध्यमम् । सप्तप्राकारस्थदेवतैः
सहोत्तमोत्तमम् । अथवा विष्वक्सेनगरुडश्रीभूतान् यक्षभूतपीठं चैते
पञ्च परिवारदेवानधमाधमम् । एतैः सार्धमिन्द्रादिदिग्देवान् अष्टौ
भास्करं प्रमुखे चक्रशङ्खध्वजं चैते षोडश परिवारदेवानधममध्यमम् ।
पूर्वोक्तैः सहितो विवस्वान् मित्रं क्षत्तारमभिमुखे ध्वजयूथाधिपानेक-
विंशतिदेवानधमोत्तमम् । पूर्वोक्तैः सहितसिद्धिं रविं श्रियं हविःपालं
स्कन्दं विघ्नेशं सप्त मातृः पुरुषं ज्येष्ठां भार्गवं ब्रह्माणं चैते द्वात्रिंशद्देवा
मध्यमाधमे चैतैः सह भास्करमङ्गारकं स्कन्दं दुर्गां सप्तरोहिणीं मन्दं
सप्तमातृः बुधं बृहस्पतिं पुरुषमिति चत्वारिंशद्देवान् मध्यममध्यमे ।
ज्येष्ठां शुक्रं गङ्गां सप्तऋषीन् ब्रह्माणं चन्द्रं रुद्रानश्विनौ कपिलं पञ्च-
भूतान् सरस्वतीमित्येतैर्युक्तं मध्यमोत्तमम् । पूर्वोक्तैः सह पृथ्वी मित्रं
नरं धर्मं धात्रीं खराप्रियां पुण्येशं व्याहृतीं दक्षं भवं मनुं महावीरमेतैः
सहितमुत्तमाधमम् । एकादशरुद्रान् द्वादशादित्यानेतैः सार्धमुत्तममध्य-
मम् । बलिरक्षकाष्टवसून् जयादीनैतैर्युक्तमुत्तमोत्तमम् । इति विज्ञायते ॥

अथ नवविधा अर्चकपरिचारकाः मन्त्रकल्पविदः शौचाचारस-
मन्वितान् सुपुष्टाङ्गान् ऋत्विगुक्तगुणोपेतान् वैष्णवान् अर्चकौ द्वौ परि-
चारकौ अधमाधमेऽर्चकौ द्वौ परिचारकाश्चाधम(मध्यमोत्तमे?) मध्य-
मेऽर्चकास्त्रयो नव परिचारकाश्च अधमोत्तमे अर्चकाश्चत्वारः षोडश परि-
चारकाश्च मध्यमाधमे षडर्चकाः पञ्चविंशत्परिचारकाश्च मध्यम-
मध्यमेऽर्चका अष्टौ चत्वारिंशत्परिचारकाश्च मध्य(मोत्त)मे द्वादशा-
र्चकाः पञ्चाशत्परिचारकाश्चोत्तमाधमे षोडशार्चकाश्चतुःषष्टिपरिचार-
काश्चोत्तममध्यमे विंशदर्चकाः शतपरिचारकाश्चोत्तमोत्तममित्याहुर्देवेश-
स्याप्रतिसन्ध्या प्रतिपूरुषस्तथा बेरं प्रतिपूजनार्थमर्चकाः पञ्च बहवो
भवन्ति । आलयं नित्यनैमित्तिकार्थमाचार्यार्चकादीनां जीवनार्थमन्य-
विभवार्थं सर्वमत्यन्तपुष्कलान् भूमिभोगानाचार्यस्य हस्ते देवसन्निधौ
सोदकं दद्यात् । सर्वमाचार्यनियोगेन कारयेत् । आचार्यार्चकादीन्

केवलयुक्तश्चेज्जनाः सर्वे केवलयुक्तो भवेद् राजराष्ट्रं महद् भयम्, ग्रामस्य यजमानस्य नाशनं भवति। तस्मात् सर्वप्रयत्नेनाचार्यार्चकादीनां जीवार्थं दक्षिणां भूमिभोगैः सुसम्पन्नं परिकल्पयेत्। आचार्यार्चकादीनामभावे तत्पुत्रादीन् तदभावे तन्नियुक्तो वा। अन्यथा चेन्महत्तरो दोषो भवतीति विज्ञायते॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
नवविधार्चकपरिचारकविधिर्नाम
नवमः पटलः॥

## अथ दशमः पटलः।

अथ बेरार्थं शिलासङ्ग्रहणम्। गिरिजा भूमिजा वारिजाश्चेति त्रिविधाः शिलाः। गिरेरुपरिजातानामूर्ध्वमुखं, तत्पार्श्वप्रजातानां सर्वतःप्रेक्ष्यमुखम्। समुद्रजातानामूर्ध्वमुखम्। भूमिजातानां सर्वासामधोमुखम्। नद्यादिजलमार्गजातानां जलागमनमुखम्। नासम्भूमिजातानां मुख्यन्तम्। तस्मान्महादिक्षु शीर्षं विशिष्टं विदिक्षु स्थानस्थं चासां ग्राह्यम्। शिलाश्च त्रिविधाः। पुंस्त्रीनपुंसकाश्चेति। एकवर्णा घनाः स्निग्धा मूलाग्रादार्जवान्विताः घण्टानादसमाः पुंशिलाः। स्थूलमूलाः क्षयाग्राः कंसध्वनियुताः स्त्रीशिलाः। स्थूलाग्राः कृशमूलाः स्वरहीना नपुंसकशिला हि। पुंबेराः पुंभिः, स्त्रियस्त्रीशिलाभिः, प्रासादतलकुड्यादि नपुंसकशिलाभिः। अथैकशिलया देवदेव्यौ च कारयेदित्येके। शिलाच्छेदने तक्षणे चापि मण्डलं दृश्यते यदि सा शिला गर्भिणीति ज्ञात्वा तां यत्नेन परिवर्जयेत्। पूर्वपक्षे कर्त्रनुकूलर्क्षे त्वाचार्यो यजमानश्च शिल्पिना सार्धं साधनैर्होमसम्भारैर्युक्तः शिलाग्रहणाय गत्वा वने वनपार्श्वे जलपार्श्वे वा शिलां वीक्ष्य परितस्तृणगुल्मलतादीनि संशोध्य तस्योत्तरपार्श्वे सूत्रोक्तविधिना वास्तुहोमं कृत्वा तस्मिन् पर्यग्नि कृत्वा पञ्चगव्यैः पवमानाद्यैः प्रोक्ष्य द्विप्रस्थैस्तण्डुलैश्चरुं पक्त्वा सगुडलाजैर्युक्तं शिलापार्श्वे दक्षिणे वनराजायेति वामे तद्देशाधिपतये तस्यैव परितः प्रागाद्यैशानान्तं सर्वेभ्यो

देवेभ्यो यक्षेभ्यो विद्याधरेभ्यो राक्षसेभ्यः पिशाचेभ्यो नागेभ्यो गन्धर्वेभ्योऽष्टादशगणेभ्यश्चेति तत्तन्नाम्ना पूर्वामुदकं पुष्पं बलिमुदकं दत्त्वा तत्रस्थान् शीघ्रं व्रजेत्येति चोक्त्वा परितः खनित्वा शिल्पिना सार्धं मानयित्वा शुद्धोदकैरभिषिच्याचार्यश्चोत्तराभिमुखः प्राणायामं कृत्वात्मसूक्तं जप्त्वा समाहितो देवं ध्यायन् हस्ताभ्याम् 'इदं विष्णु-रि'ति मन्त्रेण शिलाग्रहणं कृत्वा टुलिकं ताडनीमप्यादाय विष्णुगा-यत्रीं 'चित्रं देवानामि'त्युक्त्वा मूर्ध्नि पार्श्वयोः पादे च किञ्चि-च्छित्त्वा ततः शिल्पिनमाहूय विधिना मानयित्वा किञ्चिदप्याधिकं हेमेन शिलां छेदयित्वा देव्यादिपर्षद्देवानां तत्तन्मन्त्रेण गृहीत्वा तत्तत्पीठार्थशिलां चाहृत्याचार्यदक्षिणां दत्त्वा शिल्पिनं पूजयित्वा प्लवङ्गे शकटे वारोप्याप्रमादादिनालयमाविश्य कर्ममण्डपे संन्यस्य बेरं मानोन्मानाद्यैर्लक्षणोपेतं स्थानकादिभेदैर्मार्गेण साङ्गोपाङ्गं यवं यवार्धं वा सर्वत्र हीनदोषं विहीनबेरं सुन्दरं चित्रं चित्रार्धं वा कारयेत् । एवं देवं दारवं कारयति । ध्रुवार्चा चेत् स्थानकमासनं (श)यानकं वा सर्वाङ्गसम्पूर्णं सुव्यक्तं कारयेत् ॥

अथ ध्रुवबेरं ताम्रजं शैलजं वा विधीयते । दारवं वा मृण्मयं श्रेष्ठम् । मृण्मयाच्छैलजमुत्तमम् । शैलजात् ताम्रजमुत्तमं भवति । ध्रुवार्चा चेत् ताम्रजं शैलजमेव कृत्वा दारवं मृण्मयं नैव कारयेत् । तद्धाम वि-स्तृतार्धमुत्तमम् । गुणांशाद् द्व्यंशं मध्यमम् । शरांशाद् गुणांशमधमम् । तदर्धायामविस्तृतार्धं द्विधा कृत्वा तस्यापरार्धं षड्विंशतिभागं कृत्वा तत्पूर्वार्धांशैकेन सह युक्त्या संयोज्य सप्तविंशत्युत्सेधं भवति । गर्भा-गाराच्चतुर्भागात् त्रिभागाद् द्विभागं शरांशाद् गुणांशं गर्भागारार्धं द्विधाकृत्य सप्तविंशत्युत्सेधं भवति । पदोत्सेधं वा पादाधिकं पादहीन-मर्धं नवांशोनं वाधिष्ठानस्य पादमर्धं त्रिपादं समं वा पादाधिकमर्धा-धिकं पादोनद्विगुणं द्विगुणं वा हस्तमानं गुणशरमुनिहस्तमानाङ्गुलेन पञ्चविंशत्यङ्गुलाद्येकचत्वारिंशदङ्गुलान्तं द्व्यङ्गुलं वर्धयेत् । अङ्गुलिमानं नवधा भवति । यजमानसममष्टादशांशं कृत्वा एकाद्वित्रिचतुरंशाधिकं नेत्रास्यबाहुसमं स्तनान्तमित्येवं नवधा भवति । एवमिष्टमानं विनिश्चित्य पादादि चोष्णीषान्तं ध्रुवबेरं कारयति ॥

तद् बेरं चित्रं चित्रार्धं चि(त्रलेख्य)मिति त्रिविधं भवति । षण्मानसहितं चित्रं सर्वाङ्गम् । नाहार्धमदृश्यमर्धचित्रम् । मानेनाभिर्भ्यां हीनं पटकुड्यादि लेख्यम् । आसामेव ध्रुवबेरं नैव कारयेत् । आसां दर्शनी ....... ब्रह्मस्थाने कौतुकं संस्थाप्यावाहनविसर्गौ विना चैकबेरार्चनोक्तविधिनार्चयेत् । ध्रुवार्चा चेच्चित्रार्धं वा कारयेत् ॥

स्थानकस्य पीठोच्चं बेरोदयाद् द्वारोदयाद् वाष्टभागं सप्ताष्टभागं वा कृत्वा एकांशं ध्रुवाङ्गसमं मध्यद्विगुणं वा पीठोत्तुङ्गं समं वृत्तं पद्माकारं चतुरश्रं देवस्य पादे परितश्चतुरङ्गुलं षडङ्गुलमष्टाङ्गुलं वा देहमर्धाङ्गुलेन नीत्वा तस्योर्ध्वाधः षोडशदलयुक्तं कारयेत् । तस्यैकाङ्गुलोनं देव्याः पीठमासने किञ्चिद्धीनं शयने हीनं नैवाचरेत् । अथवातिदृढार्थं कौतुकपीठात् पश्चिमभागं सर्वं दैविकमानुषमैशाचिकपादान्तं पीठोत्सेधमानेन समं कृत्वा यथोक्तदेशे देवीभ्यां सह देवेशं स्थापयेत् ॥

आसनस्योत्तुङ्गं बेरायामं त्रिधा कृत्वैकांशं तदष्टांशाधिकं तदष्टांशोनं वा सिंहासनम् । तत् षोडशभागं कृत्वा एकांशमुपानाच्चतुरंशं जगतीं त्र्यंशं कुमुदमेकांशं त्र्यंशं कण्ठं सिंहयुक्तमेकांशं कम्पं द्व्यंशं महापट्टिकामेवं कारयेत् ॥

अनन्तशयनोत्सेधं बेरायामाच्चतुर्भागैकं तदष्टांशाधिकं तदष्टांशोनं वा तच्चतुर्भागैकभागशिरःपार्श्वोच्चं त्रिपञ्चसप्तवलयैः स्थलीकृत्य पञ्चसप्तनवैः फणैर्मकुटोपरि सञ्छन्नं तत्फणानामुत्सेधं तच्छयनोत्सेधं युक्त्या शिलाभिरिष्टकाभिर्वा कारयेत् ॥

ध्रुवार्चाबेरपीठोत्तुङ्गं बेरोदयात् तुरीयांशमेकांशं वा पद्माकारं चतुरश्रं वृत्तं वा स्थानं वेदीं गर्भागारं त्रिभागैकं चतुरश्रं द्विमेखलं तस्योर्ध्वे वेदिविस्तारभागं तदर्धोत्सेधं तस्यैव परितश्चतुरङ्गुलविस्तारोत्सेधमखातन्मध्ये षडङ्गुलावगाढपद्माङ्गुलं चतुरङ्गुलं वा प्राच्यामुदीच्यां वारिमार्गं चतुरङ्गुलमात्राङ्गुलेन चैकवेदीं कारयेत् । एवमेव विशेषं युक्त्यैव कारयेत् ॥

अथातो गर्भालयपदविन्यासविधिं प्रागग्रैरुत्तराग्रैः सप्तदशसूत्रैः षट्पञ्चाशद् द्विशतं भागं विभज्य तन्मध्ये षोडशभागं ब्राह्मं, तस्यैव

परितश्चतुरङ्गुलाधिकाशीतिभागं दैविकं, तत्परितः षण्णवतिभागं मानुषं, तद्बहिः षष्टिभागं पैशाचमिति । आद्ये कौतुकपीठं दैविकभागं त्रिधा कृत्वा तस्यापरभागे तन्मध्ये वा स्थानकं देवमानुषयोरन्तरे चासनं किञ्चिद् दैविकमाश्रित्य मानुषांशे शयनं संस्थापयेत् । ध्रुवार्चा चेत् समसप्तविभागं कृत्वा तन्मध्ये चैकपदं तद् ब्राह्मं तत्परितश्चाष्टभागं दैविकं तद्बाह्ये षोडशभागं मानुष.............. चतुर्विंशतिभागं पैशाचं भवति । ब्रह्मस्थाने स्थापयेच्छान्तिकं दैविके पौष्टिकं दैविकमानुषयोर्मध्ये जयदमेव ध्रुवार्चां स्थापयेत् । देवस्य बाहुमानं स्तनान्तरं कर्णसीमान्तं वा देव्योर्मानं मुनिभ्यां वीशशैषिकाभ्यामन्यत्परिवाराणां देवानां च तत्तत्समं पादहीनमर्धं वा तत्तत्कालयवशाद्वा कारयेत् । ब्रह्मशंकरौ ध्रुवबेरसमं नवांशोनं वा द्वारपालानां तत्तद्द्वारोत्सेधनवांशोनमष्टांशोनं वा कारयेत् । येन द्रव्येण देवं कृतं, तद्द्रव्येण वेद्यादिपर्षदानां च तत्तदुक्तमालक्रमेण कारयेत् । स्थानकस्य पीठोर्ध्वे चासने सिंहासनोर्ध्वे तस्याधस्ताद्वा शयानेऽप्यनन्तोर्ध्वे पादपार्श्वे बेरमध्ये रत्नादिन्यासं कृत्वा बेरं संस्थापयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते शिलाग्रहणध्रुवबेरपदविन्यासविधिर्नाम दशमः पटलः ॥

---

## अथैकादशः पटलः ।

अथोर्ध्वं शिलाबेरस्थापनविधिमुत्तरायणे दक्षिणे वा मार्गशीर्षमाघौ विवर्ज्य शुक्लपक्षे श्रवणरोहिणीश्रविष्ठाहस्तानूराधारेवती त्रिपूत्तराणि चान्यस्मिन् सुप्रशस्ते कर्त्रनुकूलर्क्षे स्थिरराशौ शुभोदये प्रतिष्ठां कारयेत् । तद्दिनात् पूर्वमङ्कुरानर्पयित्वा सम्भारानाहृत्य तद्बेरशुद्ध्यर्थमालयाभिमुखे चोत्तरे वा बेरार्धाधिकमानमधिकमवटं निम्नबिम्बघनं कृत्वा तस्मिन् जले गव्ये कुशोदके च प्रत्येकं दिनमथवा त्र्यहमेकाहं वा जलाधिवासं वा कारयेत् । बिम्बं महितं चेत् कुम्भजले....हुतैकस्मो हिरण्यपवमानैरभिषेचयेत् । आलयाभिमुखे दक्षिणे वा यागशालां षोडशस्तम्भसंयुक्तां प्रपां कृत्वा तोरणाद्यैरलङ्कृत्य तन्मध्ये

शय्यावेदीं चतुरश्रं तत्तुरीयांशोत्सेधमथवा बिम्बार्धाधिकमायामं यथालाभोत्सेधं वा वेदिं कृत्वा तत्प्राच्यां सभ्याग्निकुण्डं तस्योत्तरे स्नानवेदीं च कृत्वालयादुत्तरे वास्तुहोमं हुत्वालयं पर्यग्निपञ्चगव्याभ्यां शोधयित्वा सभ्याग्नावाघारं हुत्वाघारान्ते स्नानवेद्यां देवेशं संस्थाप्य तस्याभिमुखे व्रीहिभिर्दण्डवत् पङ्क्तिं कृत्वा पञ्चगव्यादिद्वादशद्रव्यसम्पूर्णान् कलशान् सोपस्नानान् विन्यस्य विधिना संस्थाप्य वस्त्राद्यैरलङ्कृत्य प्रतिसरमाबध्य शय्यावेद्यां धान्योपरि पञ्च शयनानि पञ्चवस्त्राणि वास्तीर्य देवीभ्यां सह देवेशं शाययेत्। मुन्यादीनां स्थापनादि प्रत्येकं स्नपनशयनादीनि कारयेत् । यतो द्वारं ततो मौलिं कृत्वोत्तराच्छादनं कृत्वा बेरे महत्त्वे सति यागस्थानस्य मध्ये शय्यावेदिं विनात्र कलशान् पूर्वं बेरं समानीय शुद्धोदकैः पावमानाद्यैः संस्नाप्याभ्यर्च्य पश्चाद् वास्तुशुद्धिं कृत्वा .... कलशस्नापनं च कारयेत्। अभिमुखे धान्यं च परिशयनास्तीर्य प्रतिसरान् बद्ध्वा देवेशं शयने शाययीत । स्मृत्वोत्तराच्छादनं देवबिम्बमाच्छाद्याधिवास्याग्निं परिस्तीर्य हौत्रं प्रशंस्य देवं देवार्चकं मुनीनावाह्यावाहनजुष्टाकारस्वाहाकारांश्च हुत्वा पुरुषसूक्तं वैष्णवमेकाक्षरादीन् श्रीसूक्तं महीसूक्तं ब्राह्मं रौद्रं सर्वदैवत्यं च हुत्वा रात्रिशेषं विनीय प्रभाते स्नात्वालयमाविश्य शयानं देवमासाद्याष्टोपचारैरभ्यर्च्य गर्भागारे पदविभागं कृत्वा तद्विहिते पदे रत्नादीन् न्यस्य पश्चादग्निं विसृज्य बेरमालये नीत्वा प्रतद्विष्णुस्तवतेति बेरं संस्थाप्य बेरस्य पादौ स्पृशन्तौ विष्णुसूक्तं पुरुषसूक्तं ध्रुवसूक्तं च जप्त्वा देवादीनां तत्तन्मन्त्रैस्तत्तत्स्थाने प्रतिष्ठापयेत् । शिल्पिना बेरं दृढं प्रतिष्ठाप्य पश्चान्मन्त्रेण स्थापनां कारयेदित्येके ॥

बेरे महत्त्वेऽल्पेऽधिष्ठानावधानेऽप्येवं संस्थाप्य पश्चाद् विमानं कारयेत् । शिलालये शिलाबेरं ताम्रजं वाथेष्टके शैलजं मृण्मयं दारवं वा स्थापयेत् । मृण्मये तृणच्छन्ने चैकबेरमेव स्थापयेत् । ऊर्ध्वदृष्टिरधोदृष्टिस्तिर्यगीक्षणं चैव ध्रुवबेरं संस्थाप्य पश्चाच्छिल्पिना बटिशर्करादीनि कारयेत् ॥

अथ ध्रुवार्चनास्थापनाविशेषं बेरं शिल्पिभिर्निरपेक्षं कृत्वा यथोक्तमङ्कुरानर्पयित्वा कौतुकस्योक्तविधिनाक्षिमोचनाधिवासनादीनि

कारयित्वा पूर्वेद्युरेव रात्रौ तस्यालयस्योत्तरे वास्तुहोमं हुत्वा पर्यग्नि-पञ्चगव्याभ्यामालयं संशोध्य पुण्याहं वाचयित्वा यागस्थानस्य मध्ये शय्यावेदीं तस्यैव परितश्चाग्निकुण्डानि कृत्वाधिवासनं गतं देव-मासाद्याभिषिच्य वस्त्रोत्तरीयाद्यैरलङ्कृत्याभ्यर्च्यालयमाविश्य यज्ञा-लये सभ्यस्य पश्चिमे देवं संस्थाप्य पञ्चाग्नीनामाघारं हुत्वाघारान्ते देवाभिमुखे यथोक्तेन विधिना कुम्भपूजां कृत्वा तस्मिन् देवं ध्यात्वा बेरं सप्तभिः कलशैः संस्नाप्य कुम्भं समभ्युक्ष्य वस्त्रोत्तरीयाद्यैरलङ्कृ-त्याभ्यर्च्य पुण्याहान्ते प्रतिसरान् बध्वा शय्यावेद्यां धान्योपरि अण्ड-जादीनि पञ्च शयनानि पञ्च वस्त्राणि चास्तीर्य तस्मिन् कुम्भं बि-म्बमारोप्य विधिना शाययेद् यदि स्यादौत्सवबिम्बं बलिबेरं च देवेन सहाक्षिमोचनं कृत्वा पृथगेवाधिवासनं स्नपनं च कृत्वा तद्वेद्यां प्रत्ये-कशयनं चास्तीर्य प्रतिसरान् बद्ध्वा तथैव शाययेत् । सभ्याग्नौ हौत्रं प्रशंस्यावाहनादीनि कृत्वा चतुर्दिक्षु चतुर्वेदाध्ययनं च कृत्वा सर्व-होमान् यथोक्तं जुहुयात् । रात्रिशेषं विनीय प्रभाते ........ नालय-माविश्य देवं प्रणम्याराध्य गर्भालयपदविभागं कृत्वा यथोक्ते पदे पीठे नवरत्नादीन् संन्यस्याचार्यादिभ्यो दक्षिणां दत्त्वा पूर्णाहुतिं हुत्वा पश्चान्मुहूर्ते सम्प्राप्ते देवेशं प्रणम्यानुमान्य तत् कुम्भं विना देवं गर्भालये समानीय रत्नोपरि महाबेरं विष्णुसूक्तं ध्रुवसूक्तं च जप्त्वा प्रतद्विष्णुस्तवत इति देवं संस्थाप्याष्टबन्धनं प्रयोज्य लाक्षागुडमधूच्छि-ष्टगुग्गुलूनां परस्परं समभागं कृत्वा एषां गुणं सर्जरसगैरिकं तस्माद् घनचूर्णमर्धं सर्वेषां तैलमर्धं संयोज्य लोहपात्रे निक्षिप्य लोहदर्व्या समे-ताग्निना समपक्वं सुपचेत् । तद् द्रव्यमादाय पीठरन्ध्रे प्रक्षिपेत् । तद् दृषत्समो भवतीति । तस्य ध्रुवबेरस्योक्तशुद्धिं कृत्वा पश्चादाचार्यः शय्यावेदिमासाद्य कुम्भं सङ्गृह्य शिरसा धारयन् अग्रतो गच्छेत् । औत्सवबलिबेरं चानुगच्छेत् । आलयं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य देवाभिमुखे कुम्भं संन्यस्य तस्मिन् मुखमण्डपे चोत्स(वं) बलिबेरं च प्र-तिष्ठाप्याचार्यश्चात्मसूक्तं जप्त्वा मन्त्रन्यासं चाक्षरन्यासं च कृत्वा समा-हितश्चोत्तराभिमुखो देवं ध्यायन् इदं विष्णुनिकुम्भस्थां शक्तिमादाय

आयातु भगवानिति बिम्बस्य मूर्ध्नि विष्णुमावाहयामीति संस्थाप्या-वाहयेत् । ध्रुवबेरस्य परतः पुरुषादींश्चावरणत्रयदेवान् परितश्चावाह्य-स्स्वासनमित्यासनं दत्त्वा पश्चादौत्सवबलिबेरे च तस्मिन् दीपाद् दी-पमिवैवावाहयेत् । एवं तद्ध्रुवार्चाबेरस्यावाहनविसर्जनाभ्यां वसनाद्यै-रर्चयेत् । एष विशेषः । अन्यत् समानमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते शिलास्थापनध्रुवार्चास्थापन-
विधिर्नामैकादशः पटलः ॥

---

## अथ द्वादशः पटलः ।

अथ बेरार्थं दारुशूललक्षणम् । खदिरं खदिरासनमिति सचन्द-नचम्पकमधुजातिवृक्षाश्चान्ये स्निग्धसाराः शुभवृक्षाश्च सस्यक्षेत्रसमी-पोत्पन्नाः पद्मोत्पलकुमुदतटाकसमीपजाता याज्ञिकद्रुमानन्यत्फलवृक्ष-तुलसीकुशपुष्पसमीपस्थान् वृक्षान् सङ्ग्राह्य पुष्पफलपर्णविस्तीर्णाकृति-मिष्टाजन्तुयुताग्निनादग्धवाताहताः सवय जीर्णाः सकोटरा अत्वचा-हीना भिन्नानेकपक्षिवासा वल्मीकसङ्कटा सर्पावासा देवतायतनस्थाः श्मशानचण्डालवाससमीपस्थाद्यनुक्तस्था न सङ्ग्राह्याः । वृक्षास्त्रिविधाः स्त्रीपुंनपुंसकाः । मूलाग्रादार्जवं सुवृत्तं शाखानेकं पुंवृक्षम् । स्थूलमूल-कृशाग्रं यन्माहीरुहं तत् स्त्रियः । स्थूलाग्रकृशमूलं वृक्षम् तन्नपुंसकं न ग्राह्यम् । स्त्रीवृक्षेण स्त्रीबेरं पुंवृक्षेण पुंबेरं कारयेत् । पूर्वपक्षे कर्त्रनुकूलर्क्षे तदर्थं समाहृत्याचार्यो यजमानश्च साधनैर्होमसम्भारैः शिल्पिभिः सार्धं प्राङ्मुखं वा वनं गच्छेत् । निमित्तानि संलक्ष्य क्रौञ्चचक्रवृ-द्धवायसपिङ्गलाक्षचकोरकपोतककृकलास इत्यादयो दक्षिणा श्रेष्ठाभ्यु-दयकरी चाषश्येनटिट्टिभा वामगाः सिद्धिदाः । गृहगौलिकाकौशिक-क्रोष्टपिङ्गलावेनकुकुलाद्या वामतः सर्वसमृद्धिदाः । भामिनीवैष्णवध्व-जच्छत्रपूर्णकुम्भशुक्लवसनपुंसः श्वेतपुष्पमब्जं गजं वृषभो मधुनं दधि-पयोरुधिरमांसमधुभाण्डगर्भिणीसुरावेश्या यदि दृश्येत, ततः शुभकरं भवतीत्येवं शिलाग्रहणकाले विज्ञायते । शुभे मुहूर्ते तद्वृक्षमासाद्य परितः स्तगुल्मादि संशोध्य तस्मिन् देशे वसन्तोद्वास्यतेति चोक्त्वा

पश्चाच्छान्तिं वाचयित्वा वृक्षस्योत्तरे पार्श्वे वास्तुहोमं हुत्वा वृक्षमूले पर्यग्निं कृत्वा पञ्चगव्यैः समभ्युक्ष्य पुण्याहं वाचयित्वा चरुं पक्त्वा तिलचूर्णमुद्गनिष्पावयुक्तं वृक्षमूले वनराजायेति परितः प्रागाद्यैशानान्तं वनस्पतिभ्यो देवेभ्यो भूतेभ्यो यक्षेभ्यः पिशाचेभ्यो नागेभ्यो विद्याधरेभ्योऽष्टादशगणेभ्यश्चेति पूर्वमुदकं ततः पुष्पं बलिमुदकं दत्वा अस्तु तृप्तिरिति चोक्त्वाचार्यं सम्पूज्य प्राङ्मुख उदङ्मुखो वा इदं विष्णुरिति हस्ताभ्यां द्रुमं सङ्गृह्य श्रीभूम्यादीनां तत्तन्मन्त्रेण सङ्गृह्य परशुमादाय विष्णुगायत्रीं सोमं राजानमिति जपेत् । प्रागादिचतुर्दिशं छित्त्वा पश्चात् तक्षकमाहूयाभिपूज्य सर्वतश्छेदयित्वा महादिक्षु पतन् श्रेष्ठं विदिक्षु पतन्नमुख्यमूर्ध्वभागं मुखं पश्चादि चाङ्कयेत् । यथोचितं छित्वा तद्वृक्षं शकटे समारोप्य नरैर्वाहयित्वालयमाविश्य कर्ममण्डपे संस्थाप्य शोषयित्वा मूलात् प्रतिमानं विधिना त्वरेण कारयेत् ।....र्ध्वबेरोक्ते मार्गेषु इष्टमानं विनिश्चित्य तन्मानं चतुर्विंशच्छतभागं विभज्यैकांशं देहलब्धा (ब्ध्य?)ङ्गुलं तच्छूलाग्रं पादं विदित्वा तल्लक्षणोपेततन्त्रसंस्करणं कृत्वा शूलानाहृत्योर्ध्वकायमधःकायं च समं कृत्वा वंशं दण्डस्यायामं द्विषष्ट्यङ्गुलं स्थानकमास्थानान्मेढ्रं नाभ्यन्तं चतुरंशं नाभेर्हिक्कादुष्णीषान्तवृत्तमन्येषां चतुरश्रं नियुञ्जीत । वंशदण्डस्य मूलविस्तारं भागार्धाङ्गुलमग्रं भागमूलादष्टांशोनं वा वक्षदण्डस्यायामं चतुस्त्रिंशदङ्गुलं सप्ताङ्गुलविस्तृतं त्र्यङ्गुलार्धबाहल्यं घटिदण्डायामं षोडशाङ्गुलमष्टाङ्गुलविस्तृतं तदर्धबाहल्यं तत्पार्श्वयोर्मध्ये निम्नयुतं निम्ने दक्षिणे क्षिणपार्श्वयोः पार्श्वदण्डं संयोज्य वक्षदण्डस्य पार्श्वयोर्मध्ये निम्नं कृत्वा संयोजयेत् । वक्षदण्डस्य मूले चाग्रे च तन्मानैः शिखां चतुरश्रं कलाङ्गुलायतास्तत्समविस्तृतार्धघनाश्चैते चतुर्भुजं द्विभुजे द्विधा कृत्वा कटीदण्डस्य तन्माने शिखायामं त्र्यङ्गुलं द्व्यङ्गुलविस्तृतं तत्समबाहल्ये वंशदण्डेन योजयेत् । ऊरुदण्डायामं सप्तविंशाङ्गुलं मूले शिखायां योजनार्थं युक्त्या कारयेत् । जङ्घा चोरू समायता पादं भागं मूलविशालचतुरङ्गुलमग्रं त्र्यङ्गुलमग्रं कलाङ्गुलं तलाङ्गुलायामं दशाङ्गुलं तस्य मूलं त्रिमात्रमग्रतारं चतुर्मात्रमथवा स्थानकस्य पाददण्डयोर्जानुदण्डं समाचरेत् । एवं कारयेदिति केचित् ।

बाहुदण्डस्यायामं सप्तविंशदङ्गुलं मूलं त्र्यङ्गुलमग्रं द्व्यङ्गुलं प्रकोष्ठदण्डस्यायाममेकविंशदङ्गुलं मूलस्यार्धाङ्गुलं मौलिदण्डायामं सप्तविंशदङ्गुलं विंशदङ्गुलं वा तन्मूलं वंशदण्डाग्रसममग्रं तदष्टांशोनयुक्त्या वंशदण्डाग्रे संयोज्य ताम्रपात्रेण वर्धयेत् । अन्याङ्गानि तत्तदङ्गेषु यथान्यायं संयोज्य विधिना प्रसारितपादौ हस्तौ जानुसन्धि न चाचरेदिदं शास्त्रैः शिल्पिभिः सम्यक् प्रकल्पयेत् ॥

देवीभ्यां शूलं चतुरश्रं किञ्चिच्चक्रं वंशदण्डयोस्तद्देहलम्बाङ्गुलं देवस्योक्तं घटिदण्डमानम् । तत्पञ्चांशोनमूरुदण्डविशालं तत्तुरीयांशोनं जङ्घातारं त्रिभागैकोनं तेषामग्रतारमष्टांशोनम् । अन्यत् समानं देव्योः पार्श्वदण्डं तयोर्योजयेत् । अवक्रमृजुकामस्य वक्रयोर्वक्रमेव कारयेत् । अत्रानुक्तं सर्वं शिल्पशास्त्रोक्तमार्गेण शिल्पिभिश्चैव कारयेत् । गर्भागारं पूर्ववत् षट्पञ्चाशद् द्विशतपदभागं कृत्वा तत्तद् द्विपदे पदे स्थानकादि ध्रुवबेरं कारयेत् । तूलमस्थि मेदोऽष्टबन्धं सिरा रज्जु मांसशोणितं घटिशर्करा त्वक् पटं वर्णं जीवमिति ज्ञात्वैतैः सप्तसंस्कारैर्युक्तं शक्तियुतं सर्वसम्पत्करम् । एतेष्वेकं विना कारयेदासुरमाभिचारिकं भवतीति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते दारुसङ्ग्रहशूललक्षणं नाम द्वादशः पटलः ॥

---

## अथ त्रयोदशः पटलः ।

अथोर्ध्वं शूलस्थापनाविधिः । अयनं चोत्तरं श्रेष्ठम् । त्वरान्वितो दक्षिणे वा मार्गशीर्षमाघयोर्विवर्ज्य शुक्लपक्षे कृष्णपक्षे त्रिधाद्यर्के कर्त्रनुकूलर्क्षे स्थिरराशौ स्थापनां कारयेत् । तद्दिनात् पूर्वं नवमे सप्तमे पञ्चमे वाह्न्यङ्कुरानर्पयित्वालयात् प्रमुखे दक्षिणे वा यागशालां तोरणाद्यैरलङ्कृत्य तन्मध्ये शय्यावेदीं तद्भक्तिसमायामविस्तारं तत्तुरीयांशोत्सेधं वेदिं कृत्वा तत्परितः सभ्यादिपञ्चाग्निकुण्डानि कृत्वा पूर्ववदालयाभिमुखे वोत्तरे वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां संशोध्याग्निनाघारं हुत्वाघारान्ते शय्यावेद्या ऐशान्ये द्विहस्तायतविस्तारां भागोन्नतां धान्यवेदीं कृत्वोत्तराग्रान् दर्भानास्तीर्य वस्त्रोपरि बेरशूलान्

संन्यस्य वंशपक्षकटिदण्डौ वक्त्रपार्श्वे दण्डौ द्वौ बाहुदण्डं चत्वारः प्रकोष्ठांश्च पाददण्डौ द्वौ, एते सप्तदशदण्डाः स्थानके चासने चैकोनविंशतिदण्डाः शयाने चतुर्भुजेऽष्टादशदण्डा द्विभुजे षोडशदण्डाश्चैवं समाहृत्य करार्थं चिह्नं कृत्वा शुद्धोदकैः पवमानाद्यैः प्रक्षाल्य धान्यवेद्यां विष्णुगायत्र्या शूलान् विन्यस्य वयोः पवित्रमिति पञ्चगव्यैः समभ्युक्ष्य शन्नो देवीरिति गव्येन पयसा प्रक्षाल्य तैलाभ्यञ्जनं कृत्वा देव्यादीनामेवं कृत्वा तत्प्राच्यां दण्डवेद्यां यथाविधि कलशांश्चतुर्दश विन्यस्य तत्तद्द्रव्यैः सोपस्नानान् शूलान् समभ्युक्ष्य देव्यादीनां पृथक् पृथगेवं कारयित्वा, शय्यावेद्यां धान्योपरि पञ्चशयनानि पञ्चवस्त्राणि वास्तीर्य तस्मिन् शूलान् स्वस्तिसूक्तेनाङ्कुलानारोप्य तन्मध्ये वंशदण्डान् तत्पार्श्वयोः पार्श्वदण्डौ तदूर्ध्वं वक्षदण्डं तदधस्तात् कटिदण्डं संन्यस्याथवा वंशदण्डे दैर्घ्यितावान्(?) संयोज्य संन्यसेदिति केचित्। तद्दक्षिणपार्श्वे दक्षिणभागाद् वामे वामाङ्गान् संन्यस्य यद्दिग्द्वारं, तद्दिग्दण्डाग्रं कृत्वा पुण्याहान्ते तस्य तत्प्रकोष्ठे प्रतिसरान् बन्धयित्वा, अस्थिभ्यो नम इत्यग्रन्थं वैष्णवमिति शूलान् शाययेत्॥

देव्यादीनां तत्तन्मन्त्रेण शाययित्वोत्तराच्छादनं कृत्वा चतुर्दिक्षु वेदानध्यापयेत्। सभ्याग्निं परिस्तीर्य हौत्रं प्रशंस्यावाहनादीनि कृत्वा सभ्याग्निमेव कारयेदिति केचित्। रात्रिशेषं विनीय प्रभाते स्नात्वालयमाविश्य गर्भालयपदविभागं कृत्वा तद्योग्यपदे पीठे रत्नादीन् विन्यस्याचार्यादिभ्यो दक्षिणां दत्वाग्निं विसृज्य सुमुहूर्ते सम्प्राप्ते शय्यावेदिमासाद्याचार्यः स्थापकैः सह शूलानसङ्करमाहृत्य शत्रूनसूक्तं समुच्चार्य वाद्यघोषपुरःसरं सर्वालङ्कारसंयुक्तमालयं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य कृते पीठे विष्णुसूक्तं विष्णुगायत्र्या ब्रह्मदण्डं संस्थाप्य, देव्यादीनां तत्तत्स्थाने तत्तन्मन्त्रेण स्थापयेत्। वंशदण्डकटिदण्डपार्श्वोरुदण्डान् संस्थाप्य, कटिदण्डाधस्ताद् वक्षोदण्डाधस्ताच्च द्वयोराधारौ भित्तिमाश्रित्य पृष्ठतस्तथा योजने भ्रामयेत्(?) वक्षोऽधःस्थदण्डाच्चैकमाधारमथवा भित्तिशूलमालिदण्डे संयोज्य पाददण्डौ शिलोपरि दृढं संस्थाप्य तयोः कटिदण्डं तदूर्ध्वदण्डं च संस्थाप्य यावद् दृढतरं तावद् योग्यं शूलं कृत्वा युक्तिना समूह्य कारयेत्॥

शयनस्थानकयोराधारं भित्त्याश्रयमेव कृत्वा पश्चाच्छिल्पिन-माहूय पूजयित्वा शिष्टं सर्वं च कारयेदिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते शूलस्थापना-
विधिर्नाम त्रयोदशः पटलः ॥

---

## अथ चतुर्दशः पटलः ।

अथ पश्चात् सन्धिदृढबन्धनार्थं ताम्रपात्रैः पञ्चषट्सप्ताष्टयव-विस्तृतैः संयोज्य गव्यं घृतं तैलं च संयोज्य शुद्धपात्रे सङ्गृह्य पाचयेत् । आलयाभिमुखे चाहवनीयाग्निकुण्डं कृत्वाधारं हुत्वाग्नेः पश्चिमतो धान्यपीठे वस्त्रोपरि चाष्टबन्धनं संन्यस्य मेदसे नम इत्यभ्यर्च्याधिवास्य विष्णुसूक्तं पुरुषसूक्तं वैष्णवं जुहोति मेदसे स्वाहेत्यष्टोत्तरशतं हुत्वाग्निं विसृज्य शकुनसूक्तजप देवालयं प्रदक्षिणीकृत्य गर्भागारं प्रविश्यातो देवादिना चाष्टबन्धं शूलेष्वालिप्याचार्यदक्षिणां दत्त्वा शिल्पिनं च पूजयेत् । पश्चाद् रज्जुबन्धं कारयेत् । नालिकेरफल-त्वचं कुलसारैर्यवद्वयसमं तूलायतरज्जुद्वयं समाहृत्य दक्षिणाग्निकुण्डं कृत्वा पूर्ववद् धान्यपीठे वस्त्रे संन्यस्य सिराभ्यो नम इत्यभ्यर्च्याधिवास्य पूर्ववद्धोमं हुत्वा सिराभ्यः स्वाहेत्यष्टोत्तरशतधावर्त्य हुत्वाग्निं विसृज्य पूर्ववद् देवालयं प्रदक्षिणं कृत्वाभ्यन्तरं प्रविश्यातोदेवादिना मूर्धादिपादान्तमुभौ पार्श्वौ समस्तदेशं समावेष्ट्य ताम्रपात्रेण हस्तपादतलौ कृत्वा कार्पासतन्तुना सर्वाङ्गं समावृत्य पुनस्तथा रज्जुमावेष्ट्याचार्यदक्षिणां दत्त्वा शिल्पिनं च सम्पूज्य पश्चान्मृत्संस्कारं कारयेत् ॥

नादेयं सस्यक्षेत्रजं ह्रदजं देवायतनसमीपतटाकजं पुण्यतीर्थ-जमशोपजलाशयमृदं सुप्रशस्ते दिने गृहीत्वालयाभिमुखे नववस्त्रे कटे वा प्रक्षिप्य संशोष्य शोधयित्वा नवे मृद्भाण्डे शुचौ देशे निवातसहिते स्थाप्य गन्धसहितां वालुकां चाक्षिप्य खदिरककुभत्वक्तोयकषायेनालोड्यैकमासं तोयेन परिवासयेत् । अश्वत्थोदुम्बरप्लक्षन्यग्रोधकषायाम्बुना सेचयित्वा मासमुषित्वा त्रिफलोदकेनालोड्य तत्तुरीयांशं पाषाणचूर्णयुतं तथार्धमासं वासयित्वा यवसारगोधूममाषचूर्णसंयुक्तं श्रीवेष्टगुग्गुलुकुन्दुरुष्कसर्जरसैश्च षोडशांशं संयोज्यालोड्य मधुदधिसर्पिषा

तत् स्नेहसहितं तिलजेन सा बिल्वफलसारं यथालाभं संयोज्यार्धमासं वासयेत् । तस्मिन् रजनीकटुकत्रयचूर्णं दशांशं संयोज्य तीक्ष्णं कृत्वा तदर्धं कपित्थनिर्यासचूर्णं हरितालं ..................... चूर्णं च यथालाभं सुवर्णरजतचूर्णयुतं कदलीफलनारिकेलसलिलं गोक्षीरं च संयोज्य सम्मर्द्य नादेयपार्वतहृदीयसस्यक्षेत्रवल्मीकसमुद्रखलगजवृषशृङ्गोद्भेदकुलीरावटजं च मृदं च किञ्चित् समादाय शोधयित्वा चूर्णीकृत्य संयोज्य त्रिरात्रं वासयेत्। सुनक्षत्रे मुहूर्ते चालयाभिमुखे गार्हपत्याग्निं च कृत्वाधारं हुत्वाग्नेः पश्चिमस्यां पूर्ववद् धान्यपीठे नववस्त्रे मृदं संन्यस्य आलेख्यो नम इत्यभ्यर्च्याधिवास्याग्निं परिस्तीर्य महीसूर्यमहीसूक्तं भूमिर्देवत्यं विष्णुसूक्तं पुरुषसूक्तं वैष्णवं मुनिभ्यां मन्त्रं हुत्वा मातृभ्यः स्वाहेत्यष्टोत्तरशतं जुहोति । आचार्यं पूजयित्वा देवं ध्यायन् एकाक्षरादिनाभिमृश्य मेदिन्यादीनुच्चार्य पारमात्मिकं जप रज्जुबन्धो परिष्टाद्गुतमाङ्गादिमहाङ्गेषु मृदालिप्य पश्चाच्छिलिपनमाहृत्य पूजयित्वा सर्वाङ्गकरगीकयागालिप्य पुनरपि रज्जुं तथाबध्य पश्चान्मृदं संयोज्य तन्मृदोर्ध्वं रज्जून् योजयेत् । तदूर्ध्वे रत्नानि विन्यसेत् । हृदये पद्मरागं ग्रीवायां मौक्तिकं बाह्वोर्वैडूर्यं नाभौ ब्रह्ममणिं मेढ्रे सौवर्णं पादयोः पुष्यरागं दक्षिणे नयने सूर्यकान्तं वामे चन्द्रकान्तं दक्षिणकर्णे वज्रमणिं वामे शङ्खजं नासिकापुटयोरमृतात्मकं हृत्वास्ये प्रवालं च पारमात्मिकं च जप्त्वा संन्यसेत् । मासातीते शर्करकल्कं संलेपयेत् ॥

शर्कराग्रहणम् । पुण्यक्षेत्रसमीपस्थे नदीतीरे वान्ये मनोरमे मध्ये देशे खनित्वाहृत्य प्रक्षाल्य संशोध्य चूर्णीकृत्य त्रिफलोदकेन सिञ्चेत् । शनैः शनैः शोषयित्वा कपित्थनिर्यासतोयेनालोड्य कार्पासतूलसंयुक्तमिति सूक्ष्मं सुश्लक्ष्णं समालोड्याग्नेयस्थ्याग्निकुण्डं कृत्वाघारं हुत्वा पूर्ववद् धान्यपीठे नववस्त्रोपरि शर्करां संन्यस्य रुधिराय नम इत्यभ्यर्च्याधिवास्याग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं शान्तिहोमं हुत्वा रुधिराय स्वाहेत्यष्टोत्तरशतं जुहोति । पर्षदं हुत्वा विष्णवे श्रियै हिरण्यै चिरायुषाय ख्यातीशाय गरुडाय चक्राय शङ्खाय भूतेभ्यः सर्वाभ्यो देवताभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा

एवं पार्षदमग्निं विसृज्याचार्यदक्षिणां दत्त्वा शर्करामग्निरिन्द्रादीनां विमृश्य पूरुषसूक्तेन शर्करामालेपयेत् । पश्चाच्छिल्पिनमाहूय सम्पूज्य तत्कल्केन बेरं सर्वाङ्गमालिप्यैवं मासं प्रतिशुष्कं संलक्ष्याच्छाद्य तत्कल्केन निर्यासाम्बुनाङ्गोपाङ्गान्यथायोगं यथामात्रं चूर्णं तथा कृत्वा पुनः शुद्धकार्पाससूक्ष्मवस्त्रं समाहृत्य पूर्ववत् सभ्याग्निकुण्डं कृत्वाघारं हुत्वा पूर्ववद् धान्यपीठे नववस्त्रे ग्व..................इत्यभ्यर्च्याधिवास्याग्निं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं सहस्राहुतीर्हुत्वा त्वचे स्वाहेत्यष्टोत्तरशतं हुत्वा सर्वदैवत्यं जुहुयात् । अग्निं विसृज्याचार्यदक्षिणां दत्त्वा विष्णुगायत्र्या बेरं प्रोक्ष्य सोमस्य तनूरसि संयोज्य पश्चाच्छिल्पिना दृढं विवरं समाच्छाद्य कल्कं प्रलिप्य पश्चाद् भूषणानि भूषयेत् । बेरे शैलं दारवे च शर्करादीनेव कारयेत् । तद्बाह्ये मौक्तिकमृदमालिप्य तद्बेरोपरिष्टाच्चक्षुःश्रोत्रादिमार्गेषु च भेद्यं न हीनं नाधिक्यं यथापूर्वं तथैव कल्केन परिकल्पयेत् । अन्यथा तद्बेरे तं देवं निवसेत् । यजमानस्य चक्षुश्छिद्रेऽन्धत्वं कर्णे बधिरत्वमास्ये छिद्रे मूकत्वं प्रपादेषु मार्गच्छिद्रे प्रथमे कुष्ठादिव्याधियुक्तं धनधान्यादेर्नाशनं चाचिरादेव भवेत् । महाङ्गोपाङ्गप्रत्यङ्गभेदे स्थानभ्रंशो भवेत् । तस्मात् पूर्वं परिहृत्यैव कारयेत् ॥

अथ वर्णसंस्कारं कुर्यात् । देवेशस्याङ्गांश्वेतसौवर्णं श्यामाञ्जनं च सर्वेषां श्यामवर्णेन वा कारयेत् । सर्ववर्णानि सङ्ग्राह्य पृथक् पृथक् पात्रे कपित्थनिर्यासाम्बुना सम्पेष्य गृहीत्वा पौण्डरीकाग्निकुण्डं कृत्वाघारं हुत्वा पूर्ववद् धान्यपीठे वस्त्रोपरि वर्णान् संन्यस्य जीवाय नम इत्यभ्यर्च्याग्निमधिवास्याग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं पारमात्मिकं पर्षदं च हुत्वा जीवाय स्वाहेत्यष्टोत्तरशतं जुहोति । हिरण्यगर्भ इति वर्णमभिमृश्यात्मसूक्तं जप्त्वातो देवादिना हेमपात्रे वर्णं गृहीत्वा त्र्यधिघोषणं कारयित्वा विष्णुसूक्तं पुरुषसूक्तं च जप्त्वा तूलिकाग्रे वर्णमादाय सहस्रशीर्षमिति देवस्य ललाटवर्णं संलेपयेत् । आचार्यं पूजयित्वा पुण्याहं वाचयित्वाग्निं परिस्तीर्य शान्तिहोमं हुत्वाग्निं विसृज्य पश्चाच्छिल्पिनं सम्पूज्य शिल्पिना तदर्हं वर्णं संलेपयेत् ॥

अत्यन्तसुन्दरं दर्शनीयं यथोक्तविधिना संलेख्य पश्चादेवमेव संस्कारं कृत्वा सुवर्णसहितं वर्णं संलेपयेत् । पश्चाच्छक्तियुतं भवतीति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते ध्रुवबेरवर्णसंस्कारविधिर्नाम चतुर्दशः पटलः ॥

## अथ पञ्चदशः पटलः ।

अथ ध्रुवबेरं त्रिविधम् । स्थानकमासनं शयनं चेति । पुनस्तदेकैकं चतुर्विधम् । योगं भोगं वीरमाभिचारिकं चेति । योगार्थी योगमार्गं, भोगार्थी भोगमार्गं, वीर्यार्थी वीरमार्गं, राज्ञां शत्रुजयार्थी चाभिचारिकामिति । ग्रामाद् बहिर्विविक्तदेशे नदीतीरे तत्सङ्गमपर्वते च वने वनपार्श्वे योगस्थानम् । ग्रामाभ्यन्तरे भोगस्थानकम् । बाह्ये वा वीरस्थानकम् । वनगिरिजलदुर्गे राष्ट्रान्तरे शत्रुदिक्षु दिङ्मुखे चाभिचारकस्थानकम् । विमानं नलिनकाविमलाकृति सर्वतोभद्रं नन्द्यावर्तं श्रीप्रतिष्ठितं स्वस्तिकं भद्रं पद्माकारं गेहं योगरत्नं योगकान्तमित्यादि समचतुरश्रमायताश्रं वृत्तं वृत्तायतं च स्थानकस्याष्टभागं सर्वतोभद्रं शिल्पं महापद्मं वृत्तं चतुर्मुखं दिशस्वस्तिकं चतुःस्फुटं पर्वताकारं खण्डहर्म्योद्योगपद्मसमचतुरश्रं समवृत्तं वासनस्य, स्वस्तिकं वृत्तभद्रं वृत्ते गेहं वेदिकं प्रेक्षागृहं महाराजच्छदं श्रीप्रतिष्ठितकं शनैर्योगमत्रखण्डं गणिकाविशालमेवाद्यायताश्राणि वर्तुलायतानि वा शयनस्य, स्थानके विमाने स्थानकं बेरमासने त्वासनं सर्वतः स्थानमासनं यानकं वा शयानं कर्तव्यमन्योन्ययोः शयानेनैव कल्पयेत् ॥

शयनागारद्वारविस्तारं पादयोरन्तरे तत्पादोदयाष्टांशोनद्वारोत्सेधमेवमासनागारे स्थानके वा कारयेदित्येके । सविमानानां ध्रुवबेरोक्तमानेष्विष्टमानं विनिश्चित्य सलक्षणं बेरं कृत्वा गर्भागारं कृते पदे दैविके स्थानकं यानकं किञ्चिद् दैविकमाश्रित्य मानुषांशे शयानं स्थापयेत् । प्राग्द्वारं सर्वसम्पत्करं पश्चिमं कीर्तिदं दक्षिणं जयदमुत्तरं ज्ञानदम् । प्राक्शीर्षं शान्तिदं, पश्चिमं शीर्षं पुष्टिदं दक्षिणं शीर्षं जयद-

मुत्तरशीर्षमाभिचारिकम् । ग्रामाद् दक्षिणे शयानमुत्तरद्वारं चेद् देवं प्राक्शीर्षं पश्चिमे प्राग्द्वारं दक्षिणे शीर्षमुत्तरे दक्षिणद्वारं पश्चिमशीर्षं प्राच्यां पश्चिमद्वारे दक्षिणशीर्षमुत्तरपादमेव कारयेत् । स्थानकासनशयनानां ग्रामप्रेक्षमेव कारयेत् ॥

देवेशं श्यामाभं चतुर्भुजं शङ्खचक्रधरं दक्षिणमभयं वामं कट्यवलम्बितं दक्षिणं चैकजानुनासीनं भृगुमार्कण्डेयं तथैव भूमिपुण्यार्चिते वा दक्षिणे भित्तिपार्श्वे ब्रह्माणमुत्तराभिमुखं चतुर्भुजमक्षमालाकमण्डलुकट्यवलम्बितस्थितमेवोत्तरे भित्तिपार्श्वे शङ्करं चतुर्भुजं मृगपरशुधरमभयकट्यवलम्बितस्थितं दक्षिणाभिमुखं स्थितमेव कारयेत् । उत्तमं योगस्थानकं पूजकमुनिभ्यां चक्रशङ्खाभ्यां हीनमधमं द्वितीयं भोग- ........ चतुर्भुजं श्यामाभं शङ्खचक्रधरं दक्षिणमभयं वरदं वामं कट्यवलम्बितं सिंहकण्ठं वा तथा ब्रह्मेशं दक्षिणे श्रीदेवीं प्रवालाभां स्थितं दक्षिणपादं वामं किञ्चित् कुञ्चितं दक्षिणे करे कमलधृतां वामं प्रसारितदेवं किञ्चित् समीक्ष्य वामे श्यामाभां दक्षिणहस्तं प्रसारितमन्येनोत्पलधृतां वामपादं किञ्चित् कुञ्चितदेहं किञ्चित् समीक्ष्य देव्योर्हस्तपादयोरेतद्विपरीतं तद्विपरीतं वा कारयेत् । कुड्यकौतुकयोर्मध्ये दक्षिणे भृगुमेकजानुमासीनमुत्कुटिकासनं वा वामे तथा पुराणमपरभित्त्यूर्ध्वभागे मायासंह्लादिनीभ्यां व्याजकमुनिभ्यां तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां युक्तमुत्तमं भोगस्थानकम् । तुम्बुरुनारदाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम् । सनकसनत्कुमाराभ्यामादित्यचन्द्राभ्यां पूजकमुनिभ्यां हीनमधमम् । तृतीयं वीरस्थानकं देवं देव्या सह चतुर्भुजं शङ्खचक्रधरं दक्षिणवामयोर्ब्रह्मेशाभ्यां भृगुपुण्याभ्यां किष्किन्धसुन्दराभ्यां व्याजकाभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां संयुक्तमुत्तमं वीरस्थानकम् । किष्किन्धसुन्दराभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमं वीरस्थानकम् । आदित्यचन्द्राभ्यां पूजकमुनिभ्यां हीनमधमं वीरस्थानकम् । चतुर्थमाभिचारिकस्थानकं देवं द्विभुजं चतुर्भुजं वा धूम्रवर्णं श्यामवस्त्रधरं शुष्कवक्त्रं शुष्काङ्गं तमोगुणान्वितं नेतृब्रह्मादिदेवैर्विवर्जितविमानं लक्ष-

णहीनं देवं पैशाचपदस्थमार्द्राद्यनुक्तनक्षत्रे शर्वर्यां चरराशौ स्थापित-माभिचारिकस्थानकमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते योगादिस्थानविधिर्नाम
पञ्चदशः पटलः ॥

---

## अथ षोडशः पटलः ।

अथ योगासनम् । देवेशं श्वेताभं पीतवाससं चतुर्भुजं जटामौलिं श्वेतपद्मासनासीनं दक्षिणे ऊर्ध्वमन्यमधःस्थमेव ब्रह्मासनमासीनमासयित्वाङ्के वामावामकरौ पल्लवौ विन्यस्यान्यहस्तौ शङ्खचक्रौ विना नाक्रौ श्वेतवस्त्रोत्तरीयः सोपवीती कुण्डलाङ्गदहाराद्याभरणभूषितमीषन्निमीलितलोचनं भित्तिपार्श्वे दक्षिणे ब्रह्माणमुत्तरे शङ्करमूर्ध्वभागे चन्द्रादित्यौ सनकसनत्कुमारौ चक्रौ तु दक्षिणे भृगुं वामे मार्कण्डेयं तथा महीमार्कण्डेयाभ्यां संयुक्तमुत्तमं योगासनम् । भृगुमार्कण्डेयाभ्यां हीनं मध्यमम् । चन्द्रादित्याभ्यां हीनं सनकसनत्कुमाराभ्यां हीनमधमं योगासनम् । देवं सिंहासनसमासीनं श्यामलाङ्गं चतुर्भुजं शङ्खचक्रधरहस्तं दक्षिणमभयं वरदं वा पा ........पल्लवं कटिन्यस्तं सिंहकर्णं पादे न्यस्य दक्षिणे श्रियं वामपादमाकुञ्च्य दक्षिणं प्रसार्य सिंहासने समासीनामेतयोर्वामदक्षिणकरौ पद्मोत्पलधरावन्यहस्तौ सिंहासने निहितौ सिंहकर्णौ वा तद्विपरीतं वा दक्षिणे ब्रह्माणमुत्तरे शङ्करं तथासयित्वा दक्षिणे मार्कण्डेयं वामे भृगुमेकजानुक्रमेणासयित्वान्यान्भोगस्थानकवन्मायासंह्लादिनीभ्यां तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचन्द्राभ्यां देवदुमसमायुक्तमुत्तमं भोगासनम् । तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम् । सनकसनत्कुमाराभ्यामादित्यचन्द्राभ्यां पूजकमुनिभ्यां हीनमधमं भोगासनम् ॥

तृतीयं वीरशयनं चतुर्भुजं शङ्खचक्रधरं दक्षिणमभयं वामं सिंहकर्णवत् प्रवालाभं श्यामाम्बरधरं पूजकस्थाने दक्षिणे श्रीदेवीं वामे महीदेवीमेकजानुक्रमेणासयित्वा दक्षिणे ब्राह्मणं मनुं च वामे शङ्करं

भृगुं च गीर्वाणीं चामरधारिण्यौ सनकसनत्कुमाराभ्यां तुम्बुरुनारदाभ्यां सूर्यचन्द्राभ्यां सहितमुत्तमं वीरासनम् । ब्रह्मशङ्कराभ्यां तुम्बुरुनारदाभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमम् । व्याजनीभ्यां सूर्यचन्द्राभ्यां पूजकस्थाने देवीभ्यां हीनमधमं वीरासनम् ॥

चतुर्थमाभिचारिकासनेनासीनं द्विभुजं चतुर्भुजं वा नीलाभं श्यामवस्त्राधारं तमोगुणान्वितमूर्ध्वाक्षं देवादिदेवानां विना लक्षणहीनं विमानेशादिकमुखे कृष्णाष्टम्यामार्द्राद्यनुक्तनक्षत्रे रात्रौ गर्भालये पैशाचपदे चरराशौ स्थापितमाभिचारिकासनम् ॥

सिंहासनोच्चं, द्वारोत्सेधं वा द्वादशभागं कृत्वा षडंशमुत्तमं, पञ्चांशं मध्यमं चतुरंशमधमम् । द्विपञ्चाशदङ्गुलोत्तुङ्गमुत्तमम् । षट्चत्वारिंशदङ्गुलं मध्यमम् । चत्वारिंशदङ्गुलमधमम् । पद्मासनस्योत्सेधं सिंहासनात् तुरीयांशं तस्योत्सेधं पञ्चधाकृत्यैकांशं तदाधारं कम्पं त्र्यंशम् अधोर्ध्वे तयोरूर्ध्वाधःशतपत्रैः संयुक्तमेवं पद्मासनम् । सिंहासनस्योत्सेधं द्वात्रिंशदंशं कृत्वा त्र्यंशं पादुकं तस्योर्ध्वे चैकांशं पद्मं तस्योपरि त्र्यंशं जगती तदूर्ध्वे चैकांशं पद्मं त्रिभागं कुमुदं तस्योपरि चैकांशं पद्ममूर्ध्वे चैकांशं कम्पं तदूर्ध्वे तुरीयांशं कम्पं तस्याधस्तादुभौ सिंहौ सदृशौ च कारयेत् । आसनस्थं देवस्य । अत्रानुक्तं सर्वं शिल्पशास्त्रोक्तविधिना कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते योगासनविधिर्नाम
षोडशः पटलः ॥

---

## अथ सप्तदशः पटलः ।

योगशय्यामूर्तिं वक्ष्ये । दिव्यं द्विभुजमर्धार्धशयनं पीतश्यामं दक्षिणे हस्तमुपधा(या)नेन स्कन्धमौलिसीमान्ते समुद्धृतसम्यक्प्रसारितमन्यहस्तं सम्यक्कुञ्चितकोर्परमूर्ध्वं कृत्वा कटकाङ्गुलीययुतमथवा तदूरुप्रसारितपादं दक्षिणदक्षिणं प्रसार्य वामं किञ्चित् कुञ्चितं सर्वाभरणभूषितं किञ्चिदुन्मीलद्लोचनं भृगुपुण्यार्चितं पार्श्वे मधुकैटभसंयुक्तं नाभ्यम्बुजसमासीनं ब्रह्माणं पञ्चायुधान् गरुडं विष्वक्सेनं सप्तऋषींश्च

परिभित्पूर्वभागे प्राञ्जलीकृत्य स्थितान् दक्षिणे भित्तिपार्श्वे ब्रह्माणं वामे शङ्करमासीनमेव कारयेत् । एतदुत्तमं योगशयनम् । सप्तर्षिविष्वक्सेनान् विना मध्यमम् । पूजकमुनिभ्यां मधुकैटभान् विहायाधमं विज्ञायते ॥

द्वितीयं भोगशयनं देवेशं श्यामलाङ्गं सुपुष्टाङ्गं चतुर्भुजं वार्धोर्ध्वशयितं गात्रं चलवद्धस्तं दक्षिणमुपधाने निहितालम्ब्य मुकुलं किञ्चित् प्रसारितं वामहस्तं वामोरौ प्रसारितं दक्षिणपादं प्रसार्य वामं किञ्चित् कुञ्चितपादयोरन्तरं विंशत्यङ्गुलं पार्ष्ण्यन्तरभागं जान्वोश्चतुर्दशाङ्गुलं ब्रह्मसूत्राद् दक्षिणे मुखं त्र्यङ्गुलं तिर्यग्गतं शिरःपार्श्वे श्रीदेवीं देवस्य बाहुसंस्पर्शां हस्तं दक्षिणं सपद्ममन्यत् कटकं पादपार्श्वे महीदेवीं वामाङ्घ्रिसंस्पर्शां हस्तेन दक्षिणेनोत्पलधृतां वामहस्तं कटकं कौतुकं दक्षिणे मार्कण्डेयं वामे भृगुं दक्षिणे भित्तिपार्श्वे चासीनं ब्रह्माणं वामे शङ्करं च दक्षिणे वक्रतुण्डं वामे विष्वक्सेनं पादपार्श्वे मधुकैटभावुग्रवेगसमन्वितौ समुद्रतरङ्गच्छादितानुभोगिनोऽनन्तस्य विषज्वालाभिर्दग्धतमौ च कारयेत् ॥

नाभिपद्मे समासीनं ब्रह्माणं तद्दक्षिणे पञ्चायुधान् गरुडोपरिष्टाद् दक्षिणे भास्करं दक्षिणे निशाकरं तथा वाल्मकपिणौ दक्षिणे तुम्बुरुनारदौ अदक्षिणेऽश्विनावष्टलोकपालकांस्तथाप्सरसश्च संयुक्तमुत्तमं भोगशयनम् । तुम्बुरुनारदाभ्यामश्विभ्यां लोकपालैर्विना मध्यमम् । पूजकर्षिभ्यामप्सरोभिर्विनाधमम् ॥

तृतीयं वीरश(य)नम् । श्यामाभं चतुर्भुजं शङ्खचक्रधरं सव्यशिरोपधानं वामहस्तं प्रसारितं प्रसारितं पादपार्श्वे श्रीभूमिभ्यां पादमर्दकाभ्यां मधुकैटभाभ्यां संयुक्तं कौतुकं दक्षिणे मार्कण्डेयं वामे भृगुं नाभिपद्मे समासीनं ब्रह्माणं पञ्चायुधान् गरुडं चन्द्रादित्यौ सप्तर्षयो द्वादशादित्या एकादश रुद्रा जयाद्यप्सरसस्तुम्बुरुनारदाभ्यां किन्नरमिथुनाभ्यां स सनत्कुमाराभ्यां संयुक्तमुत्तमं वीरशयनम् । रुद्रादित्यैरप्सरोभिर्मुनिभिर्विना मध्यमम् । किन्नरमिथुनाभ्यां सनकसनत्कुमाराभ्यां पूजकमुनिभ्यां हीनमधमम् ॥

चतुर्थमाभिचारिकशयनम् । शेषशयनं लक्षणहीनं द्विफणं द्विवलयमनुन्नतशिरःपार्श्वे देवं नीलाभं चतुर्भुजं वासमगयनं महानिद्रासमायुक्तं शुष्कवक्त्रं शुष्काङ्गं श्यामवस्त्रधरं सर्वदेवानकविना चोत्तरमुखमाभिचारिकशयनम् । एकफणमेकशयनं मध्यमम् । सर्पदेहं विना समस्थलशयनमधमम् ॥

अनन्तशयनस्योत्सेधं बेरायामं द्वारोत्सेधं वा त्रिधाकृत्यैकांशं मध्यमं, तदष्टांशाधिकमुत्तमं, तदष्टांशोनमधमम् । षट्त्रिंशदङ्गुलं मध्यमं, चतुर्विंशदङ्गुलमधमम् । शिलामये शिलाभिर्मृण्मये चेष्टकाभिस्तस्योत्सेधमष्टधा विभज्य द्विभागं शिरोभागोच्चं तन्मध्यं त्र्यङ्गुलमेवं योगशयनस्योत्सेधात् षड्भागं कृत्वा द्विभागं शिरोच्चं तन्मध्यनतं पञ्चाङ्गुलं भोगशयनस्योत्सेधं सप्तधाकृत्य द्विभागं शिरोदयं मध्यनतं चतुरङ्गुलं वीरशयनस्य फणानां पञ्चसप्तनवानां वा हेमाभान् समाहितानधस्ताच्छ्वेतवर्णान् त्रिरावृत्य तल्पीकृत्य मकुटोपरि सञ्छन्नफणान् व्यालसम्मुखानन्तस्याङ्गमध्ये शिखामणिमनन्तशयनस्य सव्याशालं द्वि तदेव बेरमुभौ पार्श्वे वा देवं यथोचितं नीत्वैव शयनमुपरि कल्पयेत् ॥

नाभिसूत्राद् दक्षिणे चोपरिष्टाद् हस्तमात्रे हि भित्तिमाश्रित्य नाभ्यम्बुजसमासीनं ब्रह्माणं तस्याम्बुजस्य विस्तारमष्टदशाङ्गुलं तदष्टांशोनमूर्ध्वदलविशालं तस्योत्तरवत् कर्णविशालमधोदलं चतुरङ्गुलं चतुरङ्गुलमूर्ध्वदलं नतं त्रिमात्रं कर्णिकायुक्तमूर्ध्वाधः शतपत्रैर्युक्तं तस्य नालमध्यर्धाङ्गुलपरिणाहं नालस्य दक्षिणे बलावर्णयुतं बालवर्णविशालं तस्येतरवर्णविशालमधः पद्मविस्तृतं समं तयोर्नालमेकाङ्गुलपरीणाहं तत्पद्मकर्णिकामध्ये ब्रह्माणं जटामकुटं हिरण्यवर्णं पुष्पाम्बरधरं सर्वाभरणभूषितमुपवीतोत्तरीयाभ्यां संयुक्तं ब्रह्मासनेनासीनं हस्तयोर्दक्षिणं पूर्वमालोच्य करं वामं कटिविन्यस्ताभ्यां प्राञ्जलीकृत्य वा कारयेत् । अथवा स्वाङ्के वामावामकरौ तौ विसृतौ संन्यस्यासयित्वा ध्रुवबेरायामाद् दशांशैकांशं तालं तत्तालस्यादित्यैकांशमङ्गुलमेतेन ब्रह्मादिदेवानां भित्तिमाश्रित्य सकलमाभासं वा कारयेत् ॥

ब्रह्माणं तालपञ्चायुधानां षण्मात्रं द्वितालं द्विभुजं कर्णिकामुकुटादिभूषणं धृतवेगेनोद्दिश्यकरवामं दक्षिणप्रहरणं तथा गरुडं सुवर्णाभं

चक्रं पुंरूपं रक्ताभं शङ्खर ······ मीभूताकारं श्वेताभं शार्ङ्गं नपुंसकं पीताभं गदां रक्ताभं स्त्रीरूपं खड्गं श्वेताभं पुंरूपं तत्तन्मूर्ध्नि संयुक्तं तत्तालेन मधुकैटभौ चन्द्रादित्यादि श्वेतातिरक्तौ त्रितालोन्नतौ सनकसनत्कुमारौ बालरूपेण वकुलफलाभौ द्वितालोन्नतौ तुम्बुरुनारदौ त्रितालौ पीतरक्ताभौ किन्नरमिथुनौ पीताभौ अर्धतालौ षट्तालेन विसनं रक्ताभं तथा श्यामाभौ दुर्गार्षयः द्व्यर्धतालेन तथाप्सरसश्च त्रयस्त्रिंशद्देवानिन्द्रादिलोकपालानां चतुस्तालेन कारयेत् । देवस्य बाहुमानं स्तनान्तं वा देव्योर्मानम् । तथा पूजकौ ब...........शौ देवस्याष्टांशोनमेव कारयेत् । अत्रानुक्तं शिल्पशास्त्रोक्तविधिना कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते स्थानकासनशयनादिभेदो नाम सप्तदशः पटलः ॥

## अथाष्टादशः पटलः ।

अथोर्ध्वं देवेशस्य देव्यादीनां वर्णवाहनकेत्वादीन् व्याख्यास्यामः । वर्णवाहनकेतुनामनक्षत्रपत्नीबीजाक्षरादीन् ज्ञात्वार्चयेत् । अन्यथाचेदसुरा गृह्णीयात् । देवेशस्य युगानां क्रमेण कृतयुगे श्वेतवर्णं त्रेतायुगे रुक्माभं द्वापरे रक्ताभं कलौ श्यामाभं सर्वेऽपि श्यामं वा । सर्वेषां वर्णानां श्यामं मुख्यम् । तस्माच्छ्यामवर्णं पीताम्बरधरं किरीटकेयूरहारप्रलम्बयज्ञोपवीतश्रीवत्साङ्कं चतुर्भुजं शङ्खचक्रधरं पूर्वाभयकट्यवलम्बितहस्तौ गरुडध्वजवाहनोङ्कारबीजश्रवणजं पञ्चशब्दरवो दक्षिणवामयोः श्रीभूमिसहितं विष्णुं महाविष्णुं सदा विपिक्तं व्यापिनमिति चतुर्मूर्तिमन्त्रैरर्चयेत् । अथवा पञ्चमूर्तिमन्त्रैरर्चयेदिति केचित् ॥

प्राच्यां पूरुषं प्राङ्मुखं श्वेताभं श्वेताभं पीतवामा श्रीमेदिनीभ्यां संयुक्तं पुरुषं पुरुषात्मकं परं पुरुषं धर्ममयमिति आग्नेय्यां कपिलं प्राङ्मुखं श्वेताभोऽष्टहस्तौ दक्षिणेनैकमभयमन्यच्चक्रामिहलधरो वामेनैकं कट्यवलम्बितमन्यच्छङ्खरागदण्डधरो रक्तवामा सवित्रीयुक्तं कपिलं कपिलं मुनिवरं शुद्धं वेदरूपिणमिति दक्षिणे दक्षिणामुखोऽञ्जनाभं पीताम्बरधरं धृतिपौष्टिगभ्यां सहितः सत्यं सत्यात्मकं ज्ञानमयं संहारमयामिति, नैर्ऋत्यां पश्चिमामुखस्तप्तचामीकराभश्चतुरश्रगो द्विशीर्षः सप्त-

हस्तः शङ्खचक्राज्यदर्वीस्रुक्स्रुवजुहूपधरस्त्रिपादो रक्तवस्त्रः सर्वाभरणभूषितो दक्षिणवामयोः स्वाहास्वधायुक्तो यज्ञो यज्ञेशं सर्वदेवमयं पुण्यं सर्वक्रतुवरमिति पश्चिमे कनकाभं श्यामाम्बरपवित्रीक्षोणीभ्यां युक्तोऽच्युतोऽच्युतमपरिमितमैश्वर्यं श्रीपतिमिति वायव्ये पश्चिमामुखं श्यामाभं पीताम्बरधरं कमलाधराभ्यां युक्तो नारायणो नारायणं जगन्नाथं देवदेवं त्रयीमयमिति, उत्तरे उत्तरामुखः प्रवालाभो नवसप्तपञ्च वा फणाश्रितोऽनन्तोत्सङ्गासीनं पुष्पाम्बरं प्रमोदायिनीमहीयुक्तोऽनिरुद्धोऽनिरुद्धं महान्तं वैराग्यं सर्वतेजोमयमिति, ऐशान्ये प्राङ्मुखस्तरुणादित्यसङ्काशः श्वेतवस्त्रोत्तरीयोपवीती दक्षिणवामयोरिन्दिराधरित्रीभ्यां पुण्यः पुण्यं पुण्यात्मकं पुण्यमूर्तिं पुण्यदायिनमिति ॥

द्वितीयावरणे प्राच्यां वराहः प्राङ्मुखः श्यामाभो रक्ताम्बरो वाराहाननः श्रीभूमिसहितो वाराहो वाराहं वराहं वरदं वज्रदंष्ट्रिणं भूमिसन्धारणमिति ॥

आग्नेय्यां प्राङ्मुख इन्दीवराभो हेमाम्बरः कमलावनीभ्यां युक्तः सुभद्रः सुभद्रं सुमुखं सुप्रदं सुखदर्शमिति ॥

दक्षिणे नृसिंहः श्वेताभो रक्तवस्त्रश्चतुर्भुजः शङ्खचक्रधरोऽभयकट्यवलम्बितहस्तः सिंहाननः श्रीभूमिसहितो नारसिंहं तपोनाथं महाविष्णुं महाबलमिति ॥

नैर्ऋत्यां पश्चिमामुखो हेमाभः श्यामाम्बरः पद्मास्थिराभ्यां युक्त ईशितात्मेशं वरदं सर्वेशमीशितात्मेशमिति ॥

पश्चिमे पश्चिमामुखो वामनो ब्रह्मचारी वकुलफलाभो द्विभुजछत्रदण्डधरः समेखलः कौपीनवासाः सोपवीतकृष्णाजिनधरः पवित्रपाणिर्वामनो वामनं वरदं काश्यपमादितिप्रियमिति ॥

वायव्ये पश्चिमामुखो नीलाभः पीताम्बरधरो लक्ष्मीधरणीभ्यां युक्तः सर्वोद्वहः सर्वेशं सर्वाधारं सर्वज्ञं सर्वोद्वहमिति ॥

उत्तरे उत्तरामुखस्त्रिविक्रमः श्यामश्चतुर्भुजः शङ्खचक्रधरः पीताम्बरधरो वामपादस्थितदक्षिणपादललाटान्तोद्धृतदक्षिणमुत्तानपादेन सह प्रसारितो वामं कट्यवलम्बितं त्रिविक्रमस्त्रिलोकेशं सर्वाधारं वैकुण्ठमिति ॥

ऐशान्ये प्राङ्मुखो रक्ताभः श्यामाम्बरः कनकाश्यामाभ्यां सहितः सर्वविघ्नेश्वरः सर्वविघ्नेश्वरं पुण्यं शुद्धङ्गमिति ॥

पुरुषादीनामनुक्तं सर्वं विष्णोरिवेति विज्ञायते ॥

तृतीयावरणे प्राच्यां श्यामो जपाम्बरो ज्येष्ठाजः कुलिशायुधो मेघनादरवो वेणुध्वजो गजवाहनः शचीपतिर्जकारबीज इन्द्रं शचीपतिं पुरुहूतं पुरन्दरमिति ॥

आग्नेय्यां हनिजातः किंशुकपुष्पसदृशोऽनलः शक्तिपाणिः कुण्डलाङ्गदहारः शुकपिञ्छाम्बरधरः कपिलध्वजोऽजवाहनः स्वाहास्वधापतिरकारबीजः सर्वदेवमुखासीनोऽग्निरग्निं जातवेदसं पावकं हुताशनमिति ॥

याम्ये श्यामो रक्तवस्त्रधरो गदी व्यालध्वजो महिषवाहनो हरिणीजः यकारबीजः शुक्लाङ्गिगो घण्टानादरवो यमो यमं धर्मराजं प्रेतेशं मध्यस्थमिति ॥

नैर्ऋत्यां नीलाभो रक्ताम्बरः शूली भौमिकारुयेभवाहनं कृकलासध्वजः मोहिनीपतिः फकारबीजः फणरवो निर्ऋतिरम्भाधिपतिर्नीलं निर्ऋतिं सर्वरक्षोऽधिपतिमिति ॥

वारुणे नीलवर्णो रक्तवस्त्रः पाशसिंहध्वजो वरुणजः सुप्रतीकेभवाहनोऽञ्जनापतिर्वकारबीजो दत्तरवो वरुणः वरुणं प्रचेतसं रक्ताम्बरं यादस्पतिमिति ॥

वायव्ये रक्ताभः सिताम्बरो गजवाहनो वायुजो वेणुध्वजः कुमुद्वतीपतिर्दण्डभृद् यकाराक्षरबीजः शङ्खरवो वायुर्जवनं भूतात्मकं वायुमुतानमिति ॥

उत्तरे श्येतवर्णः श्यामाम्बरो दण्डी नरपुष्पवाहनः कृकलासध्वजः ककारबीजो यवनलापतिस्तिध्वजो मृदङ्गरवः कुबेरः कुबेरं धन्यं पौलस्त्यं यक्षराजमिति ॥

ऐशान्ये पाटलाभः सिताम्बरो वृषध्वजवाहनो जटामौलिश्चतुर्भुजस्त्रिणेत्रः शूलपाणिः शकारबीज आर्द्राजः पार्वतीशो डमरुध्वनिरीशानमीश्वरं देहवं भवमिति ॥

इन्द्राद्यष्टाभ्यन्तरमुखाः । एतेष्वनिरुद्धं त्रिविक्रमं वामनं च विना ध्रुवे स्थिते स्थितमासीनं त्वासीने शयानं शयनके च तत्तत्कौतुकवद् ध्यायन्नर्चयेत् ॥

देवस्य दक्षिणे रुक्माभा क्षौमाम्बरा पद्महस्ता द्विभुजाकक्ष्याबन्धघनस्तनललाटोपरि पुष्पचूडा किरीटमुक्ताहारिसर्वाभरणसंयुक्ता श्रीवत्सादिबीजा फाल्गुनोत्तरजा मणिध्वनिरवा श्रीः श्रियं धृतिं पवित्रीं प्रमोदायिनीमिति ॥

वामे श्यामाभा रक्ताम्बरा रक्तोत्पलधरा मकुटादिसर्वाभरणसंयुक्ता वैशाखे रेवतीजा लक्ष्मीपूर्वक्षराधिपा शङ्खजरवा भूः हरिणीं पौष्णीं क्षोणीं महीमिति ॥

पुरुषाद्यादिदेवानां श्रीभूम्योरिति विज्ञायते ॥

क्रमाच्चास्थाने पीठोपरि प्राच्यां पूर्वं सुभद्रं पूर्ववदाग्नेय्यां प्राङ्मुखः सर्ववर्णः पीताम्बरः सकलाविश्वाभ्यां युक्तः सर्वः सर्वं विश्वंसर्वाधारं सर्वेशमिति ॥

दक्षिणे दक्षिणामुखोऽभयात्मश्वेतः पीतवासा हयानन इलावीशाभ्यां सहितो हयात्मको हयात्मकं देवेशं सर्वानन्दं सनातनमिति ॥

नैर्ऋत्यां पश्चिमामुखः सितवर्णः श्यामाम्बरो विमलाभ्यां युक्तः सुखावहः सुखावहं सुमुखं सुरेशं सुरप्रियमिति ॥

पश्चिमे पश्चिमामुखो रामदेवः कनकाभो नीलाम्बरः शङ्खचक्रधरो ब्राह्मीविजयाभ्यां सहितो रामदेवो रामदेवं महाबलं महाभद्रं परशुपाणिनमिति ॥

वायव्ये पश्चिमामुखः किंशुकपुष्पाभः सिताम्बरः सुभागासुमुखाभ्यां संयुक्तः संवहः संवहं सर्वतेजोमयमानन्दं सर्वरूपिणमिति ॥

उत्तरे चोत्तरामुखः पुण्यमपि पूर्ववत् ॥

ऐशान्ये प्राङ्मुखोऽग्निवर्णः सिताम्बरः सुमताज्ञानिभ्यां युक्तः सुवहः सुवहं सुकृतं विज्ञानं देवमयमिति । सुभद्रादीनामनुक्तं विष्णोरेवेति विज्ञायते ॥

द्वितीयावरणे गजवाहन ऊर्ध्वजो मित्रेशारुवाहने जुहूध्वजः सतीशोऽत्रि गजवाहनः सवारिकलशध्वजः शुभेश्वरः शिवो हयवाहनो देवध्वजः शुद्धेशो विश्वेशाः सर्वे श्यामवर्णा रक्ताम्बरा भेरीरवा रोहिणीजाता नामाद्यक्षरबीजाः पीठान्ते प्रागादिबहिर्मुखाः सनातन-सनन्दनसनत्कुमारसनकाश्चाग्नेयादिकोणेषु बहिर्मुखाः सर्वे कनकाभाः श्यामाम्बराः पद्मवाहनाः कूर्चध्वजा ब्रह्मचारिणो नामाद्यक्षरबीजाः पुष्यजाः शङ्खरवाश्च मित्रलोकहितं विश्वात्मानमुत्तरात्मानं सनातनं कनीन्द्रं ब्रह्मसम्भवनिष्ठानकं त्रिधागतिं तृतीयात्मकं वेदमूर्तिमिति ॥

सनन्दनं गुरुं सर्वत्र पूज्यं मन्त्रज्ञं शिवं कविं वरं शुद्धं सुयोक्तारं सनत्कुमारं ज्योतीशं निरुद्वेगमक्रोधं विश्वं भूतनायकं जगद्वीक्षणं सर्वमातृकं सनकनियन्तारं धर्मसर्वज्ञं समं चोदितमिति ॥

प्रागादीशानान्तमर्चयेत् तृतीयावरणे चेन्द्रादीन् पूर्ववद् दक्षिणे श्रियं वामे हरिणां च पूर्ववत् ॥

दक्षिणे भित्तिपार्श्वे रुक्माभो हंसवाहनः कमण्डलुध्वजोऽभिजिज्जातः सावित्रीपतिमकारबीजो वेदरवो ब्रह्मा ब्रह्माणं प्रजापतिं पितामहं हिरण्यगर्भमिति ॥

सुवर्णाभो ब्रह्मचारी रक्ताम्बरः पुष्पवाहः कूर्चध्वजः शङ्खरवो मकारबीजो मार्कण्डेयो मार्कण्डेयं पुण्यं पुराणममितमिति ॥

वामे भित्तिपार्श्वे श्वेताभो व्याघ्रचर्माम्बरधरः परशुमृगधरश्चतुर्भुजो वृषध्वजवाहनो डमरुकध्वनिर्मकारबीज आर्द्राज उमापतिर्गङ्गाधरमृषभवाहनमष्टमूर्त्तिमुमापतिमिति ॥

अग्निवर्णः शुक्लाम्बरः पद्मवाहनः कमण्डलुध्वजो रोहिणीजः शङ्खरवो नामाद्यक्षरबीजः ख्यातीशः पद्मापितरं धातृनाथं ख्यातीशं भृगुमिति ॥

इति श्रीवैखानसे मरीचिप्रोक्ते देवस्य देव्यादीनां
वर्णवाहनादिविधिर्नाम
अष्टादशः पटलः ॥

## अथ एकोनविंशः पटलः ।

दक्षिणे गन्धर्वस्थाने वेणुवर्णाभो रती पुष्पकेतुः सन्धिनीशोदङ्मुखो धाता वामे गन्धर्वस्थाने शुकपत्राभो गजवाहः सर्पध्वज ऊर्ध्वेशो दक्षिणामुखः विधाता द्वारदक्षिणे शिर उत्तरपाद ऊर्ध्वमुखो नीलवर्णो वृषवाहनोऽग्निकेतुः प्रीतीशो भृतिं पूजनाद्यर्चनाकालादन्येन लघ्व्योपरि शिरःस्थाने पूजयेत् । तथैव पार्श्वे परिवोर्ध्वेङ्गः सन्ध्यान्ते तत्प्रमाणेश्च शुक्लाम्बरस्तुरगवाहनोऽश्वकेतुर्हरिणीश उदक्शिर अधोमुखः पतङ्गो द्वारभागे दक्षिणे सुवर्णगजवाहनो वृषध्वजो जलेशः परितो वामे सुवर्णाभो रथवाहनः शरध्वजो धरणीशो वरुणः । एता(न) नामाद्यक्षरबीजा शङ्खपार्श्वयुजादिहस्तजा धातारं डम्बिनं सतिनिलं गयवां विधातारं कीनाशमुरुण्डं न्यक्तं भृतिं भुवङ्गं उत्सङ्गं पीठं पतङ्गं उत्करं पद्मालं कपर्दिनं पतिरं अह्लितं मध्यस्थं वह्निनं वरणं तेजिनं दंसिनमिति पद च कल्प्यादं यत्रास्ति तत्रैव चार्चयेत् ॥

आलयस्य बहिः पार्श्वे प्राग्द्वारमध्ये प्राङ्मुखो दूर्वाङ्कुरवर्णो हेमाम्बरः प्रज्ञाधीशो दण्डपाणिः श्येनध्वजवाहनो रोहिणीजो नामाद्यक्षरबीजो न्यक्षो दधीलकं पीवरमध्यकमिति ॥

दक्षिणे दक्षिणामुखो रक्तवर्णः सिताम्बरोत्साधिनीपतिर्दण्डधरः पिण्डिपालध्वजो हयवाहनो मघोद्भवः सुवध्वनिः भियादिबीजो विवस्वान् विवस्वन्तं भरतं भरतं विश्वकर्माणं मरीचिमन्तमिति ॥

पश्चिमे पश्चिमामुखः शरभाभः पुष्पाम्बरः रक्तकपोतवाहनो धूमकेतुस्तालायुधो वसुप्रजानाथो विशाखजो मेघरवो नामाद्यक्षरबीजो मित्रो मित्रमित्वरं राजिष्मन्तं करणकमिति ॥

उत्तरे चोत्तरामुखो हेमाभः पुष्पाम्बरो मृगवाहनो महिषध्वजो दण्डपाणिर्वाणीपतिर्वेदरवः क्षत्ता क्षत्तारं महीधरमुर्वरोहं शेवधमिति ॥

प्रथमद्वारदक्षिणे श्वेतवर्णः शुक्लाम्बरः सुवध्वजो गजवाहनो रोहिणीजः सन्ध्यानाथः शङ्खरवो यन्त्रिकायुधो मकारबीजो मणिकः । मणिकं महाबलं विमलं विमलं द्वारपालकमिति ॥

वामे तस्य पत्नी कनकाभा सिताम्बरा पुष्पहस्ता सोपजानुकस्वररवा सकारबीजा सन्ध्या सन्ध्यां प्रभावतीं ज्योतीरूपां दृढव्रतामिति ॥

मुखमण्डपद्वारदक्षिणे स्फटिकाभो हेमाम्बरो रुरुवाहनो रुरुध्वजो दिव्येशो नामाद्यक्षरबीजो दण्डपाणिश्चतुर्भुजो वेदरवो विखनसः, विखनसं तपोयुक्तं सिद्धिदं सर्वदर्शनामिति ॥

वामे रुरुवाहनः कूर्चध्वजस्ताराद्यक्षरबीजः सन्धिनीशो वेदरवो दण्डधरो द्विभुजः पुष्यसम्भवस्तापसस्तापसं सन्धिराजं सर्वदोषविवर्जितं सहस्राश्वमेधिनमिति ॥

प्रथमावरणे द्वारदक्षिणेऽग्निवर्णः कूर्मवाहः शरध्वजो मेदिनीपतिर्नामाद्यक्षरबीजः प्रोष्ठपाज्जातो दण्डपाणिः सिंहरवः किष्किन्धः किष्किन्धं बहुमर्दं बहुदेवं दृढव्रतमिति ॥

वामे श्वेताभो रक्ताम्बरः कूर्मवाहनः शरध्वजो विशोकापतिः वेणुदण्डायुधस्तीर्थाद्यक्षरबीज आर्द्राजो अघरवस्तीर्थस्तीर्थमुद्राहकं सर्वयोग्यं मुदावहमिति । द्वितीयावरणे द्वारदक्षिणे चोत्तरामुखः प्रवालाभ एकदन्तः कण्ठादूर्ध्वं गजाकारः भूतार्थं वामनाकारं कुशध्वजं वेतङ्कवाहनं शङ्खरवः पाशहेतिश्चतुर्भुजः कदलीफलहस्तो बहुताद्यापतिः श्रविष्ठाजो वक्रतुण्डमेकदंष्ट्रं विकटं विनायकमिति ॥

तृतीयद्वारदक्षिणे शङ्खाभो नीलाम्बरो भूताकारो विशुद्धेशो हस्ताभ्यां पद्मधरः पद्मध्वजवाहनः प्रोष्ठपाज्जातः सिंहनादरवः पद्माद्यक्षरबीजः पद्मनिधिः पद्मनिधिं रक्ताङ्गं भूतनायकमिति ॥

चतुर्थावरणे रक्ताभः श्वेताम्बरो नागचूडिनं मस्तकोद्देश्यकरो भामिनीशस्तुरगवाहनोऽहिध्वजो भेरीरवस्तुकारबीजो हस्तजस्तुहेशं दैत्यराजानं विष्णुभक्तं गदाधरमिति ॥

वामे श्यामाभो रक्ताम्बरो नागचूडिनं मस्तकोद्देश्यकरः सुधापतिर्व्याघ्रवाहनः सर्पध्वजो बल्यादिबीजो बलिदः अदेयहेयं महावीर्यं बलिदं शूलपाणिनमिति ॥

पञ्चमावरणद्वारदक्षिणे रक्ताभो नीलाम्बरः शिरसि खड्गभृतो वायुवाहनोऽनिलध्वजो घोररवः स्वातिजातो वलेशः खकारबीजो नन्दकः नन्दकं खड्गं पापहरं दैत्यनाशनमिति ॥

वामे पञ्चवर्णैर्युक्तं श्वेताम्बरं नपुंसकं शिरसि पाशभृतं मेघवाहनं शरध्वजं महानादरवं विशाखजं शकारबीजं शार्ङ्गं धनुर्धरं शत्रुहन्तारं वरायुधमिति ॥

षष्ठद्वारदक्षिणे श्वेताभो नीलवासाः शिरसि शङ्खभृतो दण्डायुधो नन्देशो रोहिणीजो वियद्गतिध्वजो हंसवाहनः कर्णशब्दरवो नामाद्यक्षरबीजः शङ्खचूलिनं वृक्षदण्डं श्वेताङ्गं घोररूपिणमिति ॥

वामे रक्ताभः श्वेताम्बरः शिरसि चक्रभृतो दण्डपाशभृतो मेघनादरवोऽनलजस्तुष्टीशो धूमकेतुः प्रवृत्तवाहनश्चकारबीजश्चक्रः चूलिनं मुदावहमुदग्ररूपं भयानकमिति ॥

उदक्प्राकारपार्श्वे विमानपार्श्वे वा कुबेरेशानयोर्मध्ये दक्षिणामुखः सितवाहनेनासीनोऽग्निवर्णः पीतवासाश्चतुर्भुजः शङ्खचक्रधरोऽभयकट्यवलम्बितहस्तौ श्रीवत्सं ब्रह्मसूत्रं (विनाहरे ?) विना हरेरिव भूषणैर्युक्तोऽथवा द्विभुजे पुष्पाणि शक्तिदण्डभृद् वा जयापतिः श्रीकेतुः पुष्परथवाहनः पूर्वाषाढोद्भवः पुष्परवो विद्यादिवर्गबीजो विष्वक्सेनो विष्वक्सेनं शान्तं हरमिति ॥

प्रथमावरणस्य त्रिभागाद् द्विभागे सोपानमध्ये वा श्वेताम्बरो बहिर्मुखो ब्रह्मचारी दण्डायुधः सिंहध्वजवाहनः फाल्गुनिर्हरिणीजातः कुम्भशब्दरवो भूताद्यक्षरबीजः श्रीभूतः श्रीभूतं श्वेतवर्णं वैष्णवं मुखपालिनमिति ॥

द्वितीयावरणे हाटकाभः शुकपिञ्छाम्बरधरो झल्लरीमेघलीयुक्तं किङ्किणीजालमुखसहस्राभरणमुपर्युपरिच्छिन्ना बन्धूकानिभचूडास्त्रिभिर्युक्तः श्यामलस्त्रिशीर्षः सुखभुजकेन च्छन्नवीरकिरीटवान् पञ्चवर्णमिश्रभुजकाभ्यां युक्तश्छन्दोमयपक्षद्वययुतः कुजजाभनेत्रौ हृदये संयुक्तौ भयदो द्विभुजः स्वात्युद्भवश्चूलाध्वजो विशोकेशो वायुवाहनः तुण्डायुधः पक्षाहतरवो गरणाद्यक्षरबीजो गरुडो गरुडं पक्षिराजं सुपर्णं खगाधिपमिति ॥

तत्पूर्वे चक्रोऽङ्गारवर्णो रक्ताम्बरः शिरसि चक्रभृत् पुरुषः पुष्टीशो धूमकेतुः प्रवृत्तवाहनस्तर्जनीरवश्चकारबीजोऽनलजश्चक्रं सुदर्शनं सहस्रविकचनमपायिनमिति ॥

तत्पूर्वे पाञ्चजन्यो दुग्धाभो रक्तवस्त्रो दृढो भूताकृतिः शिरसि शङ्खभृद् वियद्गतिध्वजो वियद्गात्रायुधो हंसवाहनः कर्णशब्दरवो वारुणीपतिः शकारबीजोऽनलजः शङ्खः पाञ्चजन्यं शङ्खमम्बुजं विष्णुप्रियमिति ॥

तत्पूर्वे हाटकाभः शुकपिञ्छाम्बर ऊर्ध्वकेशः शङ्खकेतुर्वायुवाहनः सभारवः स्वातीजो जकारबीजो जयप्रियापतिर्द्विभुजः पद्मधर आसने दक्षिणं प्रसार्य वाममाकुञ्च्यासीत सर्पयुक्तो हृदयेऽञ्जलिसंयुक्तो ध्वजः जयमत्युच्छ्रितं धन्यं ध्वजमिति ॥

तत्पूर्वे यूथाधिपस्य पीठे बहिर्मुखः श्वेताभो रक्तवस्त्रो भूताकारो द्विभुजो दण्डधरो धूमकेतुर्महाचातकवाहनो विरजेशो गतिशब्दरवो श्रविष्ठाजो भूताधिकाक्षरो महाभूतयूथाधिपतिं नित्यमुग्रं महाभूतमिति ॥

तत्पूर्वे तथैव चतुर्भूतं चतुर्दिक्षु शङ्खनादसमन्वितपीठे पाकोऽर्जुनो रुक्माभः पद्मनेत्रः कृष्णकुञ्चितमूर्धजो भूताकारः कृष्णवस्त्रधरः कुम्भोदरसमन्वितो द्विभुजो दण्डहस्तोऽश्विनीजातः सिंहनादः सिंहध्वजवाहनो भूताद्यक्षरबीजः सुमुखापतिर्विष्णुभूतः पाकोऽर्जुनो हस्तं मक्षहा विष्णुभूतयुक्तमिति ॥

एते अनपायिनश्चैतेषु श्रीभूतगरुडौ प्रासादपार्श्वे चक्रशङ्खध्वजान् बलिपीठपार्श्वे च संयोज्यार्चयेदिति केचित् । प्रथमावरणे द्वितीये वा पूर्ववदिन्द्रादीनर्चयेत् ॥

प्रागादिद्वारदक्षिणे पार्श्वे तत्तद्दिगीशानभ्यर्च्य द्वितीयावरणे प्राग्द्वारादुत्तरे पश्चिमामुखः श्वेताम्बरः शुक्लवर्णश्शुक्लाम्बरो द्विभुजः पद्महस्तः सप्ताश्ववाहनो हयध्वजो रेणुकासुवर्चलापतिः खकारबीजश्चाधिघोषरवः सहस्रकिरणो मण्डलावृतमौलिः श्रावणे मासि हस्तज आदित्य आदित्यं भास्करं सूर्यं मार्ताण्डं विवस्वन्तमिति ॥

दक्षिणे दिगीशस्य पश्चिमामुखे श्वेतो रक्ताम्बरो द्विभुजश्चापधृक् मण्डलावृतमौलिर्हिरण्मयाश्ववाहनः कुलीरध्वजो हंसरवो रोहिणीपतिः सकारबीजः सौम्यजो वसिष्ठो वसिष्ठं सोमं यज्ञाङ्गमिन्दुं चन्द्रमिति ॥

दक्षिणे दिगीशस्य पूर्वे चोत्तरामुखो बन्धूकवर्णो नीलाम्बरः शक्तिपाणिः शरभध्वजः शुकाजुपापतिरश्विनीजातोऽश्ववाहनः शङ्खरवो नामाद्यक्षरबीजोऽङ्गारकः अङ्गारकं वक्रं रक्तं धरासुतमिति ॥

तस्य पश्चिमे चोत्तरामुखः श्यामवर्णो रक्ताम्बरो द्विभुजो रथहनः सिंहध्वजः शङ्खरवो नामाद्यक्षरबीजः सुशीलापतिः श्रविष्ठजो बुधो बुधं सौम्यं श्रविष्ठजमिति ॥

पश्चिमे दिगीशस्य तद्दक्षिणे प्राङ्मुखः सिताभः पुष्पश्यामाम्बरो दर्भहस्तः पूरिमकुटोपवीतः कृष्णाजिनधरः कुशध्वजो हंसवाहनस्तैष्यजस्तारापतिः पीतवर्णं गुरुं तैष्यजं बृहस्पतिमिति ॥

तस्योत्तरे प्राङ्मुखो रजतवर्णो वल्कलाम्बरः उपवीताजिनधरो जटाधरो मेघवाहनः स्रुवध्वजो रोहिणीजो नामाद्यक्षरबीजः सुमदापतिः शङ्खरवः शुक्रः शुक्रं भार्गवं काव्यं परिसर्पणमिति ॥

उत्तरे दिगीशस्य पश्चिमे दक्षिणामुखोऽञ्जनाभो द्विभुजः........ राम्बरो रेवतिजः कुमुदापतिर्वराहध्वजवाहनः शङ्खरवो नामाद्यक्षरबीजो मन्दः सूर्यपुत्रं मन्दं रैवत्यं शनैश्चरमिति ॥

तत्प्रतीच्यां दक्षिणामुखः श्यामो जपाम्बरो नागचूलितमस्तकः पाशायुधो मण्डलावृतमौलिः सर्पध्वजवाहन आश्लेषजो जपापतिर्नामाद्यक्षरबीजो राहुः राहुं दैतेयमुरगेशं हारकमिति ॥

तत्प्राच्यां प्राङ्मुखो धूम्रवर्णः श्वेताम्बरो नागीशोऽन्यत् सर्वं राहोरिव केतुं कृत्वा कृष्णं रौद्रं मेघप्रकाशजमिति । यद्दिग्द्वारं तद्दिक्पार्श्वे समर्चयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते पर्षदानां वर्णवाहनविधिर्नाम एकोनविंशः पटलः ॥

## अथ विंशः पटलः

तृतीयावरणे प्राच्यां प्राग्द्वाराद् दक्षिणे पश्चिमामुखो द्विभुजा पीताम्बरा श्वेताभा कृष्णकुञ्चितमूर्धजा हृदयेऽञ्जलिसंयुक्ता रेवतीजा कूर्मध्वजवाहनी शङ्खरवा जाह्नवी गङ्गां लोकपावनीमिति ॥

दक्षिणे चोत्तरामुखा श्यामवर्णा रक्ताम्बरा घनस्तना कृष्ण-कुश्चितमूर्धजा द्विभुजा पुष्पहस्ता परपुष्टरववाहना ........ लकाय-नामाद्यक्षरबीजा यमुना यमुनां स्फाटिकां नदीवरां पावनीमिति ॥

पश्चिमे प्राङ्मुखा रक्ताभा श्वेतवस्त्रा सुखासीना द्विभुजा पुष्प-मालाधरा कूर्मवाहनाजकुक्कुटस्वराश्विनीबीजा नद्यादिबीजा नर्मदां नदीवरां चिद्रूपां विशालामिति ॥

उत्तरे दक्षिणामुखा कृष्णवर्णा श्वेतपुष्पवस्त्रधरा पद्महस्ता द्वि-भुजा चोत्पलबन्धकेशा पौष्णजा जलघोषरवा मकरध्वजवाहना सिता-क्षरबीजा सिन्धुः सिन्धुं नदीवरां मृदङ्गीं साधनामिति ॥

प्राग्द्वारादुत्तरे श्यामवर्णा पीताम्बराष्टभुजा चतुर्भुजा शङ्खचक्र-धरा सर्वाभरणसंयुक्ता कक्ष्याबन्धघनस्तनी कृष्णोद्भवा कंसघण्टार-वाद्यक्षरबीजा सिंहध्वजवाहना दुर्गा दुर्गां कात्यायनीं विन्ध्यवासि-नीमिति ॥

आग्नेय्यां रक्तवर्णा श्वेतवस्त्रा चतुर्भुजा दक्षिणवामयोरक्षमाला-कमण्डलुज्ञानमुद्रापुस्तकयुता पुस्तकध्वजहंसवाहनी नामाद्यक्षरबीजा-श्विनीजाता प्रणवध्वनिः सिद्धिं विश्वां भृगुपत्नीं सरस्वतीमिति ॥

नैर्ऋते श्रियं पूर्ववत् ॥

वायव्ये रक्ताभा पुष्पाम्बरा पीतवासा दक्षिणवामयोः पुष्प-निभाजिनधरी दक्षिणे पीतगदाधरा वृषभरक्तनीलपतिरिनाङ्गीमञ्ज-लिकां च युक्त्या ज्येष्ठानक्षत्रजाता खरयुक्तरथवाहिनी काकध्वजा का-कध्वनियुता नामाद्यक्षरबीजा ज्येष्ठाभूः ज्येष्ठायानिं भुवः ज्येष्ठायानिं सुवः ज्येष्ठायानिं (सुवज्येष्ठायिनं ?) कलिराजायिनीं कलिपत्नीमिति ॥

ऐशान्ये रक्ता श्यामाम्बरा उग्रनयना महारौद्री दंष्ट्राभ्यामल-ङ्कृता स्थालमालोत्तरासङ्गमांसार्द्रशूला षड्भुजा भ्रूभङ्गविकटा कपा-लपाशहस्ता रक्तकुञ्चितमूर्धजाट्टहाससहिता उग्रपीठसमासीना डम-रुकध्वनियुता नामाद्यक्षरबीजा पिशाचध्वजवाहनार्द्रानक्षत्रजाता महो-दरी महोदरीं रौद्रीं महाकालीमिति ॥

अन्तराले प्रागादि सुरा पश्चिमामुखा रक्तवस्त्रवर्णा जपाम्बरा पुष्पहस्ता रक्तकुञ्चितमूर्धजा वीणावेणुरवा स्वातीदिनोद्भवा कपोत-

ध्वजवाहनी सुराद्यक्षरबीजा सुरा सुरां सुमुखीं विद्युद्रूपां सुभगामिति ॥

दक्षिणे पश्चिमामुखा सुन्दरी कनकाभा सिताम्बरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शेषं सुरावत् । सुन्दरीं विशालां पद्माक्षीं वरवर्णिनीमिति ॥

दक्षिणे चोत्तरामुखा रुक्माभा रक्तवस्त्रा पुष्पहस्ता मूर्धजा हंसध्वजवाहनी हंसरवा विशाखजाता नामाद्यक्षरबीजा स्वाहां शुभाङ्गीं यज्ञसाधनामिति ॥

तत्पश्चिमे चोत्तरामुखा सितश्यामा कृष्णाम्बरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुक्लध्वजवाहनी नामाद्यक्षरबीजाग्निरवा स्वधा स्वधां समृद्धिं कुलवर्धिनीं सन्ततीमिति ॥

............खा कनकभासिताम्बरा पुष्पहस्ता द्विभुजा ललाटोपरि पुष्पचूडा ध्वजवाहनी मयूरस्वररवा सौम्यजा नामाद्यक्षरबीजा माया मायां मत्ताङ्गीं वराङ्गीं वरामिति ॥

तदुत्तरे प्राङ्मुखा कनकाभा शुक्लाम्बरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा हंसध्वजवाहनी नामाद्यक्षरबीजा संह्लादिनी संह्लादिनीं वरारोहां मायाङ्गीं मदवर्धनीमिति ॥

उत्तरे दक्षिणामुखा हेममिश्रिताभा रक्ताम्बरा पद्महस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुक्लस्वररवा हंसध्वजवाहनी रागाद्यक्षरबीजाभिजिज्जाता राकां मुख्यां रक्ताङ्गीं वराननामिति ॥

तत्पूर्वे दक्षिणामुखा सितश्यामा अतिपुष्पनिभा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा घनस्तनी पृथुश्रोणी हंसध्वजवाहनी शुकस्वररवाभिजिज्जाता पुण्याद्यक्षरबीजा सिनीवालीं गभस्तिनीं भीतदां पुण्यामिति ॥

पचानले चोत्तरामुखः कृष्णवर्णः श्वेताम्बरो विकटः शूलपाणिः कुशेशयायताक्षो नामाद्यक्षरबीजो सुगुणेशः शङ्खरवः शुकवाहनः सिंहध्वजोऽनलजो हविरक्षको हविरक्षकमाग्नेयं शैलूषं पचनमिति ॥

पुष्पसञ्चयस्थाने पश्चिमामुखः कनकवर्णः श्यामाम्बरो गजवाहनः पुष्पध्वजो रेवतीजः शङ्खरवः शुद्धाङ्गीशो नामाद्यक्षरबीजः पुष्परक्षकः पुष्परक्षकं हरितमधिवासं फुल्लमिति ॥

स्नानोदकवारिसंचयस्थाने पुरुषं पूर्ववत् ॥

प्रोतवस्त्रोत्तरीयादिद्रव्यसंचयस्थाने हेमाभः शुकपिञ्छाम्बरधरश्चतुर्भुजः कलशाद्यक्षमालापाणिर्जटाधरो हंसवाहनो रूपाद्यक्षरबीजः सावित्रीपतिरभिजिज्जातः कमण्डलुध्वजो हुङ्काररवस्त्वष्टा त्वष्टारं रूपजातं निधिं प्रोतनायकमिति ॥

शयनस्थाने पश्चिमामुखा हेमाभा रक्ताम्बरा पद्महस्ता द्विभुजा शिरसि गदाधरा सिंहध्वजवाहनी घोररवा श्रविष्ठजा गदा गदां कौमोदकीं पुण्यां प्रबलामिति ॥

हविर्द्रव्यादिसंचयस्थाने पश्चिमामुखो मेघवर्णः श्वेताम्बरो विकटो दण्डपाणिर्भूतवाहनः शूलध्वजो नामाद्यक्षरबीजः कुम्भशब्दरवः सर्वेशो भूतवाहन आर्द्रानक्षत्रजातश्चामुण्डः सर्वेश्वरं जगन्नाथं चामुण्डं सर्वेनश्वरमिति ॥

होमस्थाने पश्चिमामुखः श्यामवर्णः पीताम्बरो द्विभुजो दण्डायुधो रथवाहनः सिंहध्वजवाहनो नामाद्यक्षरबीजः शङ्खरवः श्रविष्ठजात सुमनापतिर्बलिरक्षकं बलिकं दण्डं सर्वजंसमिति ॥

द्वारस्य दक्षिणे हरिण्या सह नीला सखी अभ्यर्च्या । पश्चिमे प्राङ्मुख उत्पलाभः शुकपिञ्छाम्बरधरः पाशभृद् गजवाहनः सिंहध्वजो वकारबीजो वरुणजो दर्दुरशब्दः कनकाधिपस्तोयः पवित्रममृतं तोयं गह्वरमिति ॥

................चोत्तराभिमुखः पिङ्गलाभो नीलवासाः शक्तिभृद् गजवाहनः कपिध्वजः सङ्ख्यकापतिः शङ्खरवो फलीजोऽग्निर्वीतिहोत्रमद्भुरण्यं शुद्धमग्निमिति ॥

उत्तरे दक्षिणामुखः श्यामवर्णः पिङ्गवासा असिपाणिर्गजवाहनो रेणुध्वजो यकारबीजश्चञ्चलिकापतिः स्वातीजः शङ्खरवो वायुर्वायुं समीरणं वायुं पृषदश्वमिति ॥

आग्नेये पश्चिमामुखः स्फटिकाभो रक्ताम्बरो द्विभुजः पुष्पहस्तध्वजवाहनो विधेशो ऋचाद्यक्षरबीजो ऋग्वेदो ऋग्वेदं मधुं सोमं क्रतुमिति ॥

नैर्ऋत्यां प्राङ्मुखः पीतवर्णः श्वेताम्बरः कुशहस्तो द्विभुजः कांस्यतालरवोऽग्निकेतुर्बुद्धीशः खरवाहन इध्माद्यक्षरबीजः पुनर्वसुजातो यजुर्वेदो यजुर्वेदं दधिमिश्रमिष्टमिति ॥

वायव्ये प्राङ्मुखो रक्ताभः पीतवासा द्विभुजः सप्तस्वरध्वजोऽजवाहनो मूलोद्भवो मतीशो नागरवः सामाद्यक्षरबीजः सामः सामं घृतं यज्ञमिति ॥

ऐशान्ये पश्चिमामुखोऽञ्जनाभः श्वेतवस्त्रो द्विभुजः कूर्महस्तः स्रुक्स्रुवध्वजो हंसवाहनो हंसरवः कलेशः प्रोष्ठपाज्जातो जपाद्यक्षरबीजो विष्णुर्विष्णुं चापिनं रत्नं वरदमिति ॥

दक्षिणे चोत्तराभिमुखः कृष्णवर्णः पुष्पवस्त्रधरो वेणुदण्डधरो द्विभुजः शङ्खहेतिः पादवाहनः कमण्डलुध्वजो नामाद्यक्षरबीजो हस्तजस्तक्षकस्तक्षकं काश्यपं विश्वमूर्तिं क्षतं तमक्षतमिति ॥

पश्चिमे चोत्तरामुखः पलाशपुष्पाभः षड्भुजः सर्वाभरणभूषितो बलिमौलियुतो देवयानीपतिर्नामाद्यक्षरबीजः शङ्खरवो मयूरध्वजवाहनो गुहो जगद्भुवं विश्वभुवं रुद्रभुवं भुवद्भुवमिति ॥

पश्चिमे दक्षिणभागे प्राङ्मुखः श्यामवर्णः सिताम्बरो द्विभुजः खड्गखेटकसंयुक्तः किरीटी भूतध्वजवाहनो निन्दितापतिरुत्तरोद्भवो वकाराद्यक्षरबीजो वंशरवो भूतनायको मित्रं पञ्चीयं वरदं भूतनायकमिति ॥

तदुत्तरे प्राङ्मुखोऽञ्जनाभः श्वेताम्बरो नपुंसको वृषध्वजवाहनो वागलकाख्यध्वजो दण्डर(व) ऊर्म्यायुधः सौम्यजः पकाराद्यक्षरबीजः पवित्रः पवित्रममृतं जप्यं शुद्धमिति ॥

उत्तरे दक्षिणामुखः पिङ्गलाभः श्यामाम्बरोऽन्यत् सर्वं पवित्रवत् । सर्वतीर्थं जलं पुण्यं पावनमिति ॥

तत्पूर्वे दक्षिणामुखः श्यामाभो हेमाम्बरः पञ्च सप्त वा फणैः सहित रजापतिर्हस्तकरालरव आश्लेषजो गजध्वजवाहनो नामाद्यक्षरबीजः क्षितीशः सतक्षकं सर्पराजं क्षितिजं धरमिति ॥

इति श्रीवैखानसे मरीचिप्रोक्ते परिवारवर्णवाहनविधिर्नाम विंशः पटलः ॥

## अथैकविंशः पटलः ।

पश्चमावरणे पूर्वद्वारोत्तरे पश्चिमामुखा श्यामाभा पत्रवस्त्रा पद्म-हस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुकस्वररवा खड्गध्वजवाहना क्षमाद्यक्षरबीजाभिजिज्ञाता. कुहूमेंदिनीं कुहूं दंष्ट्रां क्षमामिति ॥

पश्चिमे पश्चिमामुखा सितश्यामा जपाम्बरा पुष्पहस्ता द्विभुजा खड्गध्वजवाहनी शुकस्वररवा तकाराद्यक्षरबीजाभिजिज्जातानुमितिः सुरूपां तन्वङ्गीं सुभगामिति ॥

दक्षिणे चोत्तरामुखा ब्रह्माणी चतुर्मुखी....वस्त्रा कमलाक्षमा-लायुता सरित्प्रिया श्वेतवर्णा कृष्णाम्बरा त्रिणेत्री शूलपाणिनी वैशा-खिनी रक्तवर्णा श्वेताम्बरा षण्मुखी शक्तिपाणिनी वैष्णवी श्यामलाङ्गी पिता....शङ्खचक्रधरा वाराही कृष्णश्यामनिभा रक्तवस्त्रा शस्त्रपाणिनी इन्द्राणी श्यामाभा रक्ताम्बरा वज्रपाणिनी काली श्यामाभा रक्ता-म्बरा दंष्ट्री शूलपाशकपालिनीश्चैकप्रासादे समासीना नामाद्यक्षरबीजाः पिशाचध्वजवाहना आर्द्रोद्भवा गणिकध्वनिरवाः सप्तमानरः । ब्रह्माणीं पिङ्गलां गौरीं सर्वतोमुखीं समुत्प्रियां विश्वरूपामुग्रां गणेश्वरीं वैशा-खिनीं खण्डिनीं गायत्रीं षण्मुखीं विश्वगर्भां विषोर्मिणीं कृष्णाद्रोहिणीं वाराहीं वरदामुर्वीं वज्रदंष्ट्रीं जयन्तीं कौशिकीमिन्द्राणीं घनाघनीं कालीं नालीकदंष्ट्रीं विषमां वेदधारिणीमिति ॥

पश्चिमे प्राङ्मुखातिरक्ता शुकनिभाम्बरा जपाहाटकशुभकपत्र-निभाम्बरा विजया हरिताङ्गी रक्तवस्त्रा विन्दा कनकाभा श्वेत-वस्त्रा पुष्टिका धातकीपुष्पसङ्काशा चाषवस्त्रनिभाम्बरा वरा नन्दका कुमुदा हासश्यामनिभाम्बरा कुमुद्वती चोत्पलनिभा नीलाम्बरा चो-त्पलकाभा शुकनिभाम्बरा विशोकाश्चैते पद्महस्ता द्विभुजाः कृष्णकुञ्चि-तमूर्धजा वीणावेणुरवाः शुकध्वजवाहना नामाद्यक्षरबीजा धनिष्ठजा जयां सुखप्रदां समृद्धिनीं हरां विजयां विशोकां पुण्याकामानन्दां विन्दां लाभां प्रमत्तामजयां पुष्टिकां माधवर्तीं पुण्यां प्रमत्तां नन्दकां मधुजननीं सुमुक्तां सुभगां कुमुद्वतीं सुमहां महारागनिर्वृतिमुत्पलकां सुगन्धिनीं सर्वमोदां सर्वात्मकां विशोकां धनराशिमक्षताममितामिति ॥

उत्तरे दक्षिणामुखा सर्वमरकतप्रभा पुष्पाम्बरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा मधुरध्वजवाहना मृदङ्गशब्दरवा रोहिणीजाता नामाद्यक्षरबीजाः सप्तरोहिण्यः कूटिनीं नन्दिनीं धरित्रीं रजतप्रियां ग्रन्थिनीं वेगिनीं प्रजयां प्रवहिर्णीं कुच्छ्रिर्णीं शाखिनीं वाहिनीं योक्रिर्णीं कूठिनीं जारणीं छर्दिर्णीं प्रवाहिनीं विहारिर्णीं दामिनीं वैसिनीं प्रविद्युतां दद्राणीमिन्दुकरां सौमनसीं प्रविद्युतामिन्द्रियविकारिणीमर्वतीं गङ्गावर्णां सृजणीमिति ॥

आग्नेये पद्मनेत्रनिभा पुष्पाम्बरा द्विभुजा दण्डहस्ता शरध्वजवाहना शङ्खरवा स्वातीजाता नित्यादिबीजा सुगुणानामीशा वत्सरा वसुधां निधीं धर्मसूनुकां कामिनीमिति ॥

नैर्ऋत्ये कनकाभासिताम्बरा द्विभुजासिधरा प्लवङ्गवाहना शरध्वजा हंसवाहनरवा स्वातीदिनोद्भवा यकारबीजा यिनीश्वराः प्राणादयः प्राणं व्यानमुदानं समानमिति ॥

वायव्ये ............ भा सिताम्बरा द्विभुजासिधरा प्लवङ्गवाहनाः शङ्खध्वजाः सिंहरवा उददायिशाः शकारबीजा मरुतो लोकधरधरान् सप्तसप्तगणान् मरुत्वतीसुतानिति ॥

ऐशान्ये ............ श्वेताभा व्याघ्रचर्माम्बराः पिङ्गलनेत्राः शकारबीजाश्चान्यत् सर्वं रुद्रवत् शतरुद्रानोषधीशान् त्र्यम्बकान् कपालवत इति ॥

दक्षिणेऽन्तराले पश्चिमामुखा ............ भास्करवद् द्वादशादित्या धातारमर्यमणं भगं मित्रं विवस्वान् पूषणं पर्जन्यं त्वष्टारं विष्णुं जघन्यं चेति ॥

दक्षिणे चोत्तरामुखाः पद्मकिञ्जल्कसदृशाः पुष्प............ दंष्ट्रामुखा द्विभुजाः पाशहस्ताः सिंहनादरवा गजवाहना गुकाराद्यक्षरबीजा देव्यो कतायुक्ताः सौम्यनक्षत्रजाता गन्धर्वान् त्रम्यस्वरजान् सोमजानिति ॥

........................वर्णाः व्याघ्रचर्माम्बरा नीलग्रीवास्त्रिणेत्राश्चान्यत् सर्वं रुद्रवत्। एकादशरुद्राश्च अजैकपादहिर्बुध्नं पिनाकिनं परा-

जितं मृगव्याधकं शर्वं निर्ऋतिमीश्वरं कपालिनं स्थाणुमिति । दक्षिणे पश्चिमामुखा तत्पश्चिमे चोत्तराभिमुखाः कनकाभा जटाधराः कुशाम्बराः कुशकृष्णाजिनधरा अनूराधजा जलघोषरवास्तपाधिपास्तपाद्यक्षरबीजा मुनयः मुनींस्तपाधिपान् कृशान् पापविनाशनानिति ॥

पश्चिमे प्राङ्मुखा हेमाभाः पुष्पाम्बराः पद्महस्ता द्विभुजाः कृष्णकुञ्चितमूर्धजाः शुकस्वररवा हंसध्वजवाहना आमकाद्यक्षरबीजा उत्तराजा अप्सरसः अमृतजान् भोगवहान् स्वयंजानिति ॥

तदुत्तरे प्राङ्मुखौ गोक्षीराभावशोकपुष्पवस्त्रौ पुष्पहस्तौ द्विभुजौ मयूरवाहनौ अमतावनुरूपवक्षध्वजौ ज्येष्ठानक्षत्रजौ हंसरवौ सुन्दरेशौ अश्वाद्यक्षरबीजावश्विन्यौ नासत्यदस्रावश्विनौ यमजौ युग्मौ त्वाष्ट्रीपुत्राविति ॥

उत्तरे दक्षिणामुखा पद्मपुष्पवस्त्रा पद्महस्ता द्विभुजाः शङ्खध्वजवाहनाः स्वातीदिनोद्भवाः प्रियाणामीशा वकारजाः शङ्खरवा वसवः धरं ध्रुवं सोमपमनिलं प्रत्यूषं प्रभासमिति ॥

तदुत्तरे पूर्वद्वारोत्तरे पूर्वादिदक्षिणे दक्षिणामुखा श्यामाभा रक्तवस्त्रा दंष्ट्रामुखा रक्तकेशा गदाधरा द्विभुजा डमरुकधरा महिषध्वजवाहना मेघरवा विद्याधरीणामीशा मन्त्रादिबीजा विद्याधरान् मन्त्रबलान् पुष्पजान् भोगजानिति ॥

षष्ठप्राकारपूर्वोत्तरोत्तरे रक्ताभौ श्वेताम्बरौ जटाधरौ द्विभुजौ वीणाहस्तौ नागरवौ सङ्गीतापतिनौ वायुवाहनौ स्रुवध्वजावभिजिज्जातौ नामाद्यक्षरबीजौ तुम्बुरुं मुनिवरं सुरेशं वेदरूपिणमिति ॥

दक्षिणे पश्चिमामुखः श्वेताम्बरो जटाधरो द्विभुजो वीणाहस्तस्तालस्वरेशो ........... कूर्चध्वजोऽभिजिज्जातो नामाद्यक्षरबीजो नारदं मुनिवरं गानरूपं ब्रह्मसम्भवमिति ॥

दक्षिणे चोत्तरामुखा अब्जाभा श्वेतसवस्त्रा पुष्पहस्ता द्विभुजा पुष्परथवाहना विद्युद्ध्वजा मेघरवा श्वेतकृष्णपतयः मूलोद्भवा गकारबीजाः षड् ऋतवः ऋतून् राशीन् गन्धर्वान् तीर्थानिति ॥

पश्चिमे प्राङ्मुखः श्वेताभः प्रजापतिर्गजवक्त्र एव विशेषोऽन्यत्: सर्वं विरिश्चवत् । प्रजापतिं स्रष्टारं वेदमयं ब्रह्ममयमिति ॥

उत्तरे दक्षिणामुखः श्वेताभो रक्ताम्बरो जटाधरः कूर्मवाहनः कुशध्वजो वेदरवः स्वगणेशो नामाद्यक्षरबीजः श्रवणजो मुद्गलो मुद्गलं मुनिवरं शुद्धं सर्वज्ञमिति ॥

आग्नेये श्वेताभो नीलाम्बरो द्विभुजो गलधरः पद्मवाहनः पद्मकेतुर्नामाद्यक्षरबीजो यामापतिर्मैत्रजो हंसरवो हलेशः हलेशं महाबलं मायाङ्गं वरदायिनमिति ॥

नैर्ऋत्यां श्यामाभो रक्ताम्बरो द्विभुजः पुष्पहस्तो मेघध्वजवाहनो नारदो यकारबीजो यक्षपतिर्मूलजातो यक्षो यक्षं सर्ववरदं शिखिनं देवयोनिमिति ॥

वायव्ये श्यामाभो रक्ताम्बरो जटाधरो द्विभुजो बलमौलिसमायुक्तः छत्रवीरसमायुक्तो वलापतिर्मृगध्वजवाहनो जकारबीजो मृदङ्गरवः जाम्बवं रूपं दर्शनीयं सुन्दरमिति ॥

ऐशान्ये श्यामाभो रक्ताम्बरो द्विभुजः शूलधरो रक्तकेशो दंष्ट्रमुखो नीलापतिः खरध्वजवाहनो घोररवो मूलजोऽसुरः असुरं दैतेयं भयानकं चोररूपिणमिति ॥

अन्तराले प्राच्यां पश्चिमामुखौ किन्नरमिथुनौ पक्षिपादावूर्ध्वकायौ स्त्रीरूपौ पार्श्वयोः पक्षाभ्यां युक्तौ वीणातालहस्तौ नामाद्यक्षरबीजौ वायुवाहनौ तालध्वजौ स्वररवौ हस्तजौ किन्नरमिथुनौ तीर्थौ कीसंहितौ नागरूपिणाविति ॥

दक्षिणे पश्चिमामुखो रक्ताभः सिताम्बरो जटाधरः पुष्पहस्तो द्विभुजः प्रणीतोऽश्वध्वजवाहनो रोहिणीजः शङ्खरवः प्राणाद्यक्षरबीजः प्रह्लादः प्रह्लादं प्रजननं विष्णुभक्तं गदाधरमिति ॥

दक्षिणे श्यामाभो रुक्माम्बरो द्विभुज इपुचापपुष्पधरो रतिपतिर्मकरध्वजवाहनः पुनर्वसूजातः खररवो मकारबीजो मदनो मदनं कामं सुन्दरं दिव्यरूपिणमिति ॥

पश्चिमे चोत्तरामुखा पाटलपुष्पनिभा रक्तवस्त्रा पुष्पहस्ता द्विभुजारुणकुञ्चितमूर्धजा ललाटोपरिपुष्पचूडा सिंहध्वजवाहिनी शुकरवा विद्यादिबीजा विपा विपां विद्युद्रूपां विशालाङ्गीं मेधामिति ॥

पश्चिमे प्राङ्मुखा हेमाभा श्यामाम्बरा द्विभुजा पुष्पहस्ता कृष्णकुञ्चितमूर्धजा वेणुरवा शुकध्वजवाहना चित्रानक्षत्रजाता नामाद्यक्षरबीजा व्याजनीं सुभगां सुन्दरीं विशुद्धामिति ॥

उत्तरे दक्षिणामुखा श्वेताभा कृष्णाम्बरा पुष्पहस्ता द्विभुजा ललाटोपरिपुष्पचूडा खड्गध्वजवाहनी हंसरवा हस्तजाता नामाद्यक्षरबीजा चन्द्राभा चन्द्राभां तन्वङ्गीं श्वेतरूपां दृढव्रतामिति ॥

तत्पूर्वे दक्षिणामुखः श्यामाभो रक्ताम्बरो द्विभुजः पद्महस्तः सर्वाभरणभूषितो गजवाहनः खड्गध्वजः सुनन्दापतिर्नामाद्यक्षरबीजः शतभिषग्जातः सुनन्दं सुपराश्रेयं शुभानां सौम्यमिति ॥

सप्तप्राकारपूर्वद्वारोत्तरे दक्षिणेऽर्यम्णं पश्चिमामुखो दक्षिणे दण्डधरमुत्तरामुखः पश्चिमे पाशभृतं प्राङ्मुखः उत्तरे धनदं दक्षिणामुखमाग्नेये सवितृसावित्रं नैर्ऋते चेन्द्रमिन्द्राजं वायव्ये रुद्रं रुद्राजमैशान्ये आप आपवत्सानर्चयेत् ॥

अन्तराले प्रागादिचतुर्दिक्षु दिशादेवताः क्रमेण प्राच्यामुत्तरपार्श्वे ईशं पर्जन्यं जयन्तं महेन्द्रं नागं भूतं यक्षमिति ॥

दक्षिणभागे चादित्यं सत्यकं भृशमन्तरिक्षं दुर्गां घोटकमुखीं वपुषं चेति ॥

दक्षिणे पूर्वभागेऽग्निं वितथं गृहक्षतं राक्षसं जयं कृष्णं चेति ॥

तत्पश्चिमभागे निर्ऋतिं दौवारिकं पुष्पदन्तं कर्वि शक्रं पुरुहूतमिति ॥

उत्तरभागे सरित्पतिमसुरं शोषणं रोगं विद्यायशसं भद्रमिति ॥

उत्तरे पश्चिमभागे जवनं नागं मुख्यं भल्लाटं वेदभूतं तापसं सिन्धुपमिति ॥

पूर्वभागे सोमम् अर्गलमदितिं सुरिदेवं विद्यामितं पाञ्चभौतिकम् इत्येतान् देवानेकमूर्तिना समर्चयेत् ॥

प्राकारबाह्ये महितं पीठं कृत्वात्रानुक्तदेवानां सर्वेषां सर्वान् देवानिति समर्चयेत्। एषां च वर्णवाहनादीन् पूर्वोक्तान् पूर्ववद् ज्ञात्वानुक्तानां सर्वेषां सामान्यमाकाशवद् वर्णाः श्वेताम्बराः पुष्पहस्ता द्विभुजाः खड्गध्वजवाहनाः शङ्खरवास्तत्तन्नाम्ना प्रियायुक्ताः पत्नीनामाद्यक्षरबीजा अभिजिज्जाताश्चैवं ज्ञात्वार्चयेत् । एवमेव प्रकारेण परिवारैर्युक्तमुत्तमोत्तमं सर्वसम्पत्करमत्यन्तदर्शनीयं चक्षुषोर्मनसः प्रीतिकरं देवेशस्यातिप्रीणनं भवेत्। तस्मात् सर्वप्रयत्नेनैतैः प्रकारैर्युक्तमालयार्चनमाचरेत्। सर्वप्राकाराणामभावे प्रथमावरणादितत्तत्प्राकाराश्रितदेवानेवार्चयेत् । प्राकाराणामभावे द्वितीयावरणादिबहिरावरणे तत्तत्सूत्रैस्तत्तद्बहिरावरणस्थदेवान् सर्वान् संयोज्यार्चयेदिति केचित् ॥

अथवा विभवानुसारेण नवविधपरिवारोक्तमार्गेण परिवारार्चनमाचरेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते परिवारदेवानां
वर्णवाहनविधिर्नामैकविंशः पटलः ।

## अथ द्वाविंशः पटलः ।

अथातः प्रादुर्भावाणां वर्णवाहनादीन् व्याख्यास्यामः। मत्स्यकूर्मवराहनारसिंहवामनरामरामरामकृष्णकर्कीति दश प्रादुर्भावाः । प्रथमावरणे द्वितीये वा पृथक्पृथग् भित्तिपार्श्वे प्रासादाभिमुखं चित्रं चित्रार्धमाभासं वा संकल्प्याभिमुखे कौतुक ..................
.................................. स्य रूप .......... रक्तास्यं रक्तनेत्रं किष्कुपक्षयुतसङ्कल्प्याभिमुखे कौतुकं चतुर्भुजं संन्यस्य मत्स्यं प्रलयवाराहं देवमय ..................................................
श्व वर्णयुक्तं सङ्कल्प्याभिमुखे कौतुकं चतुर्भुजं विन्यस्य कूर्मरूपं धारकं महाशक्तिं महाबलमिति ॥

मत्स्यकूर्मयोर्वाहनकेत्वादीनादिमू(र्ते)रेव समाचरेत् ॥

दक्षिणे वाराहं पूर्ववत् सङ्कल्प्य विष्णुं चतुर्भुजं विष्णुरूपं समर्चयेत् ॥

पश्चिमे नृसिंहं सिंहासनोपरिष्टाद् द्वौ पादौ विन्यस्योत्कुटिकासनोरुमध्ये योगपट्टिकयाबध्य चतुर्भुजं शङ्खचक्रधरमन्यहस्तौ जानूपरि प्रसारितमेव विशेषोऽन्यत् सर्वं पूर्ववत् । कौतुकं तद्रूपं वा चतुर्भुजं विष्णुरूपं वा संस्थाप्यार्चयेत् ॥

उत्तरे वामनं पूर्ववत् कौतुकं च सङ्कल्प्यार्चयेत् ॥

आग्नेये राघवः पश्चिमाभिमुख उत्तराभिमुखो वा श्यामाभो रक्ताम्बरो मकुटादिसर्वाभरणसंयुक्तः श्रीवत्साङ्को द्विभुजो दक्षिणेषुधरो वामे धनुरवलम्ब्य त्रिभङ्गसंस्थितो माघमासे पुनर्वसुजातः सीतापतिरथान्यत् सर्वमादिमूर्तेरिव । रामं दाशरथिं वीरं काकुत्स्थमिति ॥

तस्य दक्षिणे सीता हेमाभा शुक्लाम्बरा वामे पद्मधारी दक्षिणहस्तप्रसारिता दक्षिणं स्थितं वाममाकुञ्च्य पादमुद्धन्धकौटिकौन्तलकरण्डिकामकुटसंयुक्ता वा सीताद्यक्षरबीजान्यत् सर्वं श्रीमिव । सीतामयोनिजां लक्ष्मीं वैदेहीमिति ॥

वामे सौमित्री रक्ताभः श्यामाम्बरो द्विभुजो रामवत् त्रिभङ्गस्थितश्चापधरश्चोद्धन्धकौन्तलयुतो वैशाखे रोहिणीजातो लक्षाद्यक्षरबीजोऽन्यत् सर्वं रामवत् । सौमित्रिं रामानुजं लक्ष्मणं लक्ष्मीवर्धनमिति ॥

दक्षिणे भरतः श्यामाभो रक्ताम्बरोद्धन्धकौन्तलयुतः शरचापखड्गखेटकधरो द्विभुजस्त्रिभङ्गस्थितश्चैत्रे स्वात्युद्भवो मलेशो भगाद्यक्षरबीजः श्रीवत्सकौस्तुभोऽन्यत् सर्वं रामवत् । भरतं कैकेयीसुतं रामानुजं धर्मचारिणमिति ॥

वामे शत्रुघ्नो हेमाभो रक्ताम्बरोद्धन्धकौन्तलयुतो ज्येष्ठमासे धनिष्ठाजातो नामाद्यक्षरबीजो निर्मलेशोऽन्यत् सर्वं लक्ष्मणवत् । शत्रुघ्नं रामप्रियं विजयं भरतानुजमिति ॥

दक्षिणे पुरतोऽञ्जनाभः श्वेतवस्त्रधरः कपिरूपः सर्वाभरणभूषितो द्विभुजो दक्षिणेनास्यं पिधाय वामेन वस्त्रं पिधायावनतगात्रः सीताया वार्ताविज्ञापनपरो मृगवाहनो दण्डध्वजो महानादरवो श्रावणे मासि श्रवणजः कलाद्यक्षरबीजो हनूमन्तः । कपिराजं हनूमन्तं शब्दराशिं महामतिमिति ॥

दक्षिणे शरं नपुंसकं श्यामाभं श्वेताम्बरं त्रिणेत्रं रौद्रसमुद्रघोषरवं वायुवाहनं पक्षध्वजं शिरसि शरभृतं माघमासे वारुण्यजातं श ाद्यक्षरबीजं शरं महारवममोघं तीक्ष्णधरमिति ॥

वामे ............................................ श्वेताभो रक्ताम्बरो ............क्तवदनो द्विभुजः प्राञ्जलीकृतः पादावनतयुक्तो मृगध्वजवाहनो वैशाखे आश्लेषजो मेघरव ................... बलमर्तसु ................ कृष्णवर्णो रक्तकेशः शसदंष्ट्रिणो द्विभुजः शूलधरो हृदयेऽञ्जलिसंयुक्तो मूलजातो मेघवाहनो ................ ......... विभीषणं राक्षस ............. मनस्कं रामप्रियमिति ॥

अभिमुखेऽङ्गदः श्वेताभो रक्ताम्बरो रक्तवक्त्रो द्विभुजः प्राञ्जलीकृतः पादावनत........................ रोहिणीजातस्तुङ्गाद्यक्षरबीजोऽङ्गदं वालिपुत्रं रामभक्तं देवप्रियमिति ॥

नैर्ऋत्यां परशुरामो रक्ताभः श्वेताम्बरो दक्षिणेन परशुं वाममुद्दिश्यकराण्डिकामकुटसोपवीतिनकमलेशोऽन्यत् सर्वमादिमूर्तेरिव । परशुरामं राममृषिसुतं विष्णुं परशुपाणिनामिति ॥

दक्षिणे कमलां सीतावत् कारयेत् ॥

वायव्ये बलभद्रामः श्वेताभो रक्तवस्त्रो द्विभुजो दक्षिणहस्ते मुसलं वामेन हल(धर?)युतः त्रिभङ्ग उद्धन्धकौन्तळो रेवतीशोऽन्यत् सर्वमादिमूर्त्तेरिव रामं यदुवरं विष्णुं हलायुधमिति ॥

तथैशान्ये कृष्णः पश्चिमाभिमुखो वा श्यामाभो रक्ताम्बरः सर्वाभरणभूषितः सर्वसौन्दर्यसंयुक्तः सहस्रकौन्तलैर्युक्तो बर्हिर्बन्धयुतस्त्रिनतो द्विभुजो दक्षिणे क्रीडायष्टिधरः कोर्परेण सत्यभामां गरुडं वावलम्ब्य सुस्थितः क्रीडारससमाविष्टो रुक्मिणीसत्यभामयोरीशः श्रावणे रोहिणीजः सर्वमन्यदादिमूर्तेरिव । कृष्णं पुण्यं नारायणं वटपत्रशायिनं त्रिदशाधिपमिति ॥

दक्षिणे रुक्माभा शुक्लाम्बरा धम्मिल्ललितमुद्धन्धकौन्तलं वा संयुक्ता बीजानामाद्यक्षरबीजान्यत् सर्वं श्रिया इव । रुक्मिणीं सुन्दरीं पवित्रां कृष्णवल्लभामिति ॥

वामे सत्यभामा श्यामाभा रक्ताम्बरा धम्मिल्ललितमुद्धन्धकौन्तला नामाद्यक्षरबीजान्यत् सर्वं महीवत् । सत्यभामां सतीं रूपां सन्नतिं क्षमामिति ॥

दक्षिणे गोपालो रक्ताभः श्वेताम्बरो वंशहस्तो माघमासे वारुण्य जातो हलध्वजवाहनो हंसस्वररवो गवाद्यक्षरबीजो गोपालः । गोपालं सर्वनाथं विष्णुसखं साध्यमिति ॥

वामे श्रीदामा कुङ्कुमश्यामनिभः श्वेताम्बरो द्विभुजोऽञ्जलियुतः प्रोष्ठपदे पूर्वाषाढजो नामाद्यक्षरबीजः शुकध्वजवाहनो वेणुस्वररवो गोपीनाथो दमनः । श्रीदामानं पुण्यरूपं पुण्यात्मकं देवसखमिति ॥

प्राङ्मुखो गरुडांशः सुन्दरो विहगाद्यक्षरबीजोऽन्यत् सर्वं गरुडवत् । सुन्दरं विहगं तार्क्ष्यमिति ॥

पश्चिमे चोत्तरभागे कर्किणं हयाननवत् । अन्यत् सर्वमादिमूर्त्तेरिव समाचरेत् ॥

अभिमुखे कौतुकं चतुर्भुजं च संस्थाप्यार्चयेत् । प्रादुर्भावाणां तत्तदभिमुखे कौतुकं संस्थाप्य भावे पीठं सङ्कल्प्यार्चयेत् । अथवा प्रासादपार्श्वे चालीन्द्रं कृत्वा .......... बहिर्मुखान् संस्थाप्यार्चयेत् ॥

अशक्तश्चेत् प्राकारपार्श्वेऽभिमुखे दक्षिणोत्तरयोः प्रासादाभ्यन्तरे मुखमण्डपेऽन्तराले वा दक्षिणे दाशरथिं वामे कृष्णं केवलं कौतुकं कृत्वा संस्थाप्यार्चयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते प्रादुर्भावाणां
वर्णवाहनविधिर्नाम द्वाविंशः पटलः ॥

## अथ त्रयोविंशः पटलः ।

अथातः कौतुकादीनां लक्षणम् । दारुशैलताम्ररजतहेमरत्नानि कौतुकद्रव्याणि । दारवात् शतगुणं शैलजम् । शैलजात् ताम्रजं सहस्र(गुणम् ।) .... .... ... .... .... .... .... .... .... ... ... .... ....
रुक्मजं सर्वसाधनम् । रत्नजमनन्तम् । पुत्रार्थी दारवमायुष्कामी शैलजं समृद्धिकामी ताम्रजं श्रीकीर्तिकामी राजतम् ऐहिकामुष्मिकंकामी राजतं सौवर्णं सद्यः सायुज्यकामी रत्नजं कारयेत् ॥

रत्नजं रूपमात्रमेव । शिलया दारुणा चोत्सवबलिबेरं नैव कारयेत् । ध्रुवे स्थिते स्थितमासीने त्वासीनं स्थानकं वा शयाने कौतुकमासनस्थानकं ध्रुवे स्थितेऽप्यासीनं कौतुकमौत्सवं वेति केचित् । यानके यानक स्नापनं सर्वत्र स्थितमेव कुर्यात् ॥

प्रादुर्भावाणामाविर्भावाणां च कौतुकं तद्रूपं विष्णुं चतुर्भुजं वा । मत्स्यकूर्मवराहाणां तत्तद्रूपं नैव कुर्यात् । येन द्रव्येण देवं तद्द्रव्येण देव्यौ प्रभां पीठं च कारयेत् । अन्यथा महत्तरो दोषो भवति । ध्रुवे देवीयुक्तेऽपि देवीयुतं कौतुकं सर्ववृद्धिदम् । कौतुके देवीयुक्तेऽप्यौत्सवं देव्या सहितमुत्तममित्यनेन वदन्ति ॥

ध्रुवबेरस्योत्सेधं त्रिधाकृत्यैकांशमुत्तमम् । द्विभागं त्रिधाकृत्यैकांशमधमम् । ध्रुवबेरं द्वादशांशं कृत्वैकांशं तालम् । तत्तालं द्वादशांशं कृत्वैकांशमङ्गुलम् । तदङ्गुलेनैकादशाङ्गुलं समारभ्य त्र्यङ्गुलाधिकपष्ट्यङ्गुलान्तं द्व्यङ्गुलं संवर्ध्य स........तुङ्गानि कौतुकादीनि । तद्विमाननिर्देशहस्ताङ्गुलैः सप्तांगुलं समारभ्य त्रयोविंशदङ्गुलान्तं द्व्यङ्गुलं विवर्धयेत् । नवधा विभज्यै(ते द्व्य ? तदि)ष्टमानं विनिश्चित्य, एकद्वित्रिचतुर्यवहीनाधिक्यं समं न दोषाय भवति । तस्मात् कौतुकस्नपनोत्सवबलिबेराणि तत्तद्योग्यमानेन कारयेत् ॥

पश्चादायव्ययनक्षत्रयोनिवारांशकानि षट् च शुभाशुभं परीक्षयेत् । उत्सेधं त्रिगुणीकृत्य वसुभिर्हरेत् । तच्छेषमायम् । उत्सेधं चतुर्गुणीकृत्य पश्चभिर्हरेत् । तच्छेषं व्ययम् । उत्सेधं चतुर्गुणीकृत्य नवभिर्हरेत् । तच्छेषमंशकम् । तस्करभुक्तिवित्तापिनीपालकशीस्सतीग्यतोदरिद्रप्रेष्यो नवांशकमेषां शुभांशकं चेच्छुभावहमशुभांशकं चेदशुभावहम् । उत्सेधं त्रिगुणं कृत्वा वसुभिर्हरेत् । तच्छेषं योनिः । ध्वजधूमसिंहश्वावृषगर्दभगजवायसाश्चैतेऽष्टयोनयः । पूर्वं शुभमपरमशुभम् । वसुभिर्गुणिते सप्तविंशद्भाजिते शिष्टं नक्षत्रम् । तुरगाद्यं यजमानानुकूलर्क्षादाहरेत् । नवभिर्गुणिते मुनिभिर्भाजिते शेषं वारम् । एतैः सर्वं शुभं चेत् सर्वसम्पत्करम् । एतैरशुभं चेदशुभावहम् । तस्माच्छुभाधिकमशुभविहीनं बेरमाहरेत् ॥

बेरस्योद्देशमानविहीने ग्रामयजमानयोराशु विनाशाय भवति । निर्देशमानविहीने राजराष्ट्रविनाशाय भवति । तद् बेरमायादिशुभै-

युक्तमायं धनं व्ययं व्ययकरणं बेरमायविहीनं व्ययाधिक्यं यजमानस्यार्थहानिः, राज्ञः शत्रुविवर्धनम् । आयाधिक्यं व्ययं क्षीणं सर्वसम्पत्करं जयावहम् । योनिर्ध्वजं चेद् दीप्तिकीर्तिविवर्धनम् । धूमेऽप्यर्थनाशनम् । सिंहे शत्रुजयम् । श्वाने व्याधिकरम् । वृषभे लाभम् । गर्दभे बुद्धिवियोगम् । गजे सर्वार्थसाधनम् । वायसे यजमानस्य वात्महानिर्भवति । नक्षत्रं यजमाननक्षत्रादि बेरनक्षत्रान्तं, बेरनक्षत्रादि यजमाननक्षत्रान्तं वा द्वयं गणत्रयम् । पञ्च सप्त हित्वा (मू)र्तिजन्मयुक्तं शुभदम् । वारमादित्याद्यङ्गारशनैश्चरवारं योगबन्धं चेन्मुख्यम् । अंशके ......
...मकरषण्डं प्रेक्षं त्यक्त्वान्यैः शुभावहं भवति ॥

षण्मानसहितं मुख्यम् । मानहीनं धनधान्यविनाशनम् । मानाधिकं रोगविवर्धनम् । प्रमाणाधिकं हीनं च दृष्टादृष्टविनाशनम् । मानविहीनं पुत्रमित्रविनाशनम् । परिमाणहीनं भार्यावियोगम् । लम्बमानहीनं तद्ग्रामविनाशनम् । उपमानहीनं नृपनाशनं स्यात् । तेजोहीनं चक्षुःप्रियहीनं कृशाङ्गं स्थूलगात्रं तिर्यग्गतमूर्ध्वाननमवकुण्ठनं चेद् राजराष्ट्रविनाशाय भवति । किरीटाद्याभरणलक्षणहीने धनधान्यनाशनम् । बेरेऽविरुद्धलक्षणहीने दारिद्र्यकरम् । शङ्खचक्राद्यायुधानां लक्षणहीने रोगशत्रुदस्युविवर्धनम् । पीठलक्षणहीने स्थाननाशं धनक्षयम् । प्रभामण्डपलक्षणहीने कीर्त्तिदीप्तिविनाशाय भवतीति विज्ञायते ॥

ध्रुवबेरस्य पीठोत्सेधं द्वारोत्सेधस्याष्ट(क)स्यैकांशं वा तद्भुवङ्गस्योत्सेधमध्यर्धद्विगुणं वा समवृत्तं पद्माकारं चतुरश्रं त्रिमेखलं वा कारयेत् । अथवा कौतुकपीठात् पश्चिमभागं समं तत्पीठोत्सेधमानेन समस्थलं कृत्वातिदृढार्थं देवीभ्यां सह देवं स्थापयेत् ॥

कौतुकादीनां पीठं तद्द्रव्येण । बेरायामत्रिचतुःपञ्चषट्सप्तनवभागैकभाग(म)स्योर्ध्वपद्मोच्चं तत्त्रिभागैकभागं भिन्नमभिन्नं वा कृत्वा तस्यार्धादष्टांशोनमूर्ध्वतलोत्सेधं तस्य विस्तारमधः पद्मविस्तारात् पञ्चभागोन्नतं तत्पीठोत्तुङ्गादध्यर्धं त्रिपादं द्विगुणं वा पीठविस्तारं जगत्या बाह्यतस्तद्दशांशोनमूर्ध्वपट्टिकायामं तदष्टांशोनविस्तारमधः पद्मदलाग्रविस्तारमथवा बेरोदयं षडंशं कृत्वा तद्विभागं पञ्चभागद्विभागं पीठविस्तारं कारयेत् । पीठोत्सेधं त्रयोदशभागं कृत्वा एकांशं पादुकं

कम्पं त्र्यंशं जगतीं द्व्यंशार्धं कुमुदस्योर्ध्वेकम्पमर्धांशकं कण्ठमर्धांशं कम्पं तस्योपरि द्व्यर्धांशं महापट्टिकासहितमेव पीठं कारयेत् ॥

उपपीठस्योत्सेध.........भागं कृत्वा, एकांशं पादुकं तदूर्ध्वे द्व्यंशं पद्ममेकांशं कम्पं त्र्यंशं कण्ठमेकांशं कम्पं तदूर्ध्वे द्व्यंशं पद्मं तदूर्ध्वे महापट्टिकां कृत्वा संयोजयेत् ॥

आसनस्य पीठोत्तुङ्गं तद्वेरोत्सेधं त्रिधाकृत्य, एकांशं तदष्टांशाधिकं तदष्टांशोनं वा विस्तारं विस्ताराद् द्विगुणं दैर्घ्यं त्रिगुणं वा । अन्यत् सर्वं पूर्ववत् । एवमासनं प्रकल्पयेत् ॥

पार्श्वयोरुभौ पक्षौ सुषिरं वा कारयेत् ॥

प्रभामण्डलमेकाद्वित्रिचतुःपञ्चयष्टिकाकारं प्रत्येकं देहलस्याङ्गुलेन चतुस्त्रिद्व्येकाङ्गुलविस्तारं चतुरष्टद्वादशाङ्गुलं षोडशाङ्गुलविस्तारं रश्मिमालासहितम् । रश्मयस्त्रिनताः । सर्वत्र समा दक्षिणे दक्षिणावर्ता वामे वामावर्ताश्च । युक्त्या तीक्ष्णांस्तु कारयेत् ॥

मौलि(शि)खामणेरूर्ध्वं चतुरङ्गुलम् । पार्श्वयोश्चक्रशङ्खयोरन्तरं भां हित्वांशकौ सुषिरौ प्रभां संयोजयेत् ॥

अथ बेरार्थं मधूच्छिष्टक्रियां क्रियार्थं वक्ष्ये । शुक्लपक्षे कर्त्रनुकूलर्क्षे कारयेत् । तद्दिनात् पूर्वमङ्कुरानर्पयित्वालयाभिमुखे यजमानगृहे प्रपां कृत्वालङ्कृतां मध्ये गोचर्ममात्रमुपलिप्य पञ्चवर्णैरलङ्कृत्य, तस्मिन्नौपासनाग्निकुण्डं कृत्वाघारं हुत्वाघारान्ते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं पाञ्चभौतिकं वैघ्नं स्विष्टाकारं च हुत्वा पश्चाच्छिल्पिनमाहूयाङ्गणे गोमयेनोपलिप्य तन्मध्ये त्रिपादीं चुल्लीं वा संन्यस्याग्निं निधाय शुद्धे पात्रे मधूच्छिष्टं प्रक्षिप्य चुल्ल्यामवारोप्य प्राङ्मुखः शिल्पिना समेतोऽग्निना पाचयित्वा नववस्त्रेणोत्पवनं कृत्वा सिक्थमादाय प्रोक्ष्याचार्यः प्राङ्मुखो भूत्वा इदं विष्णुरिति मन्त्रेणाभिमृश्य, उत्तमाङ्गं कृत्वा, देव्यादीनां तत्तन्मन्त्रेणाभिमर्शनादीनि कारयेत् ॥

आचार्यादिभ्यो दक्षिणां दत्त्वा पुण्याहं वाचयेत् । पश्चाच्छिल्पिनमाहूय सम्पूज्य शिल्पिना सिकतामादाय बिम्बं सलक्षणं कृत्वा

तद्बहिर्मि…………या शनैरालिप्य संशोष्य तद्बहिरायसपट्टैः सम्बन्धयित्वा मृदमालिप्य शोषयित्वा पुनः शुभे दिने पूर्ववद्धोमं हुत्वा बिम्बगर्भं प्रताप्य पुरःसन्तप्तलोहेन शिल्पिभिस्तज्ज्ञैर्बिम्बगर्भमत्वरेण पूरयेत् । प्रभाते त्वाचार्यो यजमानः शिल्पिना साकं शनैर्मृदं हित्वा बिम्बशुद्धिं च कारयेत् । बिम्बं स्थापितं पूर्णं खण्डितं स्फुटितं वा यदि भवेत्, तद्वेरे लोहवत् स्मृत्वा पूर्वोक्तहोमं कृत्वा पूर्ववद् बिम्बमाहरेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते ध्रुवकौतुकपीठलक्षण-
मधूच्छिष्टविधिर्नाम त्रयोविंशः पटलः ॥

## अथ चतुर्विंशः पटलः ।

अथ विमानादिमानविभागार्थमङ्गुलीनां विधिं वक्ष्ये । मानाङ्गुलं मात्राङ्गुलं देहलब्धाङ्गुलमिति त्रिविधं भवति । दिनादावादित्यरश्मयो जालकान्तः प्रविष्टे तद्गोचरेऽन्त्यक्षुण्णलवो शावः प्रोक्त(?)-ष्वेवं परमाणुभिरष्टाभी रथरेणुः । रथरेणुनाष्टगुणितं रोमाग्रम् । रोमाग्रादष्टगुणितं लिख्या । लिख्यादष्टगुणितं यूकम् । यूकादष्टगुणितं यवम् । यवादष्टगुणितं मानाङ्गुलमुत्तमम् । तदष्टांशोनं मध्यमम् । तत्तुरीयांशोनं मात्राङ्गुलं मध्यमम् । पुरुषस्य दक्षिणहस्तस्य मध्यमाङ्गुलेर्मध्यमपर्वणि विस्तारमायतं वा मात्राङ्गुलम् । बेरोत्सेधं तत्तालांशेन विभज्यैकांशं देहलब्धाङ्गुलं तदष्टांशं त्रयाणामङ्गुलानां संज्ञामात्रं च । मूर्तिविष्कम्भे नभःक्षित्युक्ताश्चेत्यकाङ्गुलस्य, (कत्वा ? अत्युक्ता)गोलकाश्विनीयुग्मब्राह्मणविहगाक्षिपक्षाश्चेति द्व्यङ्गुलस्य, कृशाग्निरुद्राक्षगुणाकोलाश्र(?)रामवर्ग्यमध्याः त्र्यङ्गुलस्य, वेदप्रतिष्ठाजातिवर्णकरणाब्ध्यजाननगतर्याम्भ(?)श्चेति चतुरङ्गुलस्य, विषयेन्द्रियभूतसुतसुप्रतिष्ठापृथिवी चेति पञ्चाङ्गुलस्य, स्कन्दा(ग ? ङ्ग)रससमयगायत्रीकृत्तिकाकुमारानकौशिकर्तुः षडङ्गुलस्य, पातालमुनिधातवो लोकोष्णिगरोहिणीद्वी(प)वर्णागाम्भोनिधयश्चेति सप्ताङ्गुलस्य, लोकपालनागवस्वनुष्टुब्गणाश्चेत्यष्टाङ्गुलस्य, बृहतीग्रहरन्ध्रसूत्रं नवाङ्गुलस्य, दिक् प्रादुर्भावा

नाभिः पङ्क्तिर्वै ..........श्चेति दशाङ्गुलस्य, रुद्राश्चेत्येकादशाङ्गुलस्य, वितास्तिर्मुखं तालं यमं चार्को राशिर्जगती रक्ष्णी चेति द्वादशाङ्गुलस्य, (अति)जगती त्रयोदशाङ्गुलस्य, मनुश्चतुर्दशाङ्गुलस्य, (मनुर्दशाङ्गुलस्य ?) (अति)शक्करी तिथिश्चेति पञ्चदशाङ्गुलस्य, (अतिशक्करी ?) क्रीडाष्टीन्दुकलाश्चेति षोडशाङ्गुलस्य, अत्यष्टि(रिति सप्तदशाङ्गुलस्य), स्मृतिर्धृतिश्चेत्यष्टादशाङ्गुलस्य, अतिधृतिरेकोनविंशस्य, कृतिर्विंशदङ्गुलस्य, प्रकृतिरेकविंशदङ्गुलस्य, आकृतिर्द्वाविंशतेः, (वि)कृतिस्त्रयोविंशतेः, सत्कृतिश्चतुर्विंशतेः, अ(ति)कृतिः पञ्चविंशतेः, उत्कृतिः षड्विंशतेः, नक्षत्रं सप्तविंशदित्येवं मानानि भवन्ति । मानं प्रमाणमुन्मानं परिमाणमुपमानं लम्बमानमिति षण्मानम् । आयाममायतं दीर्घमित्येकार्थवाचकाः

विस्तारं विस्तृतं तारं विसृतिर्विसृतं व्यासं विसारितं वि ुलं ततं विष्कम्भमिति प्रमाणस्य, बहलं निर्वृतिं घनमुच्छ्रायं तुङ्गमुन्नतमुदयमुत्सेधमेकार्थमित्युन्मानस्य, निष्क्रमनिष्कृतिनिर्गमनिर्गतिरुद्गतिरुद्गम इत्युन्नतस्य, उन्मानमार्गं प्रवेशनं च परिमाणनाहावृत (इति) परिमाणस्य । निर्वृतिर्विवरमित्युपमानस्य । सूत्रलम्बमानमिति यत्तल्लम्बमानम् । एतैः षण्मानैर्युतं वेरं चित्रं, नाहार्धयुतं बेरमर्धचित्रं, नाहोन्नतिभ्यां हीनं यत् तदाभासबेरम् । आभासां सप्रमानं ? नैव कारयेत् ॥

अथ देवानां तालविधानम् । देवस्योत्तमं दशतालम् । तथैव ब्रह्माणं शङ्करं च श्रीभूमिभ्यामुमासरस्वतीभ्याम् मध्यमं दशतालम् । इन्द्रादिलोकपालानामादित्यचन्द्रयोर्द्वादशादित्यैरेकादशरुद्राणामष्टवसूनामश्विन्योर्भृगुमार्कण्डेययोः वीशशेषिकयोर्दुर्गागुहसप्तऋषीणामध्यमं दशतालम् ! यक्षेशनवग्रहादयश्चान्यदेवानां नवार्धतालमानेन, दैत्ययक्षोरगेशसिद्धगन्धर्वचारणमहवनश्चोत्तमनवतालेन देवकल्पमनुजानां सत्र्यङ्गुलं नवतालं निशाचरासुराश्चान्ये च नवतालं प्रेताः षट्तालेन, वेतालाः कुब्जाः पञ्चतालेन, वामनाश्चतुस्तालेन, भूताः किन्नराश्च त्रितालेन, कूश्माण्डा द्वितालेन, कबन्धान् वामैकतालेन, तेषां प्रत्येकमुत्तममध्यमाधमभेदा भवन्ति । चतुर्विंशच्छताङ्गुलमुत्तमं दशतालम् । सद्विंशतिशताङ्गुलं मध्यमं दशतालम् । षोडशाधिकशताङ्गुलमधमं

दशतालम् । अङ्गुष्ठप्रदेशिनीभ्यां मितं प्रदेशिनीमध्यमेन नतालमनामिकया मितं कनिष्ठिकया मितं गोकर्णमानाङ्गुलेन चतुर्विंशदङ्गुलं किष्कु पञ्चविंशदङ्गुलं प्राजापत्यं षड्विंशत्यङ्गुलं, धनुर्ग्रहं सप्तविंशत्यङ्गुलं धनुर्मुष्टिरेतैश्चतुर्गुणैर्दण्डम् । दण्डेन ग्रामादीनां विन्यासं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्तेऽङ्गुलिसंज्ञा-
विभागो नाम चतुर्विंशः पटलः ॥

---

## अथ पञ्चविंशः पटलः ।

अथातः प्रतिमालक्षणं वक्ष्ये । बेरस्य लम्बमानं पूर्वमेव परीक्ष्य कारयेत् । प्रलम्बफलकामष्टषष्ट्यङ्गुलायताश्चतुर्विंशदङ्गुलं विस्तारा(त्र्य-१ द्वय)ङ्गुलयुतां लघ्वीं श्लक्ष्णां फलकां गृहीत्वा परितस्त्र्यङ्गुलं नीत्वा मानसूत्रं विन्यस्य प्राक्पश्चिमगान् सूत्रान् प्रसार्य मध्यसूत्रं विन्यस्य

पर्यन्तं तमेवं त्रयोदश सूत्रान् विन्यस्यापरभुजस्य मणिबन्धावसानं मानं सूत्रद्वयमेव ... .... त्तरानीते नित्यभ्यन्तरं भवेत् । पुरतो मध्यसूत्रयोर्मध्यसूत्रान्तं श्यङ्गुलं पुटसूत्रान्तं अर्धाधिकं श्यङ्गुलं नेत्रसूत्रान्तं तदेव च बाह्यं तत्त्र्यङ्गुलमन्तर्भुजावधिकं कक्षपर्यन्तं द्वयोश्चतुरङ्गुलं बाहुपर्यन्तं तदेव मध्यमं कर्णाभ्यन्तरमङ्गपार्श्वमध्यं स्याद् श्यङ्गुलं .... तिरतस्त्र्यङ्गुलं शिरः पृष्ठावसानकं तदेवापरभुजावधि भवतीति । एवं दक्षिणोत्तरगान् सूत्रान् षट् च विन्यस्य तत्सूत्रसंयोगं कृत्वा तन्तुना यवान्तरमात्रान् सुषिरे संयोज्याग्रे प्रोतकुण्डलं लोहमयं मृण्मयं वा सम्बध्य सूत्रान् प्रलम्बयेत् । मध्यसूत्रं शिखामणेः........ संस्पर्शनमेव लम्बयेत् ॥

स्थानकस्य मध्यसूत्रं वक्ष्ये । मौलिशिखामणेर्मध्यभ्रूसङ्गमनासाग्रमध्ये कर्णे हृदये कुक्षौ नाभौ योनौ पादयोश्च मध्ये प्रलम्बयेत् । तत्सूत्रं स्पर्शनं नासाग्रं कुक्षिमध्यं च सूत्रान्मौल्यग्रपट्टान्तं षडङ्गुलं हनुमध्यं यवाधिकचतुरङ्गुलं हिक्कान्तं चतुरङ्गुलं भ्रूमध्यं द्व्यङ्गुलं

नाभिः पञ्चयवमेकाङ्गुलं योनिमूलं द्व्यङ्गुलमूरुमध्यं त्र्यङ्गुलं जान्वन्तरं षडङ्गुलं जङ्घान्तरमष्टाङ्गुलं नालकासूत्रात् पूर्वं सार्धाष्टाङ्गुलमङ्गुष्ठाग्रसूत्रात् पुरतो द्व्यर्धाङ्गुलमेवं मध्यसूत्रवशान्मानयेत् ॥

बाहुपर्यन्तमेव पार्श्वसूत्रं स्यात् । चूडामणिं मूर्ध्नी कर्णपाल्यन्तके बाहुकोर्परयोः पार्श्वे जानुजङ्घागुल्फानां मध्ये प्रलम्बयेत् । मौलिं मूर्धनि कटिककुद्वंशस्फीरपार्ष्णीनां मध्ये पृष्ठमध्यसूत्रं प्रलम्बयेत् । शिरःपार्श्वे वक्त्रबाह्ये चूचुकाग्रमध्ये श्रोणिपार्श्वे चोरुजङ्घानां मध्ये वक्त्रमाभ्यन्तरसूत्रं प्रलम्बयेत् । एषां पट्ट च पीठमवलम्ब्यान्यान् तत्तदङ्गस्पर्शनमात्रमेवालम्बयेत् । आसनस्योर्ध्वकायस्योक्तं पूर्ववन्मध्यसूत्रादिपट्टसूत्रादिमासनस्योपरि लम्बयेत् । मध्यसूत्रजान्वोपरिष्टात् केशान्तं तन्मध्येऽङ्कं जान्वोः पार्श्वाभ्यां बाहुभ्यां च मध्यगं सूत्रं प्रलम्बयेत् । सूत्रान् वामजान्व(न्त)रमूर्ध्वकायार्धसमं दक्षिणाजान्वन्तरमेवं चतुरङ्गुलं त्र्यङ्गुलं वान्यत् सर्वं पूर्ववत् कारयेत् ॥

अथात उपमानं वक्ष्ये । परभुजस्य मणिबन्धान्तरमष्टाङ्गुलमुष्णीषाच्छङ्खचक्रान्तं मुखमध्योदरात् कोर्परान्तरं षडर्धाङ्गुलमभयस्य मध्यमानं स्यात् । चूचुकान्तरं त्रयोदशाङ्गुलं स्वागतस्य मध्यं नाभ्यन्तरं दशाङ्गुलं वरदस्य मध्याच्छ्रोण्यां नवाङ्गुलं वामहस्तस्य मध्याङ्गुलाग्रा........मर्धान्तरपडङ्गुलमूरुमूलान्तरमेकाङ्गुलमूरुमध्यान्तरं द्व्यन्तरमष्टाङ्गुलजान्वन्तराङ्गुलं जङ्घयोर्मध्यं पञ्चाङ्गुलं नालकान्तरं षडङ्गुलमक्षयोरन्तरं पञ्चाङ्गुलं पार्ष्ण्यन्तरं चतुरङ्गुलं मध्यान्तरं षडङ्गुलमङ्गुष्ठान्तरमष्टाङ्गुलशय्यातब्रह्मसूत्रस्य दक्षिणतो मुखं त्र्यङ्गुलं पादाङ्गुष्ठाग्रयोर्मध्यं त्रिंशदङ्गुलं पार्ष्ण्यन्तरं भागं जान्वोरन्तरं चतुर्दशाङ्गुलं स्यात् । एवमुपमानं च लक्षयेत् ॥

अथातो देवेशस्योत्तमं दशतालवशादुन्मानं वक्ष्ये । त्रियवाधिकमेकाङ्गुलमुष्णीषं केशान्तं त्र्यङ्गुलं दक्सूत्रं त्रियवाधिकं चतुरङ्गुलं तत्समं पुटान्तं तत्समं हन्वन्तं गलमर्धाङ्गुलं हिक्का यवोनचतुरङ्गुलं हिक्काद् हृदयान्तं हृदयान्नाभ्यन्तं नाभेर्मध्यान्तं क्रमात् त्रियवाधिकत्रयोदशाङ्गुलं मेढ्रादूर्वायामं त्रियवोनं सप्तविंशदङ्गुलं त्रियवाधिकं

चतुरङ्गुलं जङ्घा चोरू समायामं पादं सत्रियवचतुरङ्गुलं पादायामं सप्तदशाङ्गुलं हिक्कासूत्रादधस्ताद् बाहुदीर्घं सप्तत्रिंशदङ्गुलं कोर्परं त्र्यङ्गुलं प्रकोष्ठमेकविंशदङ्गुलं तलं सप्ताङ्गुलं मध्यमाङ्गुलायामं षडङ्गुलार्धं तर्जनी यवाधिकं पञ्चाङ्गुलाधिकायाममनामिकान्तं द्वियवाधिकाष्टाङ्गुलं द्वियवं भागं कनिष्ठाङ्गुलान्न द्वियवाधिकं स्यात् ॥

अथ प्रमाणं वक्ष्ये । उष्णीषात् पूर्वकेशान्तं नवाङ्गुलं द्विपार्श्वयोस्तत्समं पृष्ठकेशान्तं द्वादशाङ्गुलं मुखस्य विस्तारं चतुर्दशाङ्गुलस्य द्विचत्वारिंशदङ्गुलान्नाभं शिरसः पृष्ठकर्णयोरन्तरं त्रयोदशाङ्गुलं पूर्वतः षड्विंशदङ्गुलं शेषं ........स्थानं भ्रुवोर्मध्यमेकाङ्गुलं केशान्ताद् भ्रुवोर्मध्यं त्र्यङ्गुलमष्टाङ्गुलार्धतिर्यक्पक्षेपमक्षयामं मध्यमष्टाङ्गुलार्धं ........ ........विस्तारं नवार्धाङ्गुलं बाह्वोः पर्यन्तं चतुश्चत्वारिंशदङ्गुलो वक्षविशालं चतुर्विंशदङ्गुलं हृदयविस्तारं विंशदङ्गुलं स्तनयोरन्तरं चतुर्दशाङ्गुलं मध्योदरं षोडशाङ्गुलं श्रोणीविस्तारमष्टादशाङ्गुलं कटीविशालं विंशदङ्गुलमूरुमूलविशालं त्रियवाधिकं त्रयोदशाङ्गुलं मध्योरुविस्तारमेकादशाङ्गुलं जानुविस्तारं नवार्धाङ्गुलं जङ्घामूलमष्टाङ्गुलं जङ्घामध्यविस्तारं सप्ताङ्गुलं नलकाविस्तारं चतुरङ्गुलार्धमक्षगुल्फान्तं पञ्चाङ्गुलं पदविस्तारं पञ्चाङ्गुलार्धसार्धवेदाङ्गुलविशालोत्सेधं पार्ष्णीं सार्धकगायत्रीमात्रं पादाङ्गुलिविस्तारमङ्गुष्ठायामं चतुरङ्गुलं तर्जनी तद्यवाधिकं तद्यवोनं मध्यमाङ्गुलं त्रिमात्रार्धानामिकाकनिष्ठिकाङ्गुलायामं त्रिमात्रं कनिष्ठाग्रङ्गुष्ठान्तं क्रमात् सप्ताष्टार्धनवषोडशभिर्यवैरङ्गुलानां विस्तारं शेषमित्वरं बाहुमूलविस्तारदशाङ्गुलं बाहुमध्यं नवाङ्गुलं कोर्परं सप्तार्धाङ्गुलं प्रकोष्ठमध्यसप्ताङ्गुलं मणिबन्धं चतुर्मात्रं तलं सार्धषण्मात्रं रुद्राष्टनवसप्तपञ्चयवविपुलमङ्गुष्ठादिकनिष्ठान्तमङ्गुल्यग्राणि तद्यवार्धं हीनं सप्तवेदपुनुर्यागियवाङ्गुष्ठादिनखानां विशालं द्वियवाधिकायामं द्विपर्वाङ्गुष्ठमन्यानि त्रिपर्वाणि । अङ्गुलान्यङ्गुष्ठमूलं पर्वमधाधिकाङ्गुलं द्व्यर्धाङ्गुलमग्रपर्वं तर्जनीमूलपर्वं चतुर्दशयवं मध्यपर्वं त्रयोदशयवा अग्रपर्वं द्वादशयवा अग्रमध्यमाङ्गुलिमूलपर्वमष्टादशयवं मध्यपर्वं षोडशयवा अर्धयवाग्रपर्वं पञ्चदशार्धयवा अनामिकामूलपर्वं चतुर्दशार्धं यवा मध्यपर्वं त्रयोदशार्धं यवा अग्रपर्वं द्वादशयवा कनि-

ष्ठाङ्गुलपर्वमूलं द्वादशयवा मध्यपर्वमेकादशयवा अग्रपर्वं दशयवाङ्गुलमङ्गुलीनामग्रे द्वियवाधिकं नखाग्रं पार्ष्णिहस्तघनं वेदा .......
........घनं द्व्यर्धाङ्गुलमग्रमङ्गुलीवल्लक्षयेत् । शुकोदरघनं द्व्यर्धाङ्गुलं मणिबन्धात् तदायामद्वियवोनं त्र्यङ्गुलं पार्ष्णिहस्तविस्तारद्वियवोनचतुर्दशाङ्गुलं तस्याग्रे तर्जन्यादिकनिष्ठान्तानां मूलतलमांसलमर्धमात्रेण शेषतलनिम्नमङ्गुष्ठतर्जन्योर्मूलयोस्त्र्यङ्गुलमर्धाङ्गुलीनामधोमूलसन्धिमङ्गुलिमेकाग्रो वा नीचार्धाङ्गुलकनिष्ठिकादेशमूलात्तर्जनीपार्श्वगा आयुरेखा मध्याङ्गुल्यधो द्व्यङ्गुलं तस्य षड्यवमधस्तात् । विद्यारेखा तलमूलात् कराग्रान्तात् । ब्रह्मरेखा दक्षिणे दक्षिणकरतले चक्रशङ्खाभा रेखा भवेत् । तदुत्क्षेपनिम्नद्वियवं तारावर्तं द्व्यङ्गुलं तत्तदुत्क्षेपविशालमध्यर्धाङ्गुलत्रियवोन्नतहस्तिमस्तकवद् विस्तीर्णमध्यमस्तकं सोत्तममङ्गुलं भ्रूतलं भ्रुवं चतुर्यवं सा पञ्चाङ्गुलायामा सार्धैकयवा तारमात्रार्धमात्रा तद्द्वियवार्धग्रीवपुच्छका च भवेत् ॥

भ्रूलताग्निन्धरोमसञ्चिता त्र्यङ्गुलं नेत्रतारं भ्रुवः स्थलादर्धाधिकाङ्गुलायामवेमचमक्षिमण्डलादूर्ध्वाधो वर्मसञ्छन्नमूर्ध्ववर्म द्वादशयवमधोवर्म चतुर्यवमेतयोर्योगं नयनसूत्रमूर्ध्वाधश्चर्मविस्तृतिश्चतुर्यवं यवं नेत्रान्तरं यवार्धं ज्योतिः यवप्रमाणं दृष्टियूकमात्रमूर्ध्ववर्म तत्तद् द्वियवमधोवर्म ततं यवार्धकं वर्मणो घनं अर्धयवं नवतिः पक्ष्मरोमाणि शेषलविस्तारव्यर्धयवमग्रविशालतिर्यग्यवपञ्चकं पुटस्य बहलं यवमात्रायतान्वितं निष्पावबीजसदृशं तिलपुष्पसमाकारां नासिकापुटसूत्रान्नासाग्राद् यवार्धं लम्बितं सार्धचतुर्यवगोजीपुटं द्वियवविस्तारं त्रित्रिक्रमं चोरपाली यवार्धोर्धविस्तृता त्रियवार्धतता सार्धयववेदाङ्गुलायतमुत्तरोष्ठमास्यतारकानां तदेव चत्वारः पुरतो दन्तास्त्रयमायामाविस्तृतास्तावन्तो धरा-
......द्वियवार्धततायतचतुर्यवायतौ दंष्ट्रौ सदंशमुकुलोपमावूर्ध्वाधोदंष्ट्रौ च यवाधिकौ पुटो दन्तन्तान् यवार्धोनायता ........ विस्ताराः पञ्चोपदंष्ट्रौ विपार्श्वगा द्वात्रिंशद् दन्तसङ्ख्यावधरोत्तरयोर्दन्तायसमावन्तस्तदर्धोऽन्तरापणा जिह्वा षडङ्गुलायामार्धविस्तारा घृताजिह्वाङ्गुलं बाहुकर्णरन्ध्रं कलाङ्गुलं घृतान्तालुविस्तीर्णं त्र्यङ्गुलास्यं नवयवान्तरद्विगुणायतं षड्यवास्तस्योत्सेधं यववालिका रक्ताभगतं शेषमायामं

द्विगुणमोष्ठाधस्ताच्चिबुकाष्टार्धयवं हनुस्ततश्च तत्समम् । तस्माद्धनुचक्रं च षड्यवं तदुन्नतं रुद्राक्षयवं चिबुकं निम्नगहनोद्गलङ्गात् कण्ठमङ्गुलार्धं गलरेखा अर्धायामा चापसन्निभा कर्णबन्धाद् हनोर्मध्यं दशाङ्गुलं तस्याश्चतुष्कसृक्कादधस्तादपाङ्गनेत्रमङ्गुलमपाङ्गात् कर्णमूलं षडङ्गुलं कर्णकलान्ततनेत्रसूत्रधमं कर्णस्योतं तत्कर्णतुङ्गतारकर्णनालमूलकलासार्धयवं कर्णवर्त्ती यवाध्यर्धतना पाली चतुर्यवा कर्णपिप्पली चतुर्यशा विस्ताराद् द्विगुणायता पिञ्छूषि त्र्यङ्गुलायामं षड्यवविशाला कर्णावर्ती पिञ्छूषि चूलिकाया वर्तुलं तुर्यं यवार्धविस्तारा पिञ्छूलितकर्णचूलिकाकर्णवर्त्युन्नतं चूल्यन्तान्नदध्यर्धयवमध्याङ्गुलं कर्णचूलिकानतिर्यवान्तरं पिप्पलीव नल्योत्पाली बालेन्दुसन्निभा यवनिष्पावबीजसदृशा पिप्पली षड्यवायताश्चतुर्यवविशाला स्रोतोऽधो नेत्रसूत्रात् पिञ्छूष्यधः कण्ठनालमात्रार्धघनयुक्ता नालौ पूर्वापरौ विवरं पञ्चयवमधोनाहं मात्रा स्यात् कर्णमूलादधो वपुः कार्यं कृकाटी सार्धाङ्गुलानता तस्यापरं यवभागं ग्रीवायामं तत्रायतार्धाङ्गुलं तारं द्वादशाङ्गुलं स्कन्धयोः समे कर्णबन्धाधः कण्ठबन्धसन्धिः षडङ्गुलार्धं सप्ताङ्गुलं स्कन्धौ-
............भनाश्रिता हिक्कासूत्रात् स्कन्धसन्धौ चतुरङ्गुलं तन्मध्येऽध्यर्धाङ्गुलं जत्रुबाहुशिरःसन्धिकसार्धस्कन्धमूलोन्नतं वाङ्गुलद्वियवं त-
............ षडङ्गुलं बाहुशिरोजत्रुसहितं कोर्परांशसककुदरकटिबन्धं तद्वंशं नागाधिकं तत्समं ककुदधस्ताद्भागे कक्षधारं त..............
पर्यन्तं तद् द्वियवं नवाङ्गुलं स्कन्धसन्धेरधस्तादंसपीठं वार्धं त्र्यङ्गुलं तस्माद् द्वियवांसफलका तत्सूत्रमानं तत्रान्तयोर्दशाङ्गुलकक्कु..........
मात्रं तारं तद् त्र्यङ्गुलं तद्वक्षसो समाङ्गुलयोः सन्धिवंशातारं कला नतवंशं पार्श्वे चांसफलकाधो नवाङ्गुलं बृहत्योः स्तनान्तरं वंशात् सुप्रतिष्ठाकालं तयोर्बृहतीस्तनयोर्मध्यं सप्तदशाङ्गुलं बृहत्या कटिसन्धि तन्मध्यं सप्ताङ्गुलायतं तद्घनं स्याच्चतुर्भागं तदधोऽङ्गुलाधिका कटिसन्धिमुखं सार्धाङ्गुलं खण्डकान्तं खण्डस्य पुरस्ताद् वायुभागाङ्गुलं सार्धा धृतिमात्रं कटिबन्धविशालं जघनस्य बहिः पृष्ठे वंशपार्श्वयोः ककुन्दरं षडर्धाङ्गुलं विशालं निम्नौ ककुन्दरस्य त्र्यङ्गुलं द्विखण्डकं बिन्दुखण्डकयोस्तिर्यग्घटिका वेदार्धमात्रिका खण्डत्र्यङ्गुलं स्फिगालं सतारं

नवाङ्गुलं सुवृत्तं कर्णकं पुसुमो वृत्तो द्विरेखावृत्तोऽधस्तान्नाडिकाधो द्वादशयवं मुखं ऋकपाहिकान्तं तावत् स्तनकक्षान्तादष्टाङ्गुलमृदुरोहत्य वाधिक्यं हृदयात् स्तनपीठतुङ्गमर्धाङ्गुलं कक्षाधरालम्बयवकोलकस्तनपीठस्योन्नतं कक्षस्याङ्गुलं तत्पुरस्तान्मुखं त्रिभाङ्गुलं यवं वृत्तं स्तनं यवोन्नतं स्तनाक्षं द्वियवं तारं तदधस्ताद् द्व्यङ्गुलं स्तनहिका द्व्यङ्गुलं निम्नं जत्रुरेखा द्व्यङ्गुलं नाभिर्दक्षिणावर्ता पञ्चयवनिम्ना यतेन्द्रियाङ्गुलानाभे श्रोणिपार्श्वे त्रिकलाङ्गुलाद् द्व्यङ्गुलोर्ध्वकटिश्रोण्या शेषं मेढ्रपीठ सार्धपञ्चाङ्गुलं लिङ्गायतं तारं द्विमात्रं मुष्कं लम्बं तुर्यार्धाङ्गुलं तत्समविस्तारं द्वयाननसदृशं मेढ्रं ......... क्षाङ्गुलं प्रतिष्ठाङ्गुलस्य द्वियवं जानुमण्डलविष्कम्भं घनं द्व्यर्धमात्रं पार्श्वबन्धं तुर्याङ्गुलं पृष्ठजानु त्रिमात्रार्धयवविस्तारान्वि ........... मध्यभागे शेषं पार्श्वयोरपि जान्वन्तादिन्दुवस्त्यतन्तान्मत्स्यवदुन्नतं पृष्ठजङ्घाश्रितमत्स्यपार्ष्णिद्व्यर्धकला.............. ....तनुपृष्ठपार्श्वयोरन्तरं तद्बहिर्गते कक्षगुल्फयोस्तुङ्गं मनुपद्वियवैर्विपुलक्रमेणाष्टादशानियवं प्रतिष्ठार्धा...........पार्ष्णितारं तत्तुङ्गशराङ्गुलसार्धप्रपदं तुङ्गमङ्गुष्ठं द्व्यङ्गुलं घनशेषाणि विस्तारसमतुङ्गान्यष्टयवविस्तारदैर्घ्यमङ्गुष्ठद्विपार्श्वे द्वयोस्तुर्ययवं नीत्वा नखं नयेत् । चतुरर्धचतुःसार्धाग्निरश्विसार्धमध्यर्धयवैः क्रमान्नखानां विस्तारं तर्जन्यादिकनिष्ठान्तं त्रियवं तदर्धान्तार्धो नखायतान्तस्तर्जन्यङ्गुष्ठयोरन्तरं चतुर्यवं पर्वद्वयमङ्गुष्ठमन्याङ्गुल्यस्त्रिपर्वणा घना असदृशमग्रे पर्वान्तं यवाधिकमङ्गुष्ठपर्वमूलाग्रं शेषाङ्गुलीनां यवाधिक्यमेकैकं सर्वाङ्गुलिमूलानां मूलतलं मांसलं पार्ष्णिभागे तलं पञ्चाङ्गुलायामं शेषं वर्तुलं कारयेत् । पादौ द्वौ चक्रशङ्खरेखासमन्वितौ सर्वं सुव्यक्तं सुसम्पूर्णं बेरं सलक्षणं चक्षुर्नन्दनमूर्ध्वकायसममेवं कृत्वा सर्वत्र विष्कम्भात् त्रिगुणं प्रवृत्तं तत् परिमाणं स्यात् । सर्वेष्वङ्गेष्वेकयवादिपञ्चयवान्तं हीनाधिक्यं न दोषाय भवति । तस्माद् यथोचितं युक्त्या कारयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते प्रतिमालक्षणे उत्तमदशतालविधिर्नाम पञ्चविंशः पटलः ॥

## अथ षड्विंशः पटलः।

अथ देव्योर्मानं मध्यमं दशतालम्। सार्विंशतिशताङ्गुल त्रि-नतद्विभुजं समभङ्गं नतं मानं चतुरङ्गुलं श्रीदेव्या दक्षिणहस्तं प्रसा-रितमवलम्बितं वामं पद्मधरं हेमाभा महीदेव्या दक्षिणहस्तमुत्पलधरं वामं प्रसारितं तदूरुमूलावलम्बितं श्यामाभा किरीटाद्याभरणान्विता मूर्ध्नि केशान्तं भागं तस्मान्नेत्रान्तं पञ्चयवभागं नेत्रात् पुटान्तं चतुर-ङ्गुलं पुटाद्धन्वन्तं पञ्चयवं हनोः कर्णं द्विकलं कण्ठार्धायान्तं हृदयान्ना-भ्यन्तं नाभेर्योनिमूलान्तं त्रयोदशाङ्गुलं तस्मादूर्वन्तं षड्विंशदङ्गुल ……………तालकं जङ्घा चोरू समं पादभागं नलायामं चतुर्भाग-मष्टाङ्गुलायतं चतुरङ्गुलं तर्जनी तत्समा शेषाङ्गुलयः क्रमादर्धाङ्-गुलमङ्गुष्ठाद्यायतषोडशार्धसप्तसप्तार्धपञ्चयवं नखायामं च तारार्धादा-ग्रतलं विस्तारषडङ्गुलं प्रपादस्य विस्तारमुन्नतं पञ्चाङ्गुलं पार्ष्णी द्विगोलकं अक्षगुल्फान्तरं पञ्चाङ्गुलं नलकाविपुलं भागं जङ्घामध्यमं त्रिगोलकं सप्ताङ्गुलं जानुविस्ताराद्रूमूलान्नलकाग्रकं कटितारं द्विमुखं पीठं सप्ताङ्गुलविस्तारं चतुरङ्गुलायतं अश्वत्थदलवाद्यवद् विपुलं मां-सलं गुह्यश्रोणितारं कलादायं जङ्घा चोरू सपादं जानुकण्ठं शिरो-युगं मुखायामसमं कर्णवाह्यतारयुगद्वयं दशतालमुखं तिर्यक्कण्ठं सद्वियवं शेषाङ्गं विपुलमुत्तमं नवनालविस्ताराद् यवाधिकं दोर्दीर्घं सार्धसङ्-कृतिं कोर्परत्र्यङ्गुलसार्धधृतिस्त्र्यङ्गुलं प्रकोष्ठतलं षडङ्गुलायामं मध्यमाङ्गुलं केशान्तात् नादशो नासा यवं भागं हनुर्युगम्। शेषमुत्तमं नवतालेन कारयेत्॥

नवतालं त्रिवृतं श्रेष्ठं मूर्ध्नान मात्रं त्रिमात्रकेशान्तं केशान्ताद् दृक् ततो युगं पुटं पुटार्धान्वितं भागं गलमर्धाङ्गुलं गलाधिकान्तं सार्धं त्रिमात्रं हिक्काहृदयान्तं हृदयान्नाभेर्मेढ्रान्तं मुखत्रयमूरू द्विमुखं जानु-भागं जङ्घा चोरू समा पादं तुर्याङ्गुलं तालायामं चतुर्भागं बाहुदी-र्घमश्विमुखं त्र्यङ्गुलं कोर्परं सार्धं मुखायामं प्रकोष्ठं तलं षण्मध्यमाङ्गुलं तदेवाष्टत्रिंशद्यवायामानामिका तर्जनी तत्समा भागा यवाङ्गुष्ठकनिष्ठो दशवद्धनुष्ठवुर्णिकृपस्य वपि……………क्रमाद् अङ्गुष्ठा त्र्यङ्गुलीनां तलं पञ्चपञ्चाङ्गुलं मणिबन्धं त्रिमात्रं प्रकोष्ठं पञ्चाङ्गुलं कोर्परान्तरं

षडङ्गुलं बाहुतारं तिर्यक्शिरोद.........................शान्ताद् भ्रू त्रिमात्रिका। ततोऽक्षि तत्समं नास्यङ्गुलमध्यात् ततोऽङ्गुलमधुरं हनुशेपं मध्यमं दशकलाः कर्णान्तं सुप्रतिष्ठा कर्णायामं भागं ना.... ............गाय तदेव पुटान्तविस्तृतं नास्यः कला त्रिव्यर्धाङ्गुल-मध्यर्धाङ्गुलं तुङ्गस्याधरं पञ्चयवोन्नतं हनोर्गलगोत्कण्डमङ्गुलाद् व्यङ्गुलान्नवतालं कण्ठात्तारं द्वि...................बाह्वोः सीमायामं त्रयो वक्षेपा दशाक्षि सप्तगोलकविस्तारं श्रोणिभागं चतुर्भागं कटिरष्टा-दशाङ्गुलं लिङ्गदीर्घविपुलं द्व्यङ्गुलकालम्बितं भागम्..............यमं जानु द्विभागं जङ्घा षण्मात्रं नलका वेदाङ्गुलं प्रपदं पञ्चाङ्गुलं तलाग्रं ततत्रिकलकलाताद्विगुणायामं सयवं भागं प्रदेशिन्यायामं तारद्व्यर्धा-ङ्गुलं मध्यमादिकनिष्ठान्तानामेकैकमर्धाङ्गुलहीनायामं सप्तषट्पञ्चयव-विपुलं यथाक्रमेण कारयेत् ॥

सत्र्यङ्गुलं नवतालमूर्ध्वं व्यङ्गुलहीनं नाभेरङ्गुलमूरूमेका-ङ्गुलं सक्थिन्यङ्गुलहीनं मध्यमं नवतालादीनि कारयेत्। कनीयसं नवतालं हिक्कानाभ्यन्तं मात्रद्वयमूरुमूलं जङ्घायाममेकाङ्गुलं हीनं कृ-त्वान्यत् सर्वं मध्यमं नवतालवत्। बाह्वादीनां विशालवद् यवहीनं कक्षयोरन्तरे कुक्षौ श्रोण्योरूरू जानुतते श्रेष्ठाङ्गुलविहीनं शेषं पूर्व-वदाचरेत् ॥

स्त्रीणां केशान्तसमं सार्धं सार्धयुगं पुटान्तं पुटाद्धनुस्त्रिमात्रार्धं सर्वासां गलं नेष्यते। शेषं पुंरूपवत्। विस्तारायामं ग्रीवादौर्विपुल-वद्विकलाकौर्परं पञ्चाङ्गुलं मणिबन्धं त्रिमात्रं षड्यवयुगतलं यवोनं विपुला सर्वाङ्गुल्या शेषाङ्गुलविस्तारं नवार्धतालवत्। स्त्रीमानं त-लोर्ध्वाङ्गुलं हीनं पादश्रोणिनेत्रायामविस्तारं सप्ताङ्गुला नाभ्यधो नाभिषड्यवविस्ताराङ्गं गम्भीरोदरं मध्यं रुद्राङ्गुलिविशालं स्तनादधो-हृदयं त्रयोदशदशाङ्गुलं चूचुकं त्र्यङ्गुलविस्तारं स्तनोच्चं चतुर्धा-ङ्गुलं स्तनाक्षमुन्नतं व्यङ्गुलं कक्षयोरष्टादशाङ्गुलं विशालं छन्दो-ऽङ्गुलं बाहुदीर्घं कोर्परं व्यङ्गुलायतं प्रकोष्ठं दृक् कलाङ्गुलं तलं सप्ताङ्गुलायामं मध्याङ्गुलं त्रिकलापञ्चाङ्गुलं अनामिकातर्जन्याना-मिकासमाङ्गुष्ठकनिष्ठौ द्विकलायतौ नवसप्ताष्टसप्तयवविस्तारं क्रमाद-

ङ्गुलीनां संशैकांशं चतुरंशैकांशं सवाग्राङ्गुलं तारं नखदीर्घं यवाधिकषडग्निवेदभूतसप्ताङ्गुलविस्तारक्रमात् मणिबन्धं तलप्रकोष्ठं मध्यकोर्परदोर्मध्यजमूलं च कर्णविस्तारं सप्ताङ्गुलमुखं द्वादशाङ्गुलं कुक्कुटाण्डसमाकारं केशान्ताद् भ्रूस्त्रिमात्रार्धं ततोऽक्षिद्वयं त्र्यङ्गुलं पुटादास्यं यवाङ्गुलं तदर्धाङ्गुलायतमधरं यवाङ्गुलशेषे हनुः कण्ठाद्धनुस्त्रिमात्रार्धतुङ्गशेषं पूर्ववत् । कटकाङ्गुलस्य चोत्तुङ्गस्तनाक्षसमं मणिबन्धान्नाभेरन्तरं सार्धं त्रयोदशाङ्गुलं तत् ......................
बाह्वन्तरं सप्ताङ्गुलं तथा प्रसारितहस्तस्य तत्पार्श्वबाह्वन्तरं रसाङ्गुलं मणिबन्धादूरुमूलान्तरं वेदाङ्गुलं तदर्धं कराग्रादूरुमध्यान्तरं नीत्वा मू............ वामनेत्रे सिते वामपुटेऽधरे हनौ सव्यस्तनौ सव्यपार्श्वे नाभेर्मध्ये वामोरू दक्षिणे वामाङ्घ्रिपार्ष्णी पार्श्वे च सूत्रं प्रलम्बयेत् ॥
....................त्रयोदशाङ्गुलं तत्त्रिभागैकभागं पार्ष्ण्यन्तरं शेषं युक्त्यैव कारयेत् ॥

पूजकमुनिभ्यां वीशशैषिकाभ्यामिन्द्रादिलोकपालानामन्यत्पर्षदानां चा..................ं षोडशाधिकशताङ्गुलं मूर्ध्ना मात्रात्रयकेशान्तं तस्माद् दृक्सूत्रान्तं द्वियवभागं पुटान्तं सयवभागं तत्समं हनोरन्तरं गलमर्धाङ्गुलं कण्ठभागं कण्ठाद्धृदयान्तं हृदयान्नाभेर्मेढ्रान्तं सार्धाङ्गुलमुखायाममूर्वायामं पञ्चविंशाङ्गुलं भागं जानुजङ्घा चोरूसमा चरणं भागमूरुसमो बाहुकोर्परौ त्र्यङ्गुलं प्रकोष्ठं साधृतिसाध्यषट्तलाङ्गुलसार्धपार्ष्ण्यन्तलाङ्गुलं वक्त्रतारकण्ठं चतुष्कलार्धवक्त्राक्षिश्रोणिकटिविस्तारमध्यमं दशतालस्योक्ततलादर्धाङ्गुलहीनमूरुजङ्घातलविपुलं भुजमूलकण्ठं दोर्मध्यविशालतापि यवेनाङ्गुलयवोनाङ्गुलयवार्धोनविशालम् । शेषं प्रत्यङ्गोपाङ्गविस्तारं मध्यमं दशाङ्गुलोक्तविधिनानेन कारयेत् ॥

सीता-रुक्मिणी-सत्यभामाश्चेन्नवार्धतालं मुखं सद्वियवतालमुखायता त्रिगुणं कायमूरुद्वितयपादाङ्गुलीनां विपुलं यवोनम् । शेषं पूर्ववत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते मध्यमं दश-
तालादितालविधानं नाम
षड्विंशः पटलः ॥

## अथ सप्तविंशः पटलः ।

अष्टतालं त्रिविधमुत्तमादिक्रमेण । शिरोमानं त्रिमात्रार्धं मुखमेकादशाङ्गुलं ग्रीवायतं त्रिमात्रार्धं मुखत्रयं कायं द्वाविंशदङ्गुलमूरुजानू त्रिमात्रं जङ्घा चोरू समायामं त्रिमात्रमूरुदीर्घसमं बाहुकोर्परं त्र्यङ्गुलं प्रकोष्ठं सप्तदशाङ्गुलं द्वियवं मध्यमा पञ्चमात्रानामिकायामं चतुर्यवार्धं मात्राधिकात् सीमानञ्जनी त्र्यर्धमात्रमायामा कनिष्ठा तत्समाङ्गुष्ठा सान्तरं क्रमानचाग्निय स्वस्थि पञ्चयवास्तलघनं कला बाह्वोरधस्ताद्धस्तराणि नवतालवत् तस्ताङ्गुलं द्वौ मूलमुखस्य विपुलं नेत्रार्धान्मुखान्तं हन्वन्तरं चतुर्दश यवार्धकर्णविस्तृतिं केशान्ताद् भ्रूर्द्विमात्रं दृक्सूत्रं त्र्यङ्गुलं पुटं पुटाद्धनुः सार्धरुद्राक्षं कण्ठमानं त्रियवाङ्गुलं कण्ठविस्तारं सप्तमात्रं नेत्रायामं कर्णतारं द्विगुणायामं नालं शरार्धाङ्गुलं कर्णनेत्रान्तयोः कण्ठाद्धनुर्द्वाविंशतियवमेकोनविंशदङ्गुलमुरस्तारं चतुर्यवं त्रयोदशाङ्गुलं मध्यश्रोणी तस्मात् कलाधिका लिङ्गायामं यवाङ्गुलं रुद्राङ्गुलमूरुविस्तारं जानुर्नवाङ्गुला जङ्घा पञ्चाङ्गुलाधिका नलका सार्धवेदं प्रपदतलविस्तारं सार्धपञ्चाङ्गुलमङ्गप्रत्यङ्गं कारयेत् ॥

नरनारीणां मध्याष्टतालेन शिरस्यर्धाङ्गुलं हीनं मुखं कण्ठपूर्वेवर्गौ सार्धाङ्गुलहीनकायं त्रितलमूरु त्रिसप्तमात्रं जानु त्र्यङ्गुलं जङ्घा ........लो दीर्घकाचरणजानुसमविस्तारादीनि पूर्वस्त्रीणामपि समदीर्घग्रीवोर्ध्वविस्तारसार्धपञ्चाङ्गुलं कण्ठतारं दोर्विसृतिः सार्धवेदाग्निनेत्राणि कोर्परा ............ पञ्चाङ्गुलायामं वेदार्धं मध्यमाङ्गुलि सप्तयवान्तरं क्रमाद् देवं तदायतं तमन्याङ्गुलिना तमं तुर्याङ्गुलिविस्तारं पञ्चदशाङ्गुलं शेषं युक्त्या समाचरेत् ॥

............ङ्गुलं हीनं नाभेरेकाङ्गुलक्षयं ऊर्वेकाङ्गुलजङ्घायाममध्यर्धविस्तारं भवेत् ॥

सप्ततालविभागं शिरोऽङ्गुल्यमुखं रुद्राङ्गुलं कर्णं त्रिमात्रं नाभ्यन्तं ........ङ्गुल्ययोनिमूनवकलादशो नाभिकलजङ्घोर्वो तुल्यानवग्रष्टाभोष्टभागा भवेऽश्विन्यङ्गुलैस्तताः स्कन्धोरोमध्यश्रोण्योर्जानुजङ्घातालौ चैवं पिशाचरूपं कारयति ॥

षट्तालैरन्तामात्रा मुखं पञ्चतालायतं कर्णं त्र्यङ्गुलं तस्माद् योन्नतं दशकला चोरूः साष्टदशाङ्गुल्यातो जानुत्रिमात्रजङ्घा चोरू समायामं तलं जानुसमं नरोक्तविपुलेऽञ्जातानामर्धाङ्गुलोन्नतवंश-दण्डोक्तं नतं प्रकोष्ठककुदो नवमात्रमुरो नासासमोन्नतमुग्रवदनं शेषाङ्गुलं न कारयेत् ॥

मुखमेकाङ्गुलक्षयमूर्ध्वे जङ्घायामं मध्यतलं जानुतनुग्रीवास्वाङ्गुलोनं तु मध्यं तोयस्य विस्तारतुल्यं कारयेत् ॥

पञ्चतालविभागमङ्गुलं शिरोभागं केशान्तकं त्रिमात्रासार्धं पुटान्तं पुटाद् आद्राक्षं पञ्चन्तं ग्रीवाश्विन्यायतनत्राष्टसप्ताङ्गुल्यायतं क्रमाद्धिक्काहृदयनाभेर्मेढ्रान्तमूरु रुद्राङ्गुलं जानुकला जङ्घा चोरू समा पादं कलाङ्गुलं पञ्चकलायामं तलं बाहुप्रकोष्ठं पञ्चगोलकं तलं भागं युगमध्याङ्गुलायामं प्रदेशिनी तर्जनी च द्विमात्रा कनिष्ठिकाङ्गुष्ठौ त्र्यङ्गुलं त्रियवार्धत्रिचतुष्पञ्चमात्राभिः क्रमाद् विस्तारं तलं प्रकोष्ठं कोर्परबाहूनां मुखविस्तारमष्टाङ्गुलार्धं कण्ठस्य विस्तारं सप्ताङ्गुलं जगती त्रिंशदङ्गुलमूर्वोः श्रोणिकटीनां यथासङ्ख्यं नुजानुजङ्घानलकातलवि-स्तारपडष्टगायत्रीवेदाग्निपणमात्राभिर्यथाक्रमं हिक्कानाभ्यन्तरे मात्रार्ध-द्वियवमूर्वताङ्गुलं जङ्घायाममाङ्गुलग्रीवविस्तारं पूर्ववत् । ततो सार्धाङ्गुल-हीनमूर्वकं चतुर्यवा जङ्घामध्यमाद्धीनं हीनं भ्रूतालं पञ्चाङ्गुलानां तते चतुर्यवामविपुलं कायार्धेन कारयेत् ॥

चतुस्तालस्यादङ्गुलस्यादङ्गुलं शरकण्ठद्वादशाङ्गुलं मुखं ताल-कण्ठान्तयुगं कला नाभिः पञ्चदशाङ्गुलं अभोदररूतान्वा मेढ्रान्नाभि-श्रोण्यानावलम्बं त्रिमात्रमूरुजानुजङ्घानपञ्चाङ्गुलायामां जानुत्रिमात्र-जङ्घा चोरू तुर्व्यजानुसमं तलं मुखायामो भुजसप्ताङ्गुलायामं प्रकोष्ठ-तलायामो भागाङ्गुलायामकलाङ्गुला पञ्चाङ्गुलायामकलाङ्गुलातलं षडङ्गुलातारं तलायामम् । एवं श्रेष्ठमाने वक्त्रगुल्फं कलाङ्गुलद्वयं पा-दाङ्गुलोनं विस्तारमर्धाङ्गुलं मध्यमं तता कण्ठं गुल्फेन कारयेत् । प्रोचदधमेन कारयेत् ॥

त्रिताले तु शिरोऽङ्गुल्यं मुखं रुद्राङ्गुलं (कण्ठं) त्र्यङ्गुलं तस्माद्-धृदयं नाभिस्तत्समं मेढ्रं वसुकलामेवं श्रेष्ठं द्विशोलकं तेन हीनं

मध्यमं मुखेऽङ्गुलं त्र्यङ्गुलं कलाहीनं किन्नराणां त्रितालं मेढ्रादूर्ध्वं पादं कुक्कुटवद् भागमूरुः पञ्चाङ्गुलायतं जङ्घा पादमात्रोनदीर्घमात्रं प्र- ........... तावत् पक्षायामं गरुडस्येव स्वायामार्धकाः सर्वे किन्नरा बहवो द्विचतुर्बाहुमूलं चेदध्यर्धद्विगुणघनं द्विगुणाधिकं नेत्रतालपत्रस्य मूलवदेक.... .......ङ्गुलैः त्रिका फलकाकाराः परबाहन्तो वा यावन्तो वा यावन्तो बाहवो मूलास्तावन्तः परिकीर्त्तिताः ॥

कूश्माण्डानां मुखं तालं कण्ठं त्र्यङ्गुलमानं युग.......... जङ्घा द्विगोलकाङ्गुलं चरणं वीणावद् बहिर्मुखायतं चतुस्त्रिपञ्चमात्रा दोः प्रकोष्ठतलदैर्घ्यविस्तारं युक्त्या पक्षौ बहुसमायतौ कारयेत् ॥

खण्डं मुखमेव पादं कुक्कुटवद् दीर्घं किन्नरपादार्धविस्तारं पुच्छायामं चतुर्मात्रं पक्षं तद्गुणायतं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चना-
कल्पेऽष्टतालाद्येकतालविभागो नाम
सप्तविंशः पटलः ॥

## अथ अष्टाविंशः पटलः ।

अथोर्ध्वं पात्रपरिच्छदानां लक्षणम् । मानाङ्गुलेन ध्रुवबेरस्य देहलब्धाङ्गुलेन सुवर्णरजतताम्रकांस्यान्यतमेन चतुरङ्गुलविस्तारं तदर्धोत्सेधं सुवृत्तमास्यतारं षडङ्गुलं तत्पृष्ठे त्र्यङ्गुलं पादमध्ये नाभिकायुक्तं तयोर्वियुक्तं चैवमावाहनपात्रं तथा ॥

पाद्योदकाचमनोदकस्नानोदकपात्रं प्रत्येकं शङ्खावाहृत्य पुष्पपात्रस्य विस्तारं चतुर्विंशदङ्गुलं त्र्यङ्गुलं भित्त्योष्ठमर्धाङ्गुलं तत्पृष्ठे षण्मात्राङ्घ्रियुतं सौवर्णाद्यैरेवं कुर्यात् । अलाभे वेत्रनालिकेरपात्रं तालपत्रैर्वा फेलावत् कारयेत् ॥

गन्धपात्रस्य विस्तारं तदेव वेदाङ्गुलं तस्योदरविस्तारं पञ्चाङ्गुलमास्यतारं वेदाङ्गुलं तत्पिधानं यथाचित्रम् ।

धूपपात्रं ताम्रलोहेन पित्तलेन वा षडङ्गुलविस्तारं तदेवोत्सेधं मेढ्रमर्धाङ्गुलं तद्बाह्येऽष्टदलान्वितमधस्ताद् द्विपादत्र्यङ्गुलोत्सेधमष्टाङ्गुलदण्डा-

यामं त्र्यङ्गुलपरीणाहं द्विवक्त्रं तद्दण्डपुच्छे त्र्यङ्गुले द्विपादौ पद्मवदेकपादं कृत्वाथवा पद्मत्र्यङ्गुलोत्सेधं पञ्चाङ्गुलविस्तारं पद्माकारं तदूर्ध्वे सप्ताङ्गुलायामं षडङ्गुलपरीणाहं दण्डं तदूर्ध्वे पूर्ववत् पत्रं कृत्वा तद्विधानं यथार्हक्रममन्याङ्गुलोच्छ्रयं मुकुलाकारमनेकसुषिरावृतम् । शेषं युक्त्यैव कारयेत् ॥

घण्टास्यविस्तारं षडङ्गुलं तत्समोत्सेधं मूलविस्तारं विषयाङ्गुलं शिखरं चतुर्यवं गलोत्सेधं जिह्वा वेदाङ्गुलायता वर्त्तीवत् षडङ्गुलदण्डोच्छ्रयं दण्डाग्रे च कपीशं वा शेषं युक्त्यैव कारयेत् ॥

महाघण्टास्यविस्तारमष्टाङ्गुलं तत् ………… त्सेधं तन्मूलविस्तारं षडङ्गुलं गलं त्र्यङ्गुलोन्नतं षडङ्गुलपरीणाहां पट्टिकाद्वयसंयुक्तमोष्ठमेकाङ्गुल……… ….चं त्र्यङ्गुलं नाहसप्ताङ्गुलसुषिरेण युक्तं ताराधं वर्ति तन्नाहं जिह्वा नवाङ्गुलायता तच्छिखरे वलयोपेतं शेषं युक्त्यैव कारयेत् ॥

अर्घ्यपात्रस्य विस्तारं युगाङ्गुलं द्व्यङ्गुलोत्सेधं पृष्ठाङ्घ्रि त्रिमात्रोत्सेधं तद्धीनं वा कारयेत् ॥

हविःपात्रं सौवर्णं राजतं ताम्रं कांस्यं वा द्वादशाङ्गुलविस्तारं वा समारभ्य त्र्यङ्गुलं संवर्धयेद् आषट्त्रिंशदङ्गुलान्तम् । नवधा पात्रविस्तारमर्धाङ्गुलं भित्त्युन्नतं तद्यवमेषविस्तारं शेषं युक्त्या कारयेत् ॥

मुखवासपात्रं सौवर्णं राजतं ताम्रं दारुणा वा द्वादशाङ्गुलविस्तारं समवृत्तं घनं द्व्यर्धाङ्गुलभित्त्युच्चदण्डायामं द्वादशाङ्गुलमष्टाङ्गुलविस्तारं चतुरङ्गुलमुत्सेधं पद्माकारवत् पादं कारयेत् ॥

चतुर्विंशत्यङ्गुलायामं दर्वी तस्यायामं पञ्चधाकृत्य द्व्यंश …. ………… मार्गयुक्तौ शेषं युक्त्यैव कारयेत् ॥

दीपाधारस्ताम्राद्यैरेकहस्तादिनवहस्तान्तमुत्सेधं नवधा भवति । तच्छरावैकांशं पादविस्तारं तदर्धोच्छ्रयं समवृत्तं पद्माकारं तदष्टांशोनम् अर्धाधारं तदूर्ध्वे मुकुलमष्टांशैकांशं मध्ये चैकत्रिपञ्चसप्तनवैकादशसङ्ख्यैराज्यधारैर्यथायोग्यं संयोज्य मध्ये नानापट्टिकैर्नानाकुम्भैर्युतं शेषं युक्त्यैव कारयेत् ॥

दीपदानकपुरुषोस्त्रियैर्वा स्थाल्यां शिरो वहति शक्त्यानुरूपेण तत्तदनुपयोग्यमानेन कारयेत् ॥

ताम्रेणायसेन तरुणा वा दीपमालाद्वारपार्श्वे तद्वारस्तम्भपट्टिकावद् दीर्घाधाराद् दीपपात्रमानं वेदाङ्गुलतता तत्त्रिभागैकभागदण्डान्तर्गतान् षडङ्गुलानन्तर्गतवत् संयोजयेत् ॥

आयसेनैकहस्तायाममेकाङ्गुलपरीणाहमवक्रसहितमग्रे दीपाधारधूर्धुरं पुष्पोपमं त्र्यङ्गुलेनास्यतारोन्नतं चतुरङ्गुलमस्याधस्ताद् दारुणा मुष्टिं यमं यमद्वयं संयोज्य हस्तदीपांश्च कारयेत् ॥

अथोर्ध्वे नीराजनपात्रं ताम्रकांस्यान्यतमेन चतुरङ्गुलषोडशद्वादशैर्वा विस्तारसमवृत्तमर्धाङ्गुलं भित्त्युच्चं तत्समं सीमाविस्तारं पात्रमध्ये त्रिभागैकं भागेनाब्जमष्टदलैर्युक्तमेकाङ्गुलोन्नतं तत्कर्णिका । कर्णिकामध्ये त्र्यङ्गुलोत्सेधमेकाङ्गुलपरीणाहं दीपाधारं मध्यमादिनवदिक्षु दीपाधारैर्युक्तं तन्मध्यमादिपञ्चधारैर्युक्तं मध्यमं मध्यमे चैकधारायुतमधमाधमेवं संयोज्य तत्पृष्ठे पदचतुरङ्गुलायतमायामविस्तारं पादं योजयेत् ॥

दर्पणं शुद्धेन कांस्येन नवैकादशत्रयोदशाङ्गुलैर्वा विस्तारायामं समवृत्तं पूर्णचन्द्राकारं नालमष्टाङ्गुलं दशाङ्गुलं पट्टिकाया सदलमङ्गुष्ठोच्चं तलोच्चं चतुर्भागं तच्छिरांशाद्युगांशं नालं शेषं पुष्पमङ्गुष्ठोच्चसमं पुष्पविस्तारं पुष्पोन्नतात् त्रिभागैकभागं विपुलम् । शेषं युक्त्यैव कारयेत् ॥

जलद्रोणी सौवर्णं राजतं ताम्रजं वा भारं द्विभारं त्रिभारं वा जलैः सम्पूर्णं सुदृढमविवरमस्रावितं सुवृत्तं चतुरश्रं वा ग्रीवाविहीनं पार्श्वयोर्द्विवलयसंयुक्तं मृन्मयं चेद् वलयविहीनं सग्रीवम् । शेषं युक्त्यैव कारयेत् ॥

तरङ्गं क्षौमपट्टमाप्रायतं वस्वङ्गुलविस्तारं एकांशपुच्छायाममग्रार्धविस्तारमग्राच्च मूलादारभ्य मध्ये द्व्यङ्गुलद्वयं शेषं युक्त्या कारयेत् ॥

त्रिपादिका चतुर्थांशं शङ्खपादिबकपादिका पात्रपादि स्थालीपादीति शङ्खपादिकोच्चं युगाङ्गुलं तत्समं मुखविस्तारं त्रिपादं त्रिव-

क्रयुतं बकपादिमुखाकारं षडङ्गुलं तच्चतुर्गुणं पादायाममीषत्रिभङ्गिका-त्रिपादसहितं तन्मूलं सिंहपादवत् ॥

सिंहपादिपात्रादि चतुरङ्गुलं षडङ्गुलमष्टाङ्गुलं वा विस्तारं तत्समोत्सेधमग्निपादयुतमधस्ताद् द्वयङ्गुलं शरावबत् पृष्ठं कारयेत् ॥

स्थालीपादिविस्तारमष्टाङ्गुलं तत्समोत्सेधं पादाधस्ताच्छरावाकारं कारयेत् ॥

स्थालीपादसमायामसमं वेति केचित् ॥

पादोदक........लं षोडशाङ्गुलं मुखायतं विंशन्मात्रं भित्त्युच्च सप्ताङ्गुलमोष्ठं द्व्यङ्गुलं विस्तृतं तच्छरावाकृति तस्योभयपार्श्वयोर्मेका-.........................यत् तत्पृष्ठं युगाङ्गुलोत्सेधं षडङ्गुलविस्तारं तद्विस्तारायामात् त्रिगुण ................ ................कर्णं चतुरङ्गुलान्न .................... पीठयुतं शेषं युक्त्यैव कारयेत् ॥

दण्डिकाद्वादशकुक्षिविष्कम्भं तस्यार्धमुत्सेध .... ............... यामात् त्रिगुणपरीणाहं कण्ठं चतुरङ्गुलं विष्कम्भमोष्ठं द्व्यङ्गुलं विस्तृतमास्यतारं चतुरङ्गुलं तत्पार्श्वे नासिका द्विमात्रोत्तुङ्गं तद् वृत्तं कनिष्ठाङ्गुल्यग्रसमं तत्पृष्ठे चतुरङ्गुलविस्तारायामपादद्वयङ्गुलोत्सेधं शेषं युक्त्यैव कारयेत् ॥

नित्यनैमित्तिकस्नपनाभिषेकार्थं सहस्रधारायुतं पात्रं सौवर्णाद्यैश्चतुर्विंशषोडशद्वादशाङ्गुलैर्वा विस्तारयुतं समवृत्तभित्त्युत्सेधमङ्गुलमोष्ठमेकाङ्गुलं तन्मध्ये वा विस्तारार्धप्रमाणेनाष्टदलोपेतपद्मं तदर्धप्रमाणेन कर्णिकां तन्मध्ये रत्नं सुवर्णं वा निक्षिप्यान्तःसहस्रसुषिरैर्युक्तमेवं कारयेत् । अथवा तत्पार्श्वयोस्तालमात्रं द्व्यङ्गुलं विस्तृतं गण्डिकाद्वययुतमग्रं मुकुलाकारसमं कारयेदिति केचित् ॥

शङ्खपद्मनिधौ नालाकारौ पात्रौ द्वौ चतुःप्रस्थौ तदर्धौ वा पूरणामग्रे सनालौ षड्विंशत्यङ्गुलायतौ षडङ्गुलपरीणाहौ जलनिर्यारकार्गसैर्वा द्वादशहस्तायतैर्वस्त्रैः पञ्चदशैर्द्विदशैर्नवैर्वा नवाम्बरैर्युक्तमास्यरज्जुसमायुक्तं नानारूपवर्णान्वितं श्वेतं वा प्रावरणं कारयेत् ॥

स्तम्भवेष्टनं तत्स्तम्भायामसमायुक्तं तदर्द्धविस्तारं क्षौमाद्यैः कारयेत् ॥

वितानं तत्पट्टायामसमन्वितं विस्तारसमं नानालङ्कारं नानारूपसमन्वितं कारयेत् ॥

ध्वजं त्रिपञ्चाष्टदशकरायतं षट्पञ्चचतुस्त्रितालविस्तृतपीतश्यामरक्ताभं तन्मात्रायामशिखरं हस्तायामं त्रिचतुष्पादैर्वा संयुक्तं तिर्यग्वेत्रद्वयसंयुक्तं घण्टासहितं तदर्धविस्तारद्विगुणायतयष्टिसंयुक्तं कारयेत् ॥

पताकं तथैव विंशदङ्गुलैर्विस्तारं त्रिंशदङ्गुलायतं क्षुद्रध्वजं पञ्चाङ्गुलविस्तारं द्वादशाङ्गुलायतं वेत्रद्वययुतमन्यत् पूर्वं शिखरैर्युक्तध्वजमालां कारयेत् ॥

यवनिका द्वारविस्तारसमं विस्तारं तदध्यर्धायामं शुद्धं श्वेतवस्त्रेण कारयेत् ॥

छत्रं चतुस्तालविस्तारं समावृत्तमधो .......ष्णवेन तन्तुना बन्धनं कृत्वा वस्त्रेणाच्छाद्य कल्कं प्रलिप्य मुक्तादामैः सरत्नहेमसञ्छन्नं हेममुकुटोपेतमुत्तमम् । वस्त्रेणाच्छाद्य ............ कृत्वा ताम्रेण पित्तलेन मकुटोपेतं मध्यमम् । तरुणा मकुटोपेतमधमम् । यथार्हं नालदण्डं च कारयेत् ॥

पिञ्छं चतुस्तालविस्तारायामं सुवृत्तं किञ्चिदूर्ध्वमुखं छत्रवस्त्रेणाच्छाद्य मयूरपिञ्छैर्बाह्याभ्यन्तरं तत्सीमाच्छाद्य पूर्ववन्मकुटनालं च कारयेत् ॥

जवच्छत्रं षट्तालविस्तारं समवृत्तमधोमुखवैष्णवेन तन्तुना संक्षेपविस्तीर्णयोग्यं यन्त्रेण वर्धनं कृत्वा तदुपरि क्षौमाद्यैः सञ्छाद्य परितस्तालमात्रलम्बनं कृत्वा पूर्ववन्मकुटयन्त्रनालदण्डेन सहैव कारयेत् ॥

वर्मच्छत्रं तालविस्तारायामं सुवृत्तं चतुरश्रं वा वैष्णवेन तन्तुनाबध्य वस्त्रेणाच्छाद्य मधूच्छिष्टेनालिप्यालाभे तालपत्रैराच्छाद्य पूर्ववन्नालशकनासिकनासिकं वा संयोज्य दण्डाग्रे संयोजयेत् ॥

चामरदण्डं सरत्नहेमं सौवर्णं राजतं ताम्रजं दारवं वा चतुर्विंशत्यङ्गुलायामं नाहपञ्चाङ्गुलायामं नानापट्टिकां नानाकुम्भं नानामण्डनसंयुक्तं चामरैः श्वेतबाल्यैर्यथायोगं यथाशोभं संयोज्य सम्यगाचरेत् ॥

मयूरव्यजनस्य दण्डायामं पूर्ववद् विचित्रितं युक्त्या कृत्वा बहुभिः पिञ्छैश्छन्नं कृत्वा यथायोगं यथाशोभं संयोजयेत् ॥

क्षौमादिव्यजनविस्तारं चतुर्विंशद्विंशत्षोडशद्वादशाष्टाङ्गुलैर्वा विस्तारायामं समवृत्तं वैणवेन कृत्वा क्षौमाद्यैर्वेष्टयित्वा दण्डायामं त्रिगुणं यथार्हकं नाहदण्डाग्रे संयोज्य नानातन्तुना विचित्रं वा कारयेत् ॥

शिबिकालक्षणं वक्ष्ये । दन्तैर्दारुसारैर्वा पञ्चविंशदङ्गुलादिसप्तपञ्चाङ्गुलं वा तदर्धबाहल्यमिलिकाविस्तारं त्रिधाकृत्य तन्मध्ये पट्टिकां तद्बाह्ये कपोताकारं तदायाममष्टधाकृत्यैकांशभित्त्युच्चमधस्तात् कोणेषु चतुर्षु तत्समं पादं कुहवलयं चारुतरं कारयेत् । इलिकामध्ये चतुरश्रीकृत्य भित्त्युन्नतं चतुरंशं कृत्वा, एकांशं ततोर्ध्वाधः पट्टिकाद्वयसंयुतं मध्यभागे फलकामोहितं मीलिकैर्जालकैः फलकैर्गुलिकैर्नानावल्लीयुतं नाना......... ...क्रीडासमायुक्तमायामे विस्तारे वा त्रिभागैकभागं मध्ये भित्त्युत्सेधार्धद्वारं विसृज्याथावद्द्वारविहीनं वा पट्टिकाग्रे भित्तिबाह्ये सिं ............ तदूर्ध्वे मरास्यमेवं कृत्वाथवा पादं सप्ताङ्गुलं पालिकासदृशमधः पादैर्नाराचैर्युक्तमन्तःफलकैरास्तरणं कारयेत् ............ श्वेत् सर्वान् सौवर्णैः कारयेत् ॥

शिबिकाविस्तारं द्विगुणं कृतोत्सेधं द्विधाकृत्यैकांशं वायामैकांशं शिखरं युक्त्या संयोज्य सौवर्णैर्बहिः पिञ्छैर्वाच्छादयेत् ॥

रथलक्षणम् ॥ पञ्चसप्तनवैकादशतालविस्तारायामं द्विगुणमुत्सेधं मण्डपाकारं वा रथायामं त्रिगुणमाधारं चक्रस्यायामविस्तारमुत्सेधार्धसमवृत्तं स्थलस्यालङ्कारं शिबिकालङ्कारवत् कारयेत् । आधारौ पूर्वापरौ स्थलं कृत्वा पूर्वे मुकुलनालं च संयोज्य रथोत्सेधं पञ्चधाकृत्य सार्धांशमधिष्ठानं कुमुदं पट्टिकाद्यैरुपशोभितशिबिकाल-

ङ्कारवदलङ्कारैर्युक्तं त्रिंशं पादमर्धाधिकांशं शिखरं कारयेत्। तत्रानुक्तं सर्वमङ्कडोलादीनां च शिल्पशास्त्रोक्तविधिना कारयेत् ॥

खट्वा दन्तैर्दारुसारैर्वा चतुर्विंशद्द्वादशषोडशद्वादशाङ्गुलैर्वा विस्तारं तद्द्विगुणपादोनं द्विगुणमर्धाधिकं वायामं पादविस्तारार्धं पादोत्सेधसमनाहं चतुर्भिः षड्भिरष्टभिर्वा पादैर्युक्तं सिंहव्यालगजाकारमिलिकाविस्तारं रसाङ्गुलं तदर्धबाहल्यं तत्तारं त्रिधाकृत्य मध्ये पट्टिका तद्बाह्ये कपोताकृतिं कारयेत्। ऊर्ध्वमधस्ताद् गुलिकाद्यैरुपशोभितं भित्त्यभ्यन्तरे चाधारमायससुषिरे नाराचं योजयेत् ॥

कक्ष्याविस्तारं त्र्यङ्गुलं यथार्हायामं कार्पासतन्तुना कक्ष्यां कृत्वा नाराचेन कक्ष्यामावेष्टयेत् ॥

शय्या विष्टरफलकोपेतं खट्वालक्षणोक्तविधिना नाराचं कक्ष्यां विना कारयेत् ॥

तलं तद्विस्तारायामं समं दशाङ्गुलं षडङ्गुलीवोत्सेधमण्डजाद्यैः सम्पूरणार्थं क्षौमाद्यैस्तलं कारयेत् ॥

उपधानं त्रिंशदङ्गुलं विष्कम्भं त्रिगुणपरीणाहं यथोचितायामं पादोपधानं हस्तोपधानं यथायुक्त्या कृत्वा युगपद्द्वादशद्वयाङ्गुलोत्सेधमष्टाङ्गुलविष्कम्भं पालिका कारयेत् ॥

आसनविष्टरं शयनविष्टरवत् ॥

पादहीनं युक्तं वा कारयेत् ॥

स्थानविष्टरं द्वात्रिंशदष्टाविंशचतुर्विंशत्षोडशद्वादशाङ्गुलैर्वायामविस्तारं सम ········ विस्तारार्धं त्रिपादं वा पादायामं यथायोग्यं नागं चतुष्पाद्यैर्युक्तं तस्योपरि चतुर्दिशं वेदिं चतुरङ्गुलोत्सेधं वामपार्श्वे वा त्रिमा········न्तं कारयेत् ॥

अथवा वेदिविहीनमासनविष्टरमेवं कारयेदिति केचित् ॥

केवलं विष्टरं चतुर्विंशदङ्गुलायामं समचतुर्विंशदङ्गुलायामं चतुरश्रं वृत्तं वा वेदाङ्गुलबाहल्यमुष्टिं षडङ्गुलायामं सप्ताङ्गुलपरीणाहं शेषं युक्त्यैव कारयेत ॥

भेरिकां शुभैः पुंवृक्षैश्चतुस्तालायामं तत्पादोनद्विगुणं द्विगुणार्धं वा परीणाहमुखं तारद्वादशत्रयोदशचतुर्दशाङ्गुलं वा समवृत्तमर्धाङ्गुलं बाहल्यमुभौ वायसपट्टेन बन्धयो नवग्रहं वा भेरिकाधिपो भूतीशमेव भेरीं कारयेत् ॥

कर्त्रिकाफलका द्वाष्टादशाङ्गुलैर्वर्तुलं भ्रमीकृत्यार्धं त्यक्त्वार्धं प्रगृह्यार्धचन्द्राकारस्य मध्ये रसाङ्गुलेन सुवृत्तं भूमीकृत्य तन्मध्ये तद्विस्तारोत्सेधं भित्तियुगयोर्गर्तं कृत्वा पार्श्वयोरुभयोस्त्र्यङ्गुलविवृत्तं त्र्यङ्गुलं बाहल्यपट्टिकां पुष्पवल्लियुतं कारयेत् ॥

तद्गतभित्तिबाहल्यं यवद्वयं तदश्वद्वये मकारस्य तत्पृष्ठे द्वादशाङ्गुलायामं द्विचक्रमष्टाङ्गुलपरीणाहमश्वत्थीपादवेदकाङ्घ्रिं कृत्वा संयोज्यशेषं युक्त्यैव कारयेत् ॥

उलूखलमुसलानामर्जुनजम्ब्वाद्यैः शुभवृक्षैर्मानाङ्गुलेन चतुर्विंशत्यङ्गुलं षोडशाङ्गुलं वायामं त्रिगुणं नाहमायामार्धं पञ्चभागद्विगुणभागत्रिभागैकभागं वर्गमुत्सेधं पञ्चधाकृत्य द्विभागं त्रिभागमूर्ध्वमोष्ठविस्तारं षट्पञ्चचतुर्यवाङ्गुलं वा शेषं गर्तविस्तारमेवमुलूखलं कारयेत् ॥

खदिराद्यैर्वृक्षैः सारैर्वा मात्राङ्गुलेनाष्टादशतालं वायामं द्वादशाङ्गुलपरीणाहमवक्रं निर्व्रणं कृत्वोर्ध्वाधश्चतुरङ्गुलमात्रेणायसपट्टमचलं संयोजयत्येवं कारयेत् ॥

दात्रायामं द्वादशाङ्गुलं द्विवक्रं द्विमात्रविस्तारा यवबाहल्यमास्यं सुतीक्ष्णं दारुणा मुष्टिर्द्वादशाङ्गुलं यथार्हपरीणाहं कृत्वा संयोज्यायसपट्टेन सुदृढं बन्धयेत् ॥

खनित्राङ्गुलायामं त्रिःपञ्चाङ्गुलायाममेकं वा त्रिमात्रविस्तार- ........ चतुरङ्गुलं पञ्चाङ्गुलं वा तस्य मूलं ससुषिरं त्र्यङ्गुलविष्कम्भं दारुणा मुष्टिं चतुस्तालेन मानेन कारयेत् ॥

पेषणीं शि..........शत्यङ्गुलायामं विंशदङ्गुलं षोडशाङ्गुलं वायामं तदर्धविस्तारं त्रिपादधिस्तारार्धसमुत्सेधं तथाकृत्य त्र्यंशं पादं चतुर्भागंमू.......... मूर्ध्वपेषण्यायामं तत्समं नाहमायामात् पादाधिकायामात् षड्भागैकभागमुष्टिं शेषं युक्त्यैव कारयेत् ॥

यन्त्रिकाणामायसेन ........माङ्गुपरीणाहं द्विवक्त्रं तन्मूले मुकुलं वलयं यथायुक्त्या कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते पात्रपरिच्छदादि-
लक्षणं नाम अष्टाविंशः पटलः ॥

---

## अथैकोनत्रिंशः पटलः ।

अथ पात्रपरिच्छदादीनां सामान्यसंस्कारं वक्ष्ये । यजमानानुकूलर्क्षे शुभे दिने देवमानम्याङ्कुरानर्पयित्वालयाभिमुखे चौपासनाग्निकुण्डं कृत्वाघारं हुत्वाग्नेः पश्चिमतो देवेशं संस्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य देवाभिमुखे धान्यैः स्थण्डिलं कृत्वा नववस्त्राण्यास्तीर्य पात्रादीन् पञ्चगव्येन प्रक्षाल्याभ्युक्षणं च कृत्वा स्थण्डिले न्यस्य वास्तुहोमविधिना वास्तुहोमं हुत्वा पर्यग्निं च कारयेत् । अग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तत्तदधिदैवत्यमूर्तिमन्त्रैश्च जुहुयात् । तत्तदधिदेवदेवेशं च पात्रादिषु समावाह्याभ्यर्च्याचार्यं पूजयित्वा पुण्याहं वाचयेत् । अतो देवादिनाष्टाक्षरं जपन् देवस्य सान्निधौ तत्तत्कर्म संयोज्य देवमभ्यर्च्य यथाशक्ति हविर्निवेद्य ब्राह्मणान् भोजयेत् । अधिदेवताज्ञाने सर्वत्र सेनेशमर्चयेत् । तत् सामान्यम् । अथ विशेषान् वक्ष्यते ॥

अथ मकुटाद्याभरणादीनां नानारत्नमुक्तैर्युक्तं सुवर्णेन तत्तदङ्गानां योग्यमानेन कारयेत् ॥

पञ्चगव्ये प्रक्षाल्य सप्तभिः कलशैः संस्थाप्य पूर्ववत् स्थण्डिलं कृत्वा नववस्त्रैरास्तीर्य सुवर्णपात्रे तानि संन्यस्य तत्तदधिदैवं देवेशं चाभ्यर्च्याग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं सर्वदैवत्यं च हुत्वा स्नपनोक्तविधिना देवेशं संस्नाप्य वस्त्रमाल्यैरलङ्कृत्य पुण्याहं वाचयित्वाचार्यं पूजयित्वा दक्षिणां दद्यात् । तच्चतुर्दिक्षु चतुर्वेदैः स्तोत्रैर्नृत्तगेयाद्यैर्जयशब्दैश्च सांस्क्रियाचार्यो देवेशं प्रणम्यात्मसूक्तं जप्त्वा देवेशं ध्यायन्नेकाक्षरं सहस्रशीर्षमिति जप्त्वा भूमेर्भूतेष्विति मकुटाद्याभरणानि तत्तदङ्गेषु संयोज्य देतजोवत्सव इति पीताम्बरं, सोमस्य तनूरसी-

त्युत्तरीयं, अग्निं हुतमित्युपवीतं च संयोज्याग्निं विसृज्य यानमारोप्य ग्राममालयं प्रदक्षिणीकृत्यास्थानमण्डपे स्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य महाहविः प्रभूतं वा देवेशाय निवेद्याच्र्यास्थाने पीठे संस्थाप्यार्चयेत् ॥

सहस्रधारां शङ्खपद्मौ च विधिना कृत्वालयाभिमुखे गोमयेनोपलिप्यौपासनाग्निकुण्डं कृत्वाघारं हुत्वाग्नेः पश्चिमतो देवेशं संस्थाप्याभ्यर्च्याभिमुखे धान्यपीठं कृत्वा नववस्त्रैरास्तीर्य पञ्चगव्येन प्रक्षाल्य संन्यस्य वास्तुहोमविधिना वास्तुहोमं हुत्वा पर्यग्निं च कृत्वाचार्यं पूजयित्वा पात्र इन्दुमण्डलं ध्यात्वा चन्द्रमभ्यर्च्य पद्मे पद्मनिधिं शङ्खे शङ्खनिधिं समभ्यर्च्य पुण्याहं वाचयित्वा दक्षिणां दत्वाग्निं विसृज्य देवेशं संस्थाप्याष्टोपचारैरभ्यर्च्य वस्त्रमाल्यगन्धालेपनैरलङ्कृत्य नृत्यगेयवाद्यैः स्तोत्रैर्जयशब्दैश्च घोषयित्वाचार्यः प्राङ्मुखः स्थित्वा हस्ताभ्यां पद्ममुद्धृत्य मकुटोपरि धारयन् शङ्खपद्माल्पपात्रजलं पद्मे समर्पयेत् । वसोः पवित्रं पुरुषसूक्तं समुच्चार्याभिषिच्य पश्चादाचमनं दत्वा प्लोतेन विमृज्याभ्यर्च्य हविर्निवेद्य नित्यनैमित्तिकादिषु स्नपनान्ते चोत्सवान्ते च कारयेत् । एतत् स्नपनं सर्वदोषशमनं सर्वसम्पत्करमिति विज्ञायते ॥

रक्षादीपविधिं वक्ष्ये । नीराजनपात्रं कृत्वा पूर्ववत् पात्रसंस्कारहोमं कृत्वा पात्रं संस्कृत्य तत्पात्रे तदाधारे घृतेन तैलेन वापि वर्तियुतं दीपं शुभ्रा ज्योतीति सन्दीप्य दिक्पिण्डार्थं हारिद्रचूर्णयुतमन्नेन दशपिण्डं पञ्चपिण्डं वा मुष्टिमात्रं दृढतरं कृत्वालाभेऽक्षतपुष्पं वा गन्धद्रव्यं च पृथक् पृथक् पात्रे सङ्गृह्य देवेशं सम्पूज्य शङ्खध्वनियुतं सर्ववाद्यैः स्तोत्रध्वनिघोषैर्यजमानो वा दासिभिर्वा शिरसा धारयन् शनैर्गत्वालयं प्रविश्याचार्यं पूजयित्वाभिमुखे स्थाप्य पात्रे चन्द्रं दीपेषु श्रियमभ्यर्च्य देवस्य पादयोः पुष्पाञ्जलिं दत्वा तत्काले शङ्खनादसमन्वितं नृत्तगेयवाद्यैर्युक्तं श्रिये जा इति ........ स्य मूर्धादिपादान्तं प्रणवाकारवत् त्रिः प्रदक्षिणं कृत्वा पूर्वं स्थाने (न्य?)वेशं प्रणम्यातो देवादिना प्रागादिदिक्पिण्डं विसृज्य पा ............ दत्वा तद्विप्रास

इति गन्धेनोर्ध्वपुण्ड्रमालिप्याष्टाक्षरेण पुष्पाञ्जलिं दत्वा पूर्ववत् समाहृत्यालयस्य बहिर्गत्वा भूतपीठस्य ........... क्षिपेत् । एवं सायं प्रच्छन्नपटोद्धरणे चोत्सवे स्नपनेऽन्यस्मिन् पुण्यर्क्षेष्वर्चनान्ते चैव कारयेत् ॥

अथवा पादुकस्य प............ द्रोण्यां वरुणमभ्यर्च्य जलाधिवासनं कृत्वा पूर्ववदौपासनाग्निकुण्डं कृत्वास्थानमण्डपे धान्यराशौ वस्त्रेणोपरि न्यस्य वास्तुहोमं च हुत्वा पर्यग्निं च कारयेत् ॥

शुद्ध्यर्थं प्रोक्षणैः प्रोक्ष्य पुण्याहं कृत्वाग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं शैषकं च हुत्वाग्निं विसृज्याचार्यदक्षिणां दत्वा सर्वालङ्कारसंयुक्तं स्वस्तिसूक्तेनालयं प्रदक्षिणीकृत्य देवाभिमुखे न्यस्य तयोर्मध्ये शेषमभ्यर्च्योपरि देवेशमावाह्याष्टोपचारैरभ्यर्च्य विष्णुसूक्तेन देवस्य पादयोः संयोज्य ततो देवेशं सप्तविंशतिविग्रहैरभ्यर्च्य महाहविः प्रभूतं वा हविर्निवेद्य ततः प्रभृति विष्णोरुत्सवकाले शिरसा धारयन् अग्रतो गच्छेत् । शिबिकायां हस्तेन वा संनयेत् ॥

नित्यबल्यन्ते बलिबेरपीठे संन्यस्य पाद्याद्यर्घ्यान्तं पूजयित्वाभिमुखे पादुके संन्यस्य पूर्ववच्छेषमष्टविग्रहैरभ्यर्च्य पादुकौ संयोज्य देवेन सहाभ्यन्तरं प्रविश्य गर्भागारे संन्यसेत् ॥

अथ वाहनादीनां संस्कारं वक्ष्ये । पञ्चगव्यैः संशोध्य वास्तुहोमं हुत्वा ........................ सनाग्निकुण्डं कृत्वाघारं कृत्वा कुम्भं संसाध्य तदधिदेवं देवेशं ध्यात्वा सप्तभिः कलशैः संस्नाप्य मण्डपे प्रपायां वा धान्यैः स्थण्डिलं कृत्वा नववस्त्रैराच्छाद्य पुण्याहं वाचयेत् । अग्निं परिषिच्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तत्तदधिदैवत्यमूर्तिमन्त्रैश्च व्याहृत्यन्तं हुत्वाग्निं विसृज्याचार्यदक्षिणां दत्वा देवेशं प्रणम्याचार्यः समाहितो ध्यायन् वाहनेषु गरुडं शयने शेषमासने शिवादीनन्येषां तत्तदधिदैवमावाह्याभ्यर्च्य देवेशं प्रणम्य शकुनसूक्तेन देवमादाय भूरसि भूः प्रतिष्ठित्यै इत्यादिनादिदेवं प्रतिष्ठाप्य प्रतद्विष्णुरिति पुष्पाञ्जलिना देवं प्रणम्याघ्यालङ्कृत्य शकुनसूक्तं समुच्चार्य सर्वालङ्कारसंयुक्तं ग्रामालयप्रदक्षिणं कृत्वास्थानमण्डपे संस्थाप्य नृत्तगे

............र्विनोदं कारयेत् । शुद्धस्नानविधिना संस्नाप्य महाहविः प्रभूतं वा हविर्निवेद्यास्थाने संस्थाप्यार्चयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते पात्रपरिच्छदादिसंस्कारविधिर्नामैकोनत्रिंशः पटलः ॥

---

## अथ त्रिंशः पटलः ।

अथातोऽङ्कुरापणविधिं व्याख्यास्यामः । भूपरीक्षादीनि यस्मिन्नहनि कारयेत्, पूर्वं नवमे सप्तमे पञ्चमे त्र्यहे वाङ्कुरार्पणपात्रान् पालिकां कुम्भं शरावान् सौवर्णरजतताम्रमृण्मया वा ब्राह्मणो यजमानश्चेत् प्रत्येकं षोडश, क्षत्रियस्य द्वादश, वैश्यस्याष्टौ, शूद्रस्य चत्वारः, सर्वेषां चत्वारो वा सङ्गृह्य पालिकोत्सेधं मात्राङ्गुलं चतुर्विंशदङ्गुलं समवृत्तं तदुत्सेधं षडंशं कृत्वा, एकांशं पादं, त्र्यंशं नालं द्व्यंशं पालिकापादोदरविष्कम्भं चतुरङ्गुलं मध्याङ्गुलं भित्तिकरं पद्माकारं मुखस्योदरविष्कम्भं षोडशाङ्गुलं भित्तिरर्धाङ्गुलं नालान्तं क्रमात् संक्षिप्तमोष्ठतारं त्र्यङ्गुलमेवं पालिकाकुम्भस्योदरविष्कम्भं द्वादशाङ्गुलमर्धाङ्गुलं भित्तिमुखस्योदरविष्कम्भं पञ्चाङ्गुलं भित्तिरर्धाङ्गुलमोष्ठवलयमेकाङ्गुलं कुम्भाकारं चतुर्दिक्षु भागविस्तृतं चतुर्द्वारयुतमन्यत् सर्वं पालिकावत् कारयेत् ॥

शरावाणामोष्ठतारमेकाङ्गुलमेतदेव विशेषोऽन्यत् सर्वं पालिकावत् कारयेत् । अशक्तश्चेद् यथालाभमानेन कारयेत् ॥

सद्य एवासने वा पालिकादीनामलाभे पात्रान् सङ्गृह्य पालिकादीन् सङ्कल्प्यैवं कारयेत् । अथवोपयुक्तं जलैः प्रक्षाल्य कुशदर्भैर्वा दग्ध्वा पर्यग्नि च कारयेदिति केचित् ॥

धान्यान् शालिव्रीहियवमुद्गमाषप्रियङ्गुधूमचणकतिलतिलत्वखूरकुलस्थान्येतेषां लाभे यथालाभं वाहृत्य संशोष्य सारं गृह्य तस्मिन् दिने पूर्वाह्णे तोयं निक्षिप्यालयाभिमुखे चोत्तरे चैशान्ये वा मण्डपादीन् सङ्कल्प्य वितानध्वजदर्भमालातरङ्गस्तम्भवेष्टनाद्यैर्यथाशक्त्यालङ्कृत्य गोमयेनोपलिप्य पैष्टया भूमिमलङ्कृत्य दीपानुद्दीप्याचार्यः स्वशिष्यैः

सार्धं सन्ध्यामुपास्य यजमानेनाचार्यं सम्पूज्य कार्यमावेद्य कर्मेदं कुर्विति प्रणम्य याचेत् । आचार्यस्तत् कर्म करिष्यामीति सङ्कल्प्यारभेत् । सायार्चनान्ते देवेशं प्रणम्य विशेषतोऽभ्यर्च्य हविर्निवेद्यालङ्कृते मण्डपे पैष्टया यथेष्टमानेनाष्टसूत्रैः प्रागुदगेकोनपञ्चाशत्पदं विभज्य तन्मध्ये षोडशाङ्गुलायामं विस्तृतं तालोन्नतं त्रिवेदीसहितं ब्रह्म....कृत्वा तस्य दक्षिणे सावित्रीं वामे सरस्वतीं यथालाभमाने पीठं कृत्वा परितश्चतुर्विंशतिपदं विभज्य बाह्ये पदे ईशानपर्जन्यजयन्तमिन्द्रा.........वितथं ग्रहक्षतं यमं गन्धर्वं भृङ्गराजं मृषं निर्ऋतिं दौवारिकं सुग्रीवं सरित्पतिमसुरं शोषिणं रोगं जवनं नागं मुख्यं भल्लाटं सोमवर्गलमिति चतुर्विंशतिदेवान् प्रणवादिनमोऽन्तं पुष्पमन्नं पश्चात् तोयं च प्रक्षिप्य पुष्पादीन् संशोध्य बाह्ये पदे इन्द्रादिचतुर्दिक्षु पदत्रयद्वारं विभज्य, ईशादिकोणेषु पदत्रयेषु त्र्यङ्गुलोन्नतं यथालाभोन्नतं वा तण्डुलैर्वा व्रीहिभिः पङ्क्तिं कृत्वा जयन्ते शेषस्यादित्ये वक्रतुण्डस्य ग्रहक्षते गरुडस्य गन्धर्वे चक्रस्य सुग्रीवे पङ्क्तीशस्यासुरे भूतेशस्य मुख्ये शङ्खस्य सोमेऽङ्कुराधिपसोमस्यार्गले शान्तस्य बाहुमानेन वर्तुलाकारं पीठं कृत्वा बालालयार्चितं पूर्वं नवकुम्भं सङ्गृह्य तन्तुना वेष्टितं शुची वो हव्येति प्रक्षाल्योत्पूयापदं दन्येति कुम्भं पूरयेत् । वस्त्रं परिवेष्टय कुशकूर्चाक्षतसुवर्णं निक्षिप्याचार्यः प्राङ्मुख उदङ्मुखो वासीनो हृदये बीजाक्षरं न्यस्य ब्रह्मसूक्तं हृदयात् ब्रह्माणं ध्यात्वा कुम्भेऽम्भासि स्वादायातु भगवान् ब्रह्मेति चावाह्य पीठं कूर्चं निधाय कुम्भाच्छक्तिं पूर्ववदावाह्य पश्चाद् गर्भालयेऽर्चिते प्राणिध्यां ध्यात्वा पूर्ववदावाह्य हविर्निवेद्य शेषादीनां चार्पयित्वा ब्रह्मणः परितोऽष्टासु पदेषु प्रागाद्यैशान्तं जयाद्यप्सरसोऽर्चयेत् ॥

बाह्ये चैशादीनां तत्तद्दिने चार्चयेत् । एतेषां यथालाभं बलिं दत्वा, उत्तरे सोमस्याभिमुखे धान्ये पीठे षोडशप्रस्थं सम्पूर्णं नवं कुम्भं समादाय तन्तुना वेष्टितं प्रक्षाल्याद्भिरापूर्य वस्त्रेण वेष्टितं सुवर्णं निक्षिप्याङ्कुराधिपं सोमं ध्यात्वा कुम्भे समावाह्याभ्यर्च्य हविर्निवेद्य मुखवासं दत्वा निवेदितमप्यपनीयाभ्युक्ष्य पालिकामृदा वा वालुकाभिर्वा गोक्षीरयुतैरापूर्य तेषां मध्ये प्रत्येकं वस्त्रमावेष्टय वस्त्रालाभे

पृथक्पृथग् दर्भेण बध्नीयात् । इन्द्रादीशान्तमीशं पर्जन्यं जयन्तं सत्यक्षवेऽग्निं वितथं भृङ्गराजेषु निर्ऋतिं दौवारिकं शोषिणे जवनं ··· ······दिषु च पालिकान् कुम्भं शरावान् विष्णुगायत्र्या संस्थाप्य पालिका सुमेदिनी तान्निन्द्रे कुम्भेषु राका शरावेषु सिनीवाली नाम्ना समभ्यर्च्य ···············द्यालाभे बलिं वा दद्यात् । कांस्ये पात्रे बीजानि निक्षिप्य क्षीरेणोपसिञ्च्य सोमस्याभिमुखे संन्यस्याभ्युक्ष्य सोममभ्यर्च्य पालिकादीन् वस्त्रेणाच्छाद्य पुण्याहं वाचयित्वाचार्यदक्षिणां दत्वा सोमं राजानमित्यभिमृश्य त्रयीघोषसमायुक्त आचार्यः प्राङ्मुख उदङ्मुखो वा वैष्णवं विष्णुसूक्तं सोमं राजानमिति जपन्नङ्कुरानर्पयित्वा एते शतमित्यादिवारुणमन्त्रैर्जलसेकं कृत्वाचार्यादिभक्तेभ्यस्ताम्बूलं प्रदायाङ्कुरान् सोमकुम्भं च गुप्ते देशे विन्यस्य पालिकादीन् विधानेन पिधाय नित्यदीपयुतं त्रिकालं द्विकालमेककालं वा सोममभ्यर्च्य हविर्निवेदयेत् । उत्तममिति दीपार्चनमेव हविर्निवेदनं सोमकुम्भेऽर्चनं वा विधिनाधमम् ॥

एवं कर्त्तुमशक्त्या वासन्ने सद्य एवाङ्कुरार्पणोक्तक्रियां सर्वां कृत्वा श्वेततण्डुलैः पक्वाद्यैः श्वेतपुष्पैर्वा पालिकादीनि तत्तन्मन्त्रेण पूरयित्वारभेत् । दीपाङ्कुरार्पणं न कुर्यात् । कुर्याच्चेद् विनाशाय भवति । एवमेवाङ्कुरार्पणे कृते देवः प्रीतो भवेत् । अङ्कुरार्पणहीने कृतं कार्यं सर्वं निष्फलं भवति । तस्मात् प्रयत्नेनाङ्कुरार्पणं कृत्वारभेदिति विज्ञायते ॥

अथातो भगवतो नारायणस्य स्थापनाविधिं व्याख्यास्यामः । उदगयने चैत्रे वैशाखे तैष्ये ज्यैष्ठेषूत्तमम् । दक्षिणे श्रावणेऽश्वयुजकार्त्तिकेषु मध्यमम् । प्रोष्ठपदाषाढयोरधमम् । मार्गशीर्षमाघौ विवर्जयेत् । उत्तरारोहिणीश्रवणपुष्यपुनर्वसूस्वातीचित्रानुराधादित्यश्वानीवासिते पक्षे पक्षच्छिद्रां नवमीं परिवर्ज्य कृष्णपक्षे प्रथमाद्वितीयापञ्चम्यां वा सोमगुरुसौम्यकाव्यवारे करणानि विशिष्टानि ध्रुवाणि च विष्टिमष्टधा विविधीं त्यक्त्वा चरराशिं विहाय स्थिरराशावुभयराशौ वा श्रेष्ठे विष्णोः स्थापनं करोति । आर्द्राश्लेषमूलनक्षत्रे कृष्णेऽष्टमी चोल्कापातेऽशनिपातदिग्दाहपांसुलोहितोपवर्षव्यतीपातभूकम्पशिवारुतराजमरणसूर्यचन्द्रोपरागयुते रात्रौ विवर्जयेत् ॥

वैखानससूत्रेण निषेकादिसंस्कारक्रियान्वितान् विप्रान् वेदशुद्धांस्त्रयो ……………… वैष्णवान् विनयसम्भूतान् सुमनस्कानाचार्यानाहूय, न दीर्घातिरिक्ताङ्गभृत्कालमत्सरापस्मारकुष्ठोन्मादोदरशर्करामधुमेहा……………… युतान् नखश्यावदन्तशिपिविष्टाशैवषण्डराजपितृगुरुदेवब्राह्मणप्राज्ञलदेवदूषककुपितान्धबधिरकुब्जवामनायाज्ययाजकाकुलीनातिवृद्धातिबालार्थलुब्धविरूपगानन्यशास्त्रपारगपाषण्डाभक्तानन्नुमोदितानन्यदेवताभक्तान् नास्तिकभ्रान्तचित्तशठादिदोषयुतान् वर्जयित्वोक्तलक्षणसम्पन्नान् नानामन्त्रज्ञानार्चनासर्वप्रयोगज्ञान् मन्त्रकल्पविदः सशिष्यानग्निसम्पन्नान् श्रोत्रियानाहूय तेषु ज्ञानोत्कटं शुभदर्शनं श्रुतवृत्तशीलसम्पन्नमेकं गुरुं वरयित्वा पश्चात् तद्गुणसंयुक्तान् षोडशर्त्विजानाक्षिमोचनहोमार्थमेकं वास्तुहोमस्यैकं पञ्चाग्नीनां पञ्चाब्जहोमस्यैकं ब्रह्मसोमावृत्विजौ द्वौ स्नपनहोमार्थमेकं तथा होतारमेकं सर्वदेवार्चनार्थं द्वौ चैवं वरयेत् । अन्यस्मिन् परिवारदेवानां होमानामध्वर्यून् वरयित्वा, अशक्तश्चेद् यथालाभं वा वरयेत् । एतैरनुज्ञाप्य सर्वं तन्त्रयित्वा करोति । ते सर्वे लुप्तकेशश्मश्रुनखाः शुद्धदन्तनखाः स्नात्वाघमर्षणं कृत्वाचम्य सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा सावित्रीपूर्वां दशसूक्तं जप्त्वा प्राजापत्यं कृच्छ्रमेकाहमुपोष्य किल्बिषं सर्वं दह्य यावत् प्रतिष्ठान्तं तावद्धविष्यभोजनो उर्वीदर्भास्तरणे शाययीत । स्त्रीशूद्रादिसम्भाषणपरिवेषणादीनि वर्जयित्वा त्रिषवणस्नायिनो जितेन्द्रिया भवेयुरिति विज्ञायते ॥

अथातो नवबिम्बाक्षिमोचनम् । प्रतिष्ठादिवसात् पूर्वं नवमे सप्तमे पञ्चमे तृतीये वाहन्यमन्त्रकमाक्षिमोचनं शिल्पिना कारयित्वा समन्त्रकं च कुर्यात् । अर्कारराहुसौराणामुदयं हित्वा विलोचने नक्षत्रेऽक्षिमोचनं कारयति । कौतुकादीनामक्षिमोचनं चेत् पूर्वेद्युस्तद्दिने पीठसङ्घातं कृत्वालयाभिमुखे गोमयेनोपलिप्य पैष्ट्या भूमिमलंकृत्य तन्मध्ये धान्यराशौ पीठं संन्यस्य तन्मध्ये ब्रह्माणमिन्द्रादिदिग्देवानां तत्तद्दिक्षु तत्तन्नाम्नाभ्यर्च्य पुष्पादीन् संशोध्य ब्रह्मा देवानामिति ब्रह्मस्थाने ब्रह्ममणिमिन्द्रप्रणवन्तमित्यैन्द्रे वज्रमणिमग्नावग्निमित्याग्नेय्यां मौक्तिकं यमोदासानेति याम्यां वैडूर्यं वसवः प्रथ-

मेति नैर्ऋत्यां शङ्खजमेतेशतमिति वारुण्यां स्फाटिकं मरुतः परम[?]मेति वायव्यां पुष्यकान्तं सोमं राजानमिति सौम्ये चन्द्रकान्तमीशानेत्यै-शान्यां नीलं च क्रमेण विन्यस्याथवा मध्यादिचतुर्दिक्षु पञ्चरत्नानि वा विन्यस्य, अलाभे सुवर्णं वा निक्षिप्य भूरसि भूः प्रतिष्ठित्यै सं-स्थाप्य तस्यैवोत्तरे चौपासनाग्निकुण्डं कृत्वा वास्तुहोमं हुत्वा तद्बिम्ब-स्यातीव पार्श्वतः पर्यग्निं कृत्वा पञ्चगव्यैर्बेरं समभ्युक्ष्य बिम्बस्य दक्षिणेऽभिमुखे वा मनोरमे चौपासनाग्निकुण्डं कृत्वाघारान्ते दद्भ्यः स्वाहेत्यङ्गहोमान्मौलिमालाद्यैश्च जुहुयात् । महाभूतदैवत्यं विष्णुसूक्तं पुरुषसूक्तं वैष्णवं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं च हुत्वा विमानं च नवं चेत् तस्य स्थूप्याद्युपानान्ताङ्गानां नामभिर्हुत्वा विमानप्रतिष्ठाविधा-नेन विमानादेवाक्षिमोचनादीनि कारयेत् । आचार्यं स्रग्वस्त्रोत्तरीया-भरणैरलंकृत्य देवाभिमुखे सुवर्णशृङ्गां रूप्यखुरां सवत्सां गां वस्त्रगन्धां कांस्यदोहनां पुष्पादिभिरलंकृताङ्गामेकां संस्थाप्याभ्यर्च्य तृणादिकब-लान् दत्वा गोदानसूक्तेनाभिमृश्य घृतदधिमधुक्षीरं च प्रस्थमात्राद-हीनं सौवर्णं राजतं ताम्रं कांस्ये वा पात्रेण सुवर्णसहितं सद्भृत्याभि-मुखे संन्यस्याधिदेवान् घृते सामवेदं मधुनि यजुर्वेदं दध्नि ऋग्वेदं क्षीरेऽथर्वं चाराध्याष्टौ धान्यान् शालिव्रीहिमाषमुद्गतिलबिल्वप्रियङ्गु-सर्षपाणि चाष्टधान्यानि प्रत्येकं भारार्धं तदर्धं वा राशिं कृत्वाधिदेवं वायुमभ्यर्च्य जयशब्दैः स्तोत्रैः संस्तूय ततादिवाद्यैराघोष्य देवाभि-मुखे निधाय प्रच्छदपटं कृत्वाचार्यश्चोत्तराभिमुखः प्राणायामं तु कृत्वा विष्णुर्मां पात्वित्युच्चार्य दिव्यरूपं ध्यायन् शुचीदृढकराभ्यामेव पक्ष्मवर्मरक्तशुक्लकृष्णज्योतिर्मण्डलानि यथाक्रमेण पृथिव्यादिमहाभू-तानि परमात्मानं चैवं स्मृत्वातोदेवा इति दक्षिणे नयने सहस्रशीर्षा-दिना वामे चाक्षिमोचनं कारयेत् ॥

प्रच्छन्नपटं विसृज्य गोधान्यादिदर्शनद्रव्याणि दर्शयित्वा ध्रुव-बेराक्षिमोचनं च हेमपात्रे सुवर्णसूचीं गृहीत्वा मेदिनीदेवीमभ्यर्च्य पक्ष्मादिमण्डलादीनि सङ्कल्प्य तथैवाक्षिमोचनं कारयेत् । एष विशे-षोऽन्यत् समानं देवीभ्यामृषिभ्यां ब्रह्मेशाभ्यां दौवारिकादीनां तत्त-न्मन्त्रेणाक्षिमोचनं कारयेत् ॥

ध्रुवकौतुकस्नपनोत्सवं बिम्बबेराणां प्रश्नानां सहैवाक्षिमोचनं चेत् सहैव वास्तुहोमौ हुत्वा गवादिदर्शनद्रव्यं सर्वं पृथगेव कर्तव्यम् । सर्वेषां पृथक् पृथक्त्वेन होमादीन् सर्वं पृथगेव कुर्यात् । सर्वपरिवाराणां देवानामालयं प्रतिमाश्च पृथक्त्वे पृथगेव होमाद्यं सर्वं कारयेत् । ध्रुवार्चाबेरं चेत् कौतुकोक्तवदक्षिमोचनं कारयेत् । कौतुकादीन् नवबेराणामक्षिमोचनं होमान्ते जलाधिवासनादि कारयेत् ॥

ध्रुवबेराक्षिमोचनान्ते तद्बेरकशुद्धिः मापाढकपूर्णान् खण्डस्फुटितकालरहितान् नवकलशानाहृत्य तन्तुना परिवेष्ट्याद्भिः प्रक्षाल्य नादेयैराधावैः सह गन्धैरुत्पूतैरापूर्याक्षतकूर्चान् कुशपुण्यपुष्पान् शमीपलाशदूर्वाग्रान् सुवर्णशकलान् प्रणवेनोत्क्षिप्य प्रत्येकं वस्त्रमाल्यैरावेष्ट्य देवाभिमुखे शालिभिः स्थण्डिलं कृत्वा नवभागं विभज्य मध्यमादिनवपदेषु नवकलशान् विन्यस्याचार्यस्तेषां दक्षिणे चोत्तराभिमुखो ब्राह्ममासनमास्थाय मध्यकलशादिक्रमेण तत्तत्कूर्चेनेदमापः शिवा विष्णुगायत्रीमग्निमीले इषे त्वोर्जे त्वा अग्न आयाहि शन्नो देवीरापउन्दन्तु वैष्णवमेकाक्षरादीन् विष्णुसूक्तं च जप्त्वाभिमन्त्र्य तत्कलशोदकैश्चतुर्वेदादिमन्त्रैः पुरुषसूक्तैरापो हिरण्यपवमानैर्ध्रुवबेरं समभ्युक्ष्य देवं देव्यादिसर्वपरिवाराणां तन्मध्यकलशोदकेन तत्तन्मन्त्रसमायुक्तमापोहिष्ठादिना समभ्युक्षणं कृत्वा पुण्याहमपि वाचयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्तेऽङ्कुरार्पणाक्षि-
मोचनविधिर्नाम त्रिंशः पटलः ॥

---

## अथ एकत्रिंशः पटलः ।

अथाधिवासनविधिः । अधिवासं कृत्वैव स्थापनां करोति । अनधिवासितं बेरं स्थापितं चेत् तद्राष्ट्रग्रामयजमानस्थापकांश्चाशु विनाशाय भवति । अतो देवालयस्योत्तरे पुरस्ताद् वा प्रपां कूटं वा तन्मध्ये तद्बिम्बादर्धाधिकायामं विस्तारं निम्नं बिम्बघ्नं जलद्रोण्याम- वटं कृत्वा संशोध्य वितानध्वजदर्भमालाद्यैरलङ्कृत्य परितः प्रावरणं कृत्वा पञ्चगव्यैर्यथायोगं संयोज्य वसो पवित्रामिति पञ्चगव्यैरापूर्या-

धिदैवमीशानमभ्यर्च्य नववस्त्राणि चास्तीर्य तत्प्राच्यामौपासनाग्नि-
कुण्डं कृत्वाघारं हुत्वाघारान्ते तस्योत्तरे देवेशं सप्तभिः कलशैः स्नाप्य
पुण्याहं वाचयित्वा नववस्त्रोत्तरीयाद्यैरलंकृत्याभ्यर्च्य विष्णोर्नुकादि
जपन् पवमान इति तस्मिन् प्राक्शिरः शाययित्वाग्निं परिस्तीर्य वैष्णवं
विश्वेशाय जनार्दनाय सर्वभूतात्मनेऽव्यक्ताचलाय देवेभ्यो भूतेभ्यो
नागेभ्यो लोकेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा वैष्णवं ब्राह्मं रौद्रं प्राजा-
पत्यं वारुणं वैघ्नं गारुडं वैष्वक्सेनं दिग्दैवत्यं च हुत्वाग्निं विसृज्य
तद्रात्रौ तदालयगतानां देवानां सर्वेषामौत्सर्गिकं बलिं निर्वाप्य प्रभाते
स्नात्वालयमाविश्याधिवासितं देवमुद्धृत्य सप्तभिः कलशैः स्नाप्य नव-
वस्त्रोत्तरीयाद्यैरलङ्कृत्याभ्यर्च्य द्रोण्यामवटं संशोध्य नववस्त्राणि चा-
स्तीर्य शन्नो देवीरिति गव्येन क्षीरेणापूर्याधिदैवमथर्ववेदमभ्यर्च्य पुण्य-
पुष्पाणि निक्षिप्य क्षीरं क्षीरोदधिरिति स्मृत्वा तस्मिन् देवं पूर्ववच्छा-
ययेत् । पूर्ववद्धोमं हुत्वा तद्रात्रौ पूर्ववदधिकं बलिं निक्षिप्य प्रभाते
स्नात्वा विष्णोर्नुकादीन् जप्त्वा बिम्बमुद्धृत्य सप्तभिः कलशैः सं-
स्नाप्य नववस्त्रोत्तरीयाद्यैरलङ्कृत्याभ्यर्च्य नद्यां ह्रदं शुद्धं तटाकं वा-
श्रित्य तज्जले प्रपां कूटं वा कृत्वा वितानध्वजदर्भमालाधूपदीपाद्यै-
रलंकृत्य परितः प्रावरणं कृत्वा तत्तीरेऽग्निशालां कृत्वाग्निं निधायाग्निं
परिस्तीर्यातोदेवादि वैष्णवं हुत्वा पश्चात् सक्तुघृतं पायसमन्नं समा-
दाय योगेशाय शेषपर्यङ्कशायिने शब्दब्रह्मणे समुद्रेभ्यः पर्वतेभ्यो ऋ-
षिभ्यः पितृभ्यो भूतेभ्यः स्वाहेति हुत्वा तत्तीर्थमिदमापः शिवा इत्य-
भिमृश्याधिदैवं वरुणं पुण्यतीर्थेशं शिवं पुण्यं देवासमिति चतुर्भिर्मन्त्रै-
रर्घान्तमभ्यर्च्य नववस्त्राणि चास्तीर्य देवं नववस्त्रोत्तरीयाद्यैरलंकृत्या-
भ्यर्च्य वैष्णवैर्मन्त्रैर्देवेशं प्राक्शिरः शाययित्वाग्निं परिस्तीर्य धातादि-
पञ्चवारुणं मूलहोमं चाग्नेयं च हुत्वान्नः परिपक्कं कृत्वा तद्रात्रौ प्रभूतं
बलिमाहृत्य मुद्गनिष्पावतिलनिल्वलाजाक्तमाषापूपसक्तुं कटाहे प्रक्षिप्य
पूर्ववत् तदालयं ग्रामं च प्रादक्षिण्यक्रमेण देवतादिभ्यो बलिं निर्वाप्य
रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा देवमुत्थाप्य शुद्धोदकैः संस्नाप्य
एवं त्रयाणामधिवासनानां प्रत्येकमहोरात्रदिवा चैकं वा कारयेत् ।
एवमसम्भवे द्व्यहे चेत् पूर्ववत् पञ्चगव्याधिवासं क्षीराधिवासं जलाधि-

वासं च पृथगेव सङ्कल्प्य देवं वस्त्रोत्तरीयाद्यैरलंकृत्याभ्यर्च्य प्रत्येकं याममप्यधिवासयेत् । अहेऽप्यसम्भवे चैकाहे चेत् पृथक् पृथङ् मुहूर्तं यथालाभकालं वाधिवासयेत् । अलाभे त्रीणि कुम्भानि द्वे का रयति । अस्मिन् अनन्तशयनस्य ब्रह्मस्थाने कौतुकं चतुर्भुजं शङ्खचक्रधरमनन्तोत्सङ्गासनिफणान् पञ्च सप्त वा च्छन्नमौलिनं कारयति ॥

आदिमूर्त्यादिसर्वासां मूर्तीनां तत्तत्कौतुकबिम्बानां पूर्वोक्त विधिना तत्तद्ध्रुवबेरानुरूपं चतुर्भुजं वा कारयेत् । इन्द्रादिलोकपालानामन्येषां परिवाराणां नवभेदेष्वेकस्मिन् मार्गेण नवपद्पञ्चमूर्तिविमाने कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते नवपट्पञ्चकल्पना-
विधिर्नाम एकत्रिंशः पटलः ॥

## अथ द्वात्रिंशः पटलः ।

अथोर्ध्वं नवपद्पञ्चमूर्तिप्रतिष्ठाविशेषं वक्ष्ये । पूर्वोक्तेषु नक्षत्रेष्वेकस्मिन् यजमानानुकूलर्क्षे तद्दिनात् पूर्वं यथोक्तमङ्कुरानर्पयित्वा नवमूर्तिं समुद्दिश्य प्रत्येकमाचार्यस्थापकान् ऋत्विजश्च पूर्वोक्तलक्षणसम्पन्नानुक्तदोषविवर्जितान् सम्यग् वरयेत् । तथैव सम्भारान् सम्भृत्यालयाभिमुखे विष्णोरादिमूर्तेर्यागशालां पञ्चहस्तायतविस्तारां षट्त्रिंशत्पादसंयुक्तां प्रपां कृत्वा तन्मध्ये वर्षनिवारणं कूटं कृत्वा तस्मिन् पञ्चविंशतिभागं कृत्वा तन्मध्ये देशे शय्यावेदीं नवभित्तिसमायामविस्तारं तत्तुर्यांशोत्सेधं दर्पणोदरवत् स्थलं सङ्कल्प्य तस्यैव परितश्चाष्टौ पदे चाष्टाङ्गुलोत्सेधं स्थलं कृत्वा शय्यावेद्यां पूर्वे सभ्यमाहवनीयं याम्येऽन्वाहार्यं वारुण्यां गार्हपत्यमावसथ्यं च सौम्ये चाग्नेय्यां पौण्डरीकं नैर्ऋत्यां विष्टरं वायव्यां सम्भारादीनैशान्ये स्नपनश्वभ्रं तद्बाह्ये षोडशभागाङ्गुलोत्सेधमधःस्थलं कृत्वालङ्कृत्येन्द्रादिदिग्देवानां तत्तद्दिक्षु चौपासनाग्निकुण्डं कृत्वा, इन्द्राग्न्योर्मध्ये गरुडस्य, यमपावकयोर्मध्ये श्रीदेव्याः, वरुणोदानयोर्मध्ये महीदेव्याः, वायुसोमयोर्मध्ये

शङ्करस्य, सोमेशानयोर्मध्ये मार्कण्डेयस्य, इन्द्रेशानयोर्मध्ये विष्वक्सेनस्यान्येषां परिवाराणां तत्तद्दिक्षु यागशालां परितश्चौपासनाग्निकुण्डं कृत्वा तेषां बेरमालयं यदि स्यात् तत्तदाभिमुखे चौपासनाग्निकुण्डं कुम्भपूजनं च पृथगेव कृत्वा बिम्बाभावे त्विन्द्रादीशानपर्यन्तद्वारेषु द्वारपालान् यक्षादीनभिमुखे श्रीभूताद्यनपायिनां च होमं कारयेदिति केचित् ॥

प्राच्यां पुरुषमूर्त्तेर्यागशालां षोडशस्तम्भसंयुक्तं तन्मध्ये शय्यावेदीं तत्प्रागादिचतुर्दिक्षु चाहवनीयान्वाहार्यगार्हपत्यावसथ्याग्निकुण्डान् कृत्वा तत्प्राच्यां तृतीयतलदेवार्थं तथैव यागशालां तन्मध्ये शय्यावेदीं तस्यैव परितश्चाग्निकुण्डानि पञ्चानां परिकल्प्य तस्यालयाद् दक्षिणे तद्द्वाराभिमुखे सत्यमूर्त्तेर्यागशालां तन्मध्ये शय्यावेदीं तस्यैव परितश्चतुरग्निकुण्डानि सङ्कल्प्य पश्चिमेऽच्युतमूर्त्तेर्यागशालां तन्मध्ये शय्यावेदीं तस्यैव परितश्चतुरग्नीन् पश्चिमे नृसिंहस्य यागशालां तन्मध्ये शय्यावेदीं तस्यैव परितश्चतुरग्नीन् सङ्कल्प्यान्यत् पूर्ववदालयस्योत्तरे वास्तुहोमार्थं श्रामणकाग्निकुण्डं कृत्वा मन्त्रोक्तविधिना वास्तुहोमं हुत्वा सर्वत्र पर्यग्निपञ्चगव्याभ्यां संशोध्य प्रोक्षणैः प्रोक्ष्याधिवासनगतान् देवानादायाभिषिच्य वस्त्रोत्तरीयाद्यैर्विभूष्याष्टोपचारैरभ्यर्च्यालयमाविश्य तद्यागशालात् पश्चिमे विष्टरे देवान् प्राङ्मुखान् संस्थाप्य सर्वहोमानामाघारं हुत्वाघारान्ते सर्वेषामाचार्याणां पूर्ववत् प्रत्येकं पूर्ववत् कुम्भपूजां च कृत्वाचार्यादीन् वस्त्रोत्तरीयाद्यैरलङ्कृत्य कुम्भान् समादाय तन्तुना परिवेष्ट्य विस्तारं षडङ्गुलोन्नतमध्यं निम्नमर्धाङ्गुलं भित्तिरेकाङ्गुलं धृतविधारायुतमुकुलाकारमधस्ताद् दण्डवद् दण्डाकारं कारयति ॥

उपजुहू द्वितालायामं द्वादशाङ्गुलपरिणाहमग्रेऽष्टाङ्गुलायामं समवृत्तं भित्तिरेकाङ्गुलं निम्नमेकाङ्गुलं धृतमेवं कारयति ॥

दर्वी तालद्वयायाममग्रे पञ्चाङ्गुलायामविस्तारं मूले भागविस्तारायाममग्रोच्चमूलादारभ्य मध्ये क्रमाद् गोलकं क्षीणं घनमेकाङ्गुलं कारयति ॥

समित्पलाशाश्वत्थबिल्वशमीखादिरवटोदुम्बरसमिधो गृहीत्वा कार्पासतन्तून् समग्रान् कुशदर्भविश्वामित्रादीन् वाहृत्याष्टमङ्गलान् याज्ञिकैर्वृक्षैर्द्वितलायामं तदर्धविस्तारं चतुरङ्गुलघनयुतां चतुरश्रां फलकां कृत्वा तन्मध्ये सप्ताङ्गुलोत्सेधां श्रीवत्सोदकुम्भभेर्यां दर्शनं मत्स्ययुग्माङ्कुशशङ्खावर्त्तांश्च कृत्वा तथा चक्रशङ्खगदाशार्ङ्गासिचापं चायुधांश्च कारयति ॥

वस्त्रद्वादशाष्टपङ्क्तस्तायामपञ्चचतुस्तालविस्तृतं स्नपनार्थं हविरर्थं च यानि द्रव्याणि तान्यग्नौ होमार्थं घृतं पयो दधि क्षीरं चाष्टधान्यान् व्रीहितण्डुलादीन् पात्रं धृतं तैलं चाक्षिमोचनार्थं सवत्सां गां सुवर्णपात्रे तूलिकासूची दृढरीञ्चापि सुवर्णेनैव कृत्वा कुम्भप्रक्षेपणार्थं पीठन्यासार्थं च रत्नधातुबीजं चाहरेत् । सुवर्णेन प्रतिसराद्यङ्गुलीयकाद्याभरणं (जातं) चाढकपूर्णान् कलशान् द्रोणार्धपूर्णान् पात्रानन्यान् सर्वान् खण्डस्फुटितकालरहितानि समापयेत् ॥

अग्निमथनार्थं यज्ञागारे चाग्नेय्यां गोमयेनोपलिप्य पञ्चवर्णैरलङ्कृत्य तन्मध्ये व्रीहिभिः स्थण्डिलं कृत्वा दर्भानास्तीर्य मन्त्रेणारणिं संस्थाप्याभ्यर्च्यारण्यां महीं मन्थनदण्डे विष्णुमूर्ध्वपट्टिकायामग्निमभ्यर्च्याचार्यः प्राङ्मुखो भूत्वा, अग्न आयाहीत्यरणीं संन्यस्यायुर्दा इति मन्थनं संस्थाप्य, अग्निं दूतमिति मन्थने रज्जुं समावेष्ट्याग्निमूर्ध्वेत्यूर्ध्वपट्टिकां संयोज्य जातवेदो भुवनस्येत्यग्निं मथित्वोत्पन्नमायुर्दा इति प्रणम्योपावरोहेति गोकरीषैरुज्ज्वाल्य घृतप्रतीकेति पात्रिकामादायाग्निरिन्द्रेत्यभिवन्दनं कृत्वाप्रमादं निधाय स्थापनादिवसात् पूर्वं रात्रावालयादुत्तरे चौपासनाग्निकुण्डं कृत्वाघारं हुत्वा सूत्रोक्तविधिना वास्तुहोमं यजित्वागारं पर्यग्नीकृत्य पञ्चगव्यैरणोरणीयानित्यभ्युक्ष्य पुण्याहं वाचयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते यागोपकरणसञ्चयविधिर्नाम द्वात्रिंशः पटलः ॥

## अथ त्रयस्त्रिंशः पटलः ।

अथाग्निकुण्डलक्षणं वक्ष्ये । ब्रह्माग्नीन् पञ्चलोकेषु पथा विभजेत् । आहवनीयं स्वर्गलोकेऽन्वाहार्यमन्तरिक्षलोकेऽस्मिँल्लोके गार्ह-

पत्यमावसथ्यं महर्लोके सभ्यं जनलोक इति चतुरश्रा वै स्वर्गलोकं तद्वच्चतुरश्रमाहवनीयमन्तरीक्षलोकमर्धचन्द्राकृतिस्तद्वदन्वाहार्यं .... मन्थाकृतिस्तद्वद् गार्हपत्यं त्र्यश्रो वै महर्लोकं तद्वदावसथ्यं चतुरश्रं वै जनलोकं तद्वच्चतुरश्रं सभ्यं पुण्डरीकवत् तपोलोकं तद्वत् पुण्डरीकाकारं पौण्डरीकाग्निकुण्डं भवति । तद्यज्ञशालां नवभागां विभज्य मध्ये ब्राह्मे शय्यावेदीमैन्द्रे पदे सभ्यमाहवनीयं चाहवनीयमौपासनाग्निकुण्डवत् कुण्डं कृत्वा याम्योऽर्धचन्द्राकृतिदक्षिणभागमूर्ध्ववेदिविस्तारं दक्षिणोत्तरं त्रिंशदङ्गुलं प्राक्पश्चिमायतषडङ्गुलं द्विवेदिसहितमेकैकं भागविस्तारोत्सेधं मध्यनिम्नं त्रिगोलकं पश्चिमेंऽशे गार्हपत्यं पूर्णचन्द्राकृतिरूर्ध्ववेदिविस्तारं समाधिकत्रिंशदङ्गुलं द्विवेदिसहितमेकैकं भागविस्तारोत्सेधं मध्यनिम्नं षडङ्गुलमुत्तरे चावसथ्यं त्रिकोणं षड्यवाधिकाष्टचत्वारिंशदङ्गुलायतैकभुजयुतमूर्ध्ववेदिद्विवेदिसहितमेकैकं भागविस्तारोत्सेधं निम्नं त्रिगोलकं भागग्रं कारयति । शय्यावेद्यां तत्प्राच्यामाहवनीयस्य पश्चिमे सभ्याग्निकुण्डं त्रिवेदीसहितं तदूर्ध्वे वेदिविस्तारायामं द्वात्रिंशदङ्गुलमेकैकं वेदिविस्तारोत्सेधं भागं मध्यवेदिविस्तारं पञ्चाङ्गुलं मध्यनिम्नमष्टाङ्गुलद्वादशाङ्गुलं वाग्नेय्यां पौण्डरीकाग्निं त्रिवेदिसहितं सुवृत्तमूर्ध्ववेदिविस्तारं सताधिकत्रिंशदङ्गुलमेकैकं वेदिविस्तारोत्सेधं भागाङ्गुलमधोवेदिविस्तारं षडङ्गुलं भागादिषोडशदलैर्युक्तं मध्ये निम्नमष्टाङ्गुलं दशाङ्गुलं वा कारयेत् ॥

ऐशान्ये पदे द्विवेदिसहितं तद्बेरपीठात् प्रतिदिक्चतुरङ्गुलविस्तारं तस्योत्तरे वारिमार्गं कारयेत् । नैर्ऋते पदे देवस्यालङ्कारार्थं त्रिहस्तायतविस्तारं तालोन्नतं चतुरश्रं वेदिं कृत्वा वायव्ये यागोपकरणद्रव्यन्यासार्थं चतुर्हस्तविस्तारं भागोन्नतं वेदिं कृत्वा सर्वेषां पर्षदानां तत्तदालयाभिमुखे दक्षिणे वाहवनीयाग्निकुण्डं शयनकुम्भपूजनं हौत्रशंसनं मूर्त्यावाहनादिं चाचरेत् । अथवा देवेशस्य हौत्रशंसने मूर्त्यावाहनकाले परिवारदेवहोमानामध्वर्युश्च तत्तन्मूर्तिमन्त्रं च जप्त्वा तत्तद्धोमे दक्षिणप्रणिधौ आवाहनादिकं कृत्वा तत्तन्मन्त्रं वैष्णवं षोडशद्वादशपर्यायतो जुहोति । पर्षदानामालयं प्रतिमाहीनं चेत् सभ्या-

ग्निमध्ये तत्तद्दैवत्यं वैष्णवं च हुत्वा होमकाले देवेशस्य कुम्भं नीत्वा तत्स्थाने पीठे तत्तद्देवं ध्यायन्नावाहयेत् । अथवा देवेशस्यास्य यज्ञस्य पञ्चाग्नीन् पौण्डरीकाग्निं कृत्वा यागशालां परितश्चैकभक्तियुतं मपां कृत्वैन्द्रादिदिग्देवानामौपासनाग्निकुण्डं कृत्वैन्द्रेशानयोर्मध्ये वीशस्ये- न्द्राग्न्योर्मध्ये चक्रस्य यमपावकयोर्मध्ये श्रीभूतस्य यमनीलयोरन्तरे ब्रह्मणे मित्रावरुणयोर्मध्ये पुण्यस्य वरुणोदानयोर्मध्ये ख्यातीशस्य वा- युसोमयोर्मध्ये शङ्करस्य सोमेशानयोर्मध्ये शान्तस्य प्राग्द्वारादुत्तरे मणि- कसन्धयोश्च दक्षिणेऽन्यस्य दाक्षिणद्वारपूर्वे विखनसतापसयोः पश्चिमे वस्वन्तस्य पश्चिमद्वारदक्षिणे किष्किन्धतीर्थयोरुत्तरे मित्रस्योत्तरद्वार- पश्चिमे विकटेशयोः पूर्वे धत्तारस्य च प्राच्यां दक्षिणोत्तरे नीत्याक्षम- योश्च तयोर्दक्षिणोत्तरयोर्ध्वजशङ्खयोश्चौपासनाग्निकुण्डानि कृत्वा, एव- मुत्तमोत्तमं, विमानपालद्वारपालांश्च विना यदुत्तममध्यमं, लोकपालांश्च महाभूतशङ्खध्वजपाकोर्जुनानां च विना वा कारयेदुत्तमाधमम् । ब्रह्मे- शपुण्यभृगुणाश्च विना वा कारयेन्मध्यमोत्तमम् । श्रीभूतचक्रवीशानां विना वा कारयेन्मध्यममध्यमम् । लोकपालांश्च विना कारयेन्मध्य- माधमम् । देवेशस्य पञ्चाग्नीनां विना कारयेदधमोत्तमम् । त्रेताग्निवि- धानं गार्हपत्यान्वाहार्याहवनीयाग्नीन् कल्पयेत् । एतेषां प्रधानं गार्हप- त्याग्नौ सभ्यवत् सर्वं कृत्वैतदधममध्यमम् । केवलं सभ्याग्निकुण्डमेव कृत्वा सर्वदेवानामेतदग्नौ हुत्वाधमाधममाचक्षते । सर्वत्र पौण्डरी- काग्निं कारयेदित्येके चैवं नवधा भवन्ति । अन्यत् सर्वं समानम् ॥

ध्रुवकौतुकस्नपनोत्सवबलिबेराणां सह प्रतिष्ठा चेत् सहैकयागशा- लायामेकवेद्यां सहैव होममेककुम्भं च कुर्यात् । तेषां पृथक्त्वे पृथगेव सर्वं कर्त्तव्यम् । प्रादुर्भावाणामाविर्भावाणां च भक्त्यास्मिन् विमाने स्था- पनां यदीच्छेन्मानाङ्गुलेन सप्ताङ्गुलं समारभ्य द्व्यङ्गुलं द्व्यङ्गुलं वर्धयेद् एकोनषष्ट्यङ्गुलान्तम् । सप्तविंशतिभेदेष्वष्टमानं विनिश्चित्य प्रतिमां कृत्वा मुखमण्डपे वान्तर्मण्डले वान्यस्मिन् यथेष्टदेशे वा रत्नानि वि- न्यस्य पूर्वोक्तबेरस्थापनाविधिमार्गेण प्रतिष्ठाप्य तत्तन्मूर्त्तिमन्त्रैर्विभवा- नुरूपमभ्यर्च्यालयाभ्यन्तरे सह प्रतिष्ठा चेत् स्नपनशयनं च पृथगेव

कृत्वा, एककुम्भे तत्तद्रूपं तथैव ध्यात्वा सभ्ये सर्वेषां तत्तदुक्तहोमं हुत्वा कौतुकादीनामावाहनान्ते तत्तन्मन्त्रेणावाह्यार्चयेदिति केचित् । सर्वान् पदार्थिनः स्नात्वा सायंसन्ध्यामुपास्य स्वकीयाग्नीन् हुत्वा स्थापकाः सव्याहृतिकं गायत्रं सशिरस्कं दशप्रणवसहितं त्रिः पठेत् ! यतः प्राणायाममिति प्राणायामसहस्रमष्टशतं वा समायुक्तं रेचकपूरककुम्भकप्रकारैरुद्धातैरेकद्वित्रिविधमन्दमध्यमोत्तमैः क्रान्तिसुषुप्त्यादीनि सर्वे दिक्षु साकम्पनादन्यत्र यथाविधि श्रद्धयानलस्य यथाबलं प्राणायामं धारयेदिति ॥

इति श्रीवैखानसे मरीचिप्रोक्ते आहवनीयाग्निकुण्ड-
विधिर्नाम त्रयस्त्रिंशः पटलः ॥

## अथ चतुस्त्रिंशः पटलः ।

अथातो गुरुर्यजमानमणोरणीयानित्यभ्युक्ष्य सघृतं पयः पाययित्वा द्विजातिश्चेन्मन्त्रवद् गृहीत्वा वर्णावरे मन्त्राद्दते शिष्यं समाचरेत् । तेन शिष्यः पापान्मुच्यते । ऋत्विजांश्चाहूयाथावनीदमितमण्डलान्युपलिप्यास्त्वासनमित्यासनानि सदर्भयवानि निधाय तेष्वासीनान् ऋत्विजान् यजमानो देववत् स्मृत्वा पवित्रं वज्रसंयुक्तमग्निमीळ इति प्राशयित्वाचम्याचार्येण पूर्वेद्युरपराह्णे यथार्हं कर्म निर्जितं पश्चादधिवासनगतं देवेशमासाद्य शुद्धोदकैः संस्नाप्याभ्यर्च्य वस्त्रोत्तरीयाद्यैरलङ्कृत्य यानमारोप्य ग्राममालयं वा प्रदक्षिणीकृत्य यज्ञालयस्य पश्चिमेऽलङ्कृते देशे देवेशं बैल्वफलकोपरि प्राङ्मुखं देवं संस्थाप्य सम्यक् तत्काले मथिताग्निं समाहृत्य तस्यालाभे श्रोत्रियागारादाहृत्य तस्योत्तरे वास्तुहोमं हुत्वालयं संशोध्य पश्चाद् वैखानससूत्रोक्तविधिना गार्हपत्याग्निकुण्डे त्वाघारं हुत्वाघारान्ते तमग्निं वर्धयित्वाचार्येण तस्मादन्वाहार्येऽग्निकुण्डे जातवेदो भुवस्येत्यग्निं प्रणीयति । पश्चादाहवनीये अग्न आयाहीति मन्त्रेणाग्निं प्रणीय पश्चादावसथ्येऽग्निकुण्डे यत्ते योनिरित्यग्निं प्रणीय सभ्येऽग्निकुण्डे मयगृह्णमीत्यग्निं प्रणीय पौण्डरी-

काग्निकुण्डे घृतप्रतीकेत्यग्निं प्रणीयान्येषु सर्वहोमेषु जातवेदस इत्यग्निं प्रणीय पश्चाद् घारविशेषो वक्ष्यते । अग्निकुण्डानामूर्ध्ववेद्यामिन्द्रादि-दिग्देवानां तत्तत्स्थाने दक्षिणवेद्यधस्ताद् ब्रह्माणमुत्तरे सोमं चाभ्यर्च्य उत्तरप्रणिधावग्न्यादिदेवानावाह्यान्ते गार्हपत्ये गार्हपत्यं यज्ञदैवतं वि-श्वान् देवान् ॐ भूः पुरुषमच्युतमित्यावाह्यान्वाहार्ये यज्ञदैवतविश्वान् देवान् ॐ भुवः पुरुषं सत्यमित्याहवनीये चाहवनीयं यज्ञं दैवं विश्वान् देवान् ॐ सुवः पुरुषं पुरुषमित्यावसथ्ये चावसथ्यं यज्ञदैवतविश्वान् देवान् ॐ महः पुरुषमनिरुद्धमिति सभ्ये सभ्यं यज्ञदैवतविश्वान् देवान् ॐ जनः पुरुषं विष्णुमिति पौण्डरीके पौण्डरीकयज्ञं यज्ञदैवत्यं विश्वान् देवान् ॐ तपः पुरुषं वासुदेवमों सत्यं पुरुषं नारायणं चेत्यावाह्य पर्ष-दानां होमे चौपासनाग्निं यज्ञदैवतविश्वान् देवानावाहयामीत्यावाह्य तथै-वाज्यं निरुप्याज्याहुतीर्हुत्वा सर्वहोमानामतोदेवादिर्वैष्णवं यजित्वा, एवमाघारं हुत्वाघारान्ते पक्वहोमात् पूर्वं तासामन्तरं न च व्रजेत् । अध्वर्यूणामभावे चैकाध्वर्युश्चेत् प्रासावीरित्यन्तःप्रवाहणं कृत्वा पुनः परिस्तीर्य होममाचरेत् । अस्य प्रायश्चित्तं वैष्णवं यजेयुः । कुम्भपूजां समाचरेत् ॥

द्वात्रिंशत्प्रस्थसम्पूर्णं सौवर्णं राजतं ताम्रं मृण्मयं वा कुम्भं सङ्गृह्य मृण्मयं चेत् खण्डस्फुटितकालरहितं पक्वबिम्बफलाकारं सम्यग् दग्धं नवं कुम्भं समादाय यज्ञालये वायव्ये सम्भारस्थाने प्राङ्मुख-मास्थाय इषेत्वोर्जेत्वादिना जपन् त्रिवृतेनैकसूत्रेण वा यवान्तरमङ्गुल्य-न्तरं वा तन्तुनावेष्टय शुची वो हव्येति प्रक्षाल्य नादेयं जलं देवा ग्राह्य इदिदमापः शिवा इति वस्त्रेणोत्पवनं कृत्वा धारास्त्विति कुम्भं जले-नापूर्य, उशीरादिगन्धैर्वासयित्वा दुकूलाभ्यां क्षौमाभ्यां सूक्ष्मकार्पास-वस्त्राभ्यां कुम्भं संवेष्ट्य तस्मिन् कुशकूर्चाक्षताश्वत्थपल्लवानि विन्यस्य पद्मरागवज्रवैडूर्यमौक्तिकमरतकपुष्यरागचन्द्रकान्तगोमेदकनीलान्येता-नि नवरत्नानि रत्नाभावेऽप्येकं सुवर्णं वा श्रीवत्सपूर्णकुम्भभेर्यादिदर्श-मत्स्ययुग्माङ्कुशशङ्खावर्तोष्टमङ्गलान् चक्रशङ्खगदाशार्ङ्गासीत्येतान् गरुडं कूर्मरूपं च सुवर्णचिह्नान् स्रुक्स्रुवकमण्डलुजुहूपभृच्छत्रचामराङ्कुशध्वज-तुलादियुगलाङ्गलांश्च मेघं विद्युल्लतां चैतेषां सुवर्णेनैकाङ्गुलादहीनं कृ-त्वालाभे सुवर्णशकलानि वा तत्तद्रूपं ध्यात्वा पृथक् पृथग् विष्णु-

गायत्र्या प्रक्षिप्य देवाग्रे धान्यराशौ कुम्भं संन्यस्य धान्यराशिं च त्रिविधं भवति । षड्द्रोणमुत्तमम् । द्रोणत्रयं मध्यमम् । द्रोणमधमं चेति । बालागारश्चेत् तत्तद्देवमाराध्य हविर्निवेद्याचार्यस्तस्य दक्षिणे चोत्तराभिमुखो भूत्वा ब्राह्ममासनमास्थाय विष्णुर्मा पात्वित्यात्मरक्षां कृत्वात्मसूक्तं जप्त्वा समाहितो ध्यानमारभेत् ॥

स्वस्तिकासनं कुर्याद् दक्षिणपादमूर्ध्वं वामपादमधश्च जान्वन्तरेऽङ्गुष्ठौ निगूह्य शिश्नवृषणौ निपीडजं निवातगतदीपवद् ऋजुकायः किञ्चिदुन्नमितवक्त्रो दन्तैर्दन्तान् न संस्पृशन् नासाग्रन्यस्तेक्षणश्चैवमासीनो यथाबलं प्राणायामं कृत्वा त्रिविधं प्राणायामं रेचकपूरककुम्भकेति । निःश्वासविसर्जनो रेचको, निःश्वासोद्ध्मानः पूरको, निःश्वासनिरोधः कुम्भकश्चेति । एवं प्राणायामं योगमार्गेण कृत्वा हृदये बीजाक्षरं न्यस्य प्रणवेन वेष्टयित्वा कुम्भजलेऽर्धचन्द्राकारं शुद्धस्फटिकसङ्काशं मध्येऽष्टदलोपेतं तन्मध्ये श्यामवर्णं द्विभुजं पद्महस्तमोङ्कारबीजान्वितभ............मण्डलं ध्यात्वा तन्मध्ये तन्मण्डलं तन्मध्ये पद्मे सितेपलवर्णं द्विभुजं पद्मधरं वकारबीजयुतं वारुणमण्डलं ध्यात्वा तन्मध्ये तप्तहाटकसङ्काशं चतुर्भुजं शङ्खचक्रधरादिबीजं संन्यस्य दिक्ष्वष्टासु प्रणवैरावृतं संन्यस्य सर्वानेकप्रणवेन वेष्टयेत् । विष्णुसूक्तं प्रणवशतं सहस्रशीर्षमिति जप्त्वा ज्ञानयोगमार्गेण ध्यानमाचरेत् । सर्वाधारं सनातनमप्रमेयमचिन्त्यं निर्गुणं निष्कलं क्षीरे सर्पिस्तिले तैलं पुष्पे गन्धं फले रसं काष्ठेऽग्निमिव च सर्वव्यापिनं परमात्मानं सकलं सङ्कल्प्य मन्त्रयोगादिपञ्चप्रकारैश्च प्रणामादिपञ्चसत्कारैश्चावाहयेत् । कुतः । आवाहनोद्वासनं विष्णोरायतमिति अरण्यां व्यापिते वह्निमथनात् सन्निधिर्भवति । तथैव ध्यानमथनेन भक्तस्य हृदि विष्णुसान्निधिर्भवति । हृदये सकलं सङ्कल्प्य सुवर्णवर्णं रक्तास्यनेत्रपाणिपादं सुखोद्वहं शुकपिञ्छाम्बरधरं विष्णुं प्रणवात्मकं किरीटकेयूरहारप्रलम्बयज्ञोपवीतिनं श्रीवत्साङ्कं चतुर्भुजमेवं परमात्मानं पञ्चवहभेदेन परात्परतरं देवं वैकुण्ठादिदिव्यलोकाद् देवादिसपर्षदं ध्यात्वा मनसा शङ्खजलाद् वा कुम्भेऽम्भसि समावाह्य पुष्पाद्यर्घ्याचमनान्तैरर्चयति । तस्माद् देवं कुम्भं सहादाय सर्वालङ्कारसंयुक्तं शकुनसूक्तं समुच्चार्य यज्ञालये स्नपनश्वभ्रे देवं प्रतिष्ठाप्य दक्षिणे धान्यराशौ कुम्भं संन्यस्य दक्षिणे

श्रियं वामे हरिणीं संस्थाप्य पुनस्तान् व्रीहिभिस्तण्डुलैर्वा दण्डवत् पङ्क्तिं कृत्वा दक्षिणाद्युत्तरान्तं देवीभ्यां च पृथक् पृथक् पङ्क्तिं कृत्वा तस्मिन् क्षीरघृतमधुसिद्धार्थकोदकाक्षतोदककुशोदकचन्दनोदकसम्पूर्णान् कलशान् उत्तरादि संन्यस्यान्तरे चैकैकमुपस्नानशुद्धोदककलशान् विन्यस्य क्षीरे सर्ववेदमुपस्नानेऽश्विनौ घृते सामवेदमुपस्नाने वत्सरान् मधुनि यजुर्वेदमुपस्नाने वायुं सर्षपोदके आदित्यमुपस्नानेऽप्सरसोऽक्षतोदके काश्यपमुपस्नाने मरुतः कुशोदके मुनयस्तक्षकमुपस्नाने चन्दनोदके ऋतूनुपस्नाने बृहस्पतिं चैकादशोपचारैरभ्यर्च्याथवा जलपुष्पैरेवार्चयेत् । देवेशं चन्द्रद्रव्यं प्रति पाद्याद्यैरर्चयेत् ॥

शन्नो देवीरिति क्षीरेण, अग्न आयाहीति घृतेन, अग्निमीळेति मधुना, पूतस्तस्येति सर्षपोदकेन, इमा ओषधय इत्यक्षतोदकेन, हित्वा शूर इति कुशोदकेन, चत्वारि शृङ्ग इति गन्धोदकेन च स्नाप्य वारीश्चतस्र इति सर्वोपस्नानैः संस्नापयेत् । द्रव्यं प्रति पूर्वं कुम्भं समभ्युक्ष्यापोहिष्ठामयादिभिरुष्णोदकेन च संस्नाप्य शुद्धोदकैश्चाभिषिच्य प्लोतेन विमृज्य नववस्त्रोत्तरीयाद्यैरलङ्कृत्य नैर्ऋते विष्टरे देवं देवीभ्यां सह कुम्भं संस्नाप्य स्नपनोत्सवबेराणां स्थापनं पृथगेवाष्टोपचारैः कुम्भेन सहार्चयेदाचार्यः स्थापकाद्यैः सहितः पुण्याहं वाचयित्वा सौवर्णे राजते ताम्रे कांस्ये वा पात्रे द्रोणैर्द्रोणार्धैराढकैर्वा तण्डुलैः प्रत्येकमापूर्य तस्मिन् प्रतिसरान् सौवर्णान् विन्यस्यालाभे क्षौमकार्पासतन्तुना वा कृणुष्व पाज इति शक्रसूक्तेन वाभिमृश्य स्वस्तिदा विशस्पतिरिति देवदेवस्य दक्षिणे हस्ते देव्योस्तत्तन्मन्त्रेण वामे करे बध्नीयात् । तथैव स्नपनोत्सवबलिबेराणां च प्रतिसरान् पृथगेव बध्नीयात् । ध्रुवबेरेऽपि पूर्वं प्रतिसरं बद्ध्वा शय्यावेद्यां समभ्युक्ष्य षड्द्रोणादहीनैः शालिधान्यैस्तदर्धयवैस्तिलैः परिस्तीर्य साग्रान् कुशान् प्रागग्रानास्तीर्य वेदाहमिति चर्मजं तल्पं प्रथमं विन्यस्य द्वितीयं रोमजं तृतीयं मुण्डजं चतुर्थमण्डजं पञ्चमं वामजं क्रमेणोपरि विन्यस्योपरिवेष्टनं श्वेतं नववस्त्रेण कृत्वोपधानद्वयं शिरोपधानं विन्यस्य चर्मजं सिंहव्याघ्रादि,

रोमजमाविकरोमजकृतं मुण्डजं कार्पासशम्यादिफलतूलकृतमण्डजं पक्षिपिञ्छेन कृतं, वामजं क्षौमादि सर्वालाभे यथालाभं चाहृत्यान्येषां प्रतिनिधिं द्वादशाष्टसप्तहस्तादहीनं नववस्त्रमाहरेत् । तथोपवेष्टनमुपायनमुपधानद्वयं च सङ्कल्प्य प्रणवेनाभ्युक्ष्य तुलस्यादिगन्धपुष्पाण्यवकीर्यागरुधूपैः सहाष्टमङ्गलैः पञ्चायुधैश्च परितो विन्यस्य तस्योर्ध्वे वितानध्वजदर्भमालास्तम्भवेष्टनमुक्तादामाद्यैरलङ्कृत्य सर्ववाद्यसमायुक्तं शकुनसूक्तं वदन् आचार्यः स्थापकैः सार्धं देवेशं याने समारोप्य यद्वैष्णवमिति देवं देवीभ्यां तत्तत्सहैकशयने शाययेद्, यद्दिग्द्वारं विमानस्य तद्दिङ्मौलिं कृत्वोत्तराच्छादनं गलाधस्तादाच्छाद्य देवस्य दक्षिणे पूर्ववत् कुम्भं संन्यस्य स्नपनोत्सवबलिबेराणां चैकवेद्यां प्रत्येकं शयनं सङ्कल्प्य तथैव शाययेत् । तस्यैव परितः प्रावरणं कृत्वा सम्भारवेद्यां धान्योपरि वस्त्राणि चास्तीर्य सौवर्णादिपात्रे रत्नादीनि संन्यस्य तस्मिन् रत्नेशं विष्णुमभ्यर्च्य विष्णुसूक्तेनाधिवासनं कृत्वा उत्तराच्छादनं निश्छिद्रं कृत्वा पश्चाद् यज्ञागारस्य परितः प्रागादिचतुर्दिक्षु चतुर्वेदान् क्रमेणाध्ययनं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रतिष्ठाविधिर्नाम चतुस्त्रिंशः पटलः ॥

## अथ पञ्चत्रिंशः पटलः ।

एवं कृत्वा पश्चात् सर्वेषां परिवाराणामालयस्य परितो होममाचरेत् । अथवा श्रीभूमिभ्यां ब्रह्मेशाभ्यां भृगुमार्कण्डेयाभ्यां वीशशैषिकाभ्यां सह प्रत्येकं होममधमं, विमानपालानामिन्द्रादिलोकपालानामादित्यचन्द्रयोश्च होमं मध्यमं, द्वारपालानां चक्रध्वजशङ्खमहाभूतपाकोर्जुनानां होममुत्तममित्येके । महावेद्यां यागशालां च परितः सर्वान् देवान् समभ्यर्च्य महावेद्युपरिष्टात् प्रागादिचतुर्दिक्षु ध्रुवकौतुकयोरावरणत्रयदेवान् दर्भालयाधिपान्तान्, तद्दक्षिणे ब्रह्माणं मार्कण्डेयमुत्तरे शङ्करं ख्यातीशं द्वारेषु धात्रादीन् द्वारपालांश्च विमानपालादिसर्वान्

देवान् प्रथमाद्यावरणक्रमेण तत्तद्दिक्षु समाराध्याभ्यर्च्यैन्द्रे यक्षं श्रियं हविःपालमग्निं भौमं जगद्भुवं विवस्वन्तं यमं दुर्गां सप्तमातॄर्नीलं च महाकालीं विष्णुं वरुणं मित्रं बुधं ज्येष्ठां पुष्पेशं वायुं शुक्रं सप्तर्षीन् गङ्गां धन्यं क्षत्तारं निशाकरं पञ्चभूतानि शान्तमीशानं बलरक्षकं वाग्देवीमेवं पूर्वादितत्तत्प्रदक्षिणमुखे श्रीभूतगरुडं चक्रध्वजशङ्खयूथाधिपविष्णुभूतानां यथाक्रमेण तत्तन्नाम्नार्चयेदिति केचित् । प्रभूतबलिमाहृत्य बलिनिर्वापं कारयेत् ॥

पश्चाद्धोमं हूय वस्त्रोत्तरीयाभरणैरभिपूज्य स होता तिष्ठेत् । तस्मादध्वर्युरग्निं प्रज्वाल्याध्वर्युर्होतरेहीति वदेत् । स होताध्वर्यो देवतेत्युक्त्वा यजमानस्य हौत्रमाचम्य प्रणवपूर्वं नमः प्रवक्त्रेति वदन् तिष्ठन् उच्चरन् वैखानससूत्रोक्तविधिना हौत्रं प्रशंसेत् । होता तेनोक्तमोङ्कारं श्रुत्वाध्वर्युः सप्तदशपलाशेध्मान् सपत्रकमुकुलान् नीत्वा ॐ स्वाहेति क्षिपेत् । ब्राह्मणभारतेत्युक्त्वा यजमानस्य गोत्रप्रवरं क्रमेण वदेत् । ग्रामयजमानश्चेत् काश्यपप्रवर आयात्वित्यादिमन्त्रान्ते विष्ण्वादिसर्वदेवार्चनोक्तक्रमेण महाभूतान्तमावाहयामीत्युक्त्वा तथैव सभ्याध्वर्युरादित्यादिमूर्त्यादिशर्वान्तं दक्षिणप्रणिधौ धात्रादिमहाभूतान्तमुत्तरप्रणिधौ समावाह्यायानक्रमेण जुष्टाकारं कर्म हुत्वा तत्तन्मन्त्रेणाज्याहुतीर्जुहोति । सभ्याग्निं परिस्तीर्य पलाशेध्मान् गृहीत्वा मूलाग्राभ्यां घृताक्तां देवं ध्यायन् विष्णुगायत्र्या जुहोतीत्यग्निहोत्रहवणीमाज्यं गृहीत्वातो देवादिना हुत्वा पश्चादुपभृतेनाज्यमादाय विष्णुसूक्तं जुहुयात् । जुह्वां पर्कं समादाय वैष्णवं षोडशद्वादशपर्यायतो जुहोति । स्रुवेणाज्यमादाय पञ्चवारुणं मूलहोमं यद्देवादिकूश्माण्डं सकृद्धुत्वा पश्चात् स्वस्ति वैवेह स्वाहा प्रजापतये स्वाहा स्वाहाग्निद्धीमतये स्वाहादित्येभ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मरुद्गणेभ्यः स्वाहा भूरग्नये स्वाहा भुवो वायवे स्वाहा सुवरादित्याय च भूर्भुवः स्वश्चन्द्रमसे च स्वाहेत्येतैर्मन्त्रैर्दशभिः शतशो जुहुयात् । एताः सहस्राहुतीरुपांशुराज्येन वैष्णवं विष्णुसूक्तं देवेशाय ध्रुवकौतुकयोश्च पुरुषाद्यावरणत्रयदेवानां वैष्णवानां तत्तन्मन्त्रेण जुहुयात् । श्रिये जात हिरण्यवर्णा इति श्रियै मेदिनी देवीति भूमिर्भूम्नेति मह्यै ब्रह्मजज्ञानं हिरण्यगर्भ इति ब्रह्मणे रुमन्यं त्र्यम्बकमिति रुद्राय चिरायुषाय पुण्यायेति मार्कण्डेयाय पद्मापित्रे भृगवे इति

भृगवे, द्यावापृथिव्यो यस्याश्रिता तस्थुषो धृत्याय एष विभो वितन्य विश्वं यो नोऽभिरक्षत्विति षड्भिश्च वारदैवत्यमिति मणिकायेति मणिकाय सन्ध्यायेति सन्ध्यायै तापसायेति तापसाय वैखानसायेति विखनसाय किष्किन्धायेति किष्किन्धाय तीर्थायेति तीर्थाय त्रातारमित्यादि त्रयोदशाग्निं मूर्धायमग्निमिन्निर्ऋतिद्वावग्नये यमो दाधार नमस्ते द्वौ याम्यौ वसवः प्रथमः सहस्राक्षेति निर्ऋतयैते शतमित्यादि चत्वारो वरुणाय मरुतः परमात्मा मरुतो गणानामिति द्वौ वायवे मिश्रबासस एतान् घ्नतैतानिति द्वौ कौबेराय ईशान ईशेति द्वावीशानाय उदुत्यं चित्रमिति द्वावादित्याय ममाग्नेऽहमग्न आयाहीति त्रीन् भौमाय प्रभुर्देवो ग्रहाधिपतयेति द्वौ शनैश्चराय बृहस्पतिर्देवानां बृहस्पतिः सोमो बृहस्पते अतियदित्युपयामगृहीतेति चत्वारो बृहस्पतये श्रविष्ठजाय तद्विष्णोस्तद्विप्रास इति बुधाय प्रजापते न त्वत् सुभूः स्वयम्भूरिति द्वौ शुक्राय भूमामिनीष्टगामिनीति द्वौ शङ्काय सोमपास्ते याते रुद्रमन्थं त्र्यम्बकमिति रुद्राय जगद्भुवमिति षट् कुमारस्य यतः स्वमसीत्तस्मा अस्म असमा इति भृगवे कस्याङ्गिरा भूविस्मापयेन व्यावर्धतेति पुलहाय एषो दान आनन्दर इति पुलस्त्याय प्रप्रायशे ये निष्यन्ता इति ऋतवे येनो वसिष्ठः सप्तोत्तमाय इति वसिष्ठाय ययानस्तूयेशाय एष दिग्भ्य इत्यत्रये एकोऽभूद् यत्रैष्टुभस्येत्याकाशाय प्रकाम्यायो मातरिश्वेति वायवे वृषाकपेरोजोऽभिमानीत्यग्नये आपो विश्वं चातुर्यमित्यपां तया आदित्या तन्त्रीण्येपेति पृथिव्यै, पावका नो महोर्ण इति सरस्वत्यै, शंसानि हूयाम इति श्रियै, य उत्तमोऽग्नेः पथायमिति न्यक्षाय, यमर्पयन्ति यः संहरतीति विवस्वते, ऋचामधीशो नीतं धृतमिति मित्राय, नेनापुष्टे समूह्यत इति महीधराय, चरूं पचे चुल्यां हीति हविरक्षकाय, चतुर्मुखीया लोक इति ब्रह्माण्यै, त्रैनेतत्र चिह्नीति गणेश्वर्योज्वालामालाबालेति षण्मुख्यै युगे युगे सर्वे रमेति वैष्णव्यै, कल्पेष्वन्तेषु वाराह्यै, सा सर्वमालधरीतीन्द्राण्यै, चण्डी हरी मोहीति काल्यै, धातास्य फुल्लायेति पुष्परक्षकाय, विश्वान् बले सौर्यो हुत इति बलिरक्षकाय, आग्नेयो प्रेक्षायेति विष्वक्सेनाय शतधारं कदा विसृज इति गरुडाय, धर्मोघ गोगन्धरमिति विघ्नाय, यमर्पयन्ति शं नो निधत्तामित्यनन्ताय

भूपाववोऽग्रेऽवस्थान इति सुदर्शनाय, आसेऽग्र ओजोबलायेति ध्वजाय, तन्मायशोऽग्रे आसे अग्रे स्वादुपस्येति शङ्खाय, भूतानां भूतो भूतेष्विति महाभूताय, अक्षहान्ते येहूतेति पाकार्जुनाय, हुत्वा व्याहृतीर्जुहोति। तत्तन्मन्त्रं वैष्णवं जुहुयात्। अग्निं परिषिच्य पूर्वं वैष्णवं हुत्वा आवसथ्यैकाक्षरादिसूक्तं कौबेर ईशान्य आहवनीये पुरुषसूक्तं मार्कण्डेयभृगुभ्यामैन्द्रमाग्नेयं हुत्वा, अन्वाहार्ये विष्णुसूक्तं ब्राह्ममाग्नेयं नैर्ऋत्यं यजेत्। गार्हपत्ये वैष्णवं श्रिये जातो मेदिनी देवीति वारुणं वायव्यं हुत्वा, आवसथ्ये चैकाक्षरादिसूक्तं कौबेरमीशानदैवत्यं द्वादशाष्टचत्वारो वा पर्यायतो जुहोति। सकृज्जयादींश्च हुत्वा, पौण्डरीकाग्निं परिषिच्य पौण्डरीकोत्पत्तिं ज्ञातमध्वर्यून् वरयित्वा, विष्णुगायत्र्याब्जशतं बिल्वपत्रं वा घृताक्तं जुहुयात्। आत्मसूक्तं ब्राह्मं विष्णुः सर्वेषामित्यादिपरमात्मिकमन्त्रैश्च पञ्चशतैर्मन्त्रैर्हुत्वा, अतो देवादिवैष्णवं यद्देवादिकूश्माण्डमन्तहोमं हुत्वा सर्वेषां परिवाराणां तत्तन्मन्त्रं सवैष्णवं द्वादशाष्टचत्वारो वा जुहोति। विष्णुसूक्तेन पञ्चाग्निषु दधिक्षीरघृतलाजैर्युक्तमपूपजुह्वा हुत्वा गार्हपत्यसभ्यपौण्डरीकं विना सर्वाग्नीनन्तहोमं हुत्वाग्निं विसृज्य नृत्तगेयाद्यैश्च रात्रिशेषं व्यपोहयेत्॥

इति श्रीवैखानसे मरीचिप्रोक्ते परिवाराणां
होमविधिर्नाम पञ्चत्रिंशः पटलः॥

## अथ षट्त्रिंशः पटलः।

अथ देव्योर्वैवाहिकविधिः। देवेशदेव्यौ श्वसनाबिम्बप्रतिष्ठानन्तरे विवाहक्रियां कारयेत्। यजमानो द्विजश्चेत्, गृहे देवालये वा यागशालां कृत्वा यथाविभवमलंकृत्य तन्मध्ये दक्षिणे श्रीदेव्या वामे महीदेव्याश्चौपासनाग्निकुण्डं स्थण्डिलं वा कारयित्वा द्वयोरेकैकं वा कारयेदिति केचित्। शुभे मुहूर्ते समनुप्राप्ते पूर्ववद् देवीमानीय सुखासनसंस्थितामर्चयित्वा फलोपहारं ताम्बूलादि निवेद्याचार्यः परिचारकैः सह देवेशमलङ्कृत्य यानमारोप्य शङ्खभेरीनादादीन् नृत्तगेय-

स्तोत्रध्वनिस्वस्तिघोषसमायुक्तं देवीमानीय यागशालां प्रविश्याग्नि-कुण्डस्य पश्चिमे महासंस्तारपर्यङ्कोपरि देवं प्राङ्मुखं संस्थाप्य राजवदु-पचारं च कृत्वा यजमानो बान्धवैः सह देवेशं प्रणम्याचार्यं पूजयि-त्वाचार्यो देवं पाद्याद्यर्घ्यान्तं मधुपर्कं निवेद्य वैखानससूत्रोक्तविधिना विवाहक्रियां कारयेत् । आचार्यश्चात्मसूक्तं जप्त्वा देवं ध्यायन्नेकाक्ष-रादि विष्णुसूक्तं पुरुषसूक्तं वैष्णवं च जपेत् । देवेशं प्रणम्य प्रसुम्न-न्तेति देवेशो देवीमीक्षेत । आचार्येणाघारं हुत्वा कन्याप्रदानसमये देवीं देवसन्निधावानीय श्रियः प्रदानसमये यजमानः स्वात्मानं भृगुं स्मृत्वा मूलप्रकृतिरूपामयोनिजां कल्पनां भृगुपुत्रीं भार्गवीं श्रियं विष्णवे तुभ्यं ददामीति दद्यात् । प्रजापतिस्त्रियामिति चोक्त्वा सुवर्णगोभूमियुतं जलं दद्यात् । धरण्याः प्रदानसमये यजमानः स्वा-त्मानं प्रजापतिं स्मृत्वा विष्णो पुराणमहिषीं प्रकृत्यंशभूतां कश्यप-प्रजापतिं सङ्कल्प्य तनयां काश्यपीं हरिणीं विष्णवे तुभ्यं ददामीति पूर्ववद् दत्त्वा प्रादुर्भावेषु सर्वेषु तत्तद्देवीपितरं सञ्चिन्त्य तत्तन्नाम्ना दद्यात् । यजमानः शूद्रश्चेत्, तन्नियोगेन द्विज एव कुर्यात् ॥

एवं जलप्रदाने कृते देवस्य दक्षिणवामयोर्देव्यौ संस्थाप्य नव-वस्त्राभरणगन्धमाल्यैरलङ्कृत्य विवाहविषये मन्त्राणि लाजहोमाग्नि प्रदक्षिणकर्म देवं देवीभ्यां सन्निधावाचार्य एवाचरेत् । पाणिग्रहणमन्त्र-मुच्चरन् दर्भेण पाणौ स्पर्शने देव्योर्दक्षिणपादाङ्गुष्ठेऽश्म संस्पृश्य सप्त-पदाक्रान्तौ देवस्याभिमुखे वस्त्रे चोत्तराग्रं दर्भानास्तीर्य यथाक्रमेण संस्पृशति । स्तोमारोपणे वैष्णवैर्देवस्य देव्यास्तत्तन्मन्त्रेण च पादयोः प्रक्षिपेत् । एककाले द्वे देव्यौ विवाहक्रियां चेद् एकाग्नौ पृथगेव वा-गिति केचित् । अत्र ध्रुवसन्दर्शनादीनाचरेदाचार्यः । ऋत्विजादिभ्यो दक्षिणां दद्यात् । वैष्णवान् सम्पूज्य सर्वेषामपि गन्धपुष्पमुखवासा-दीन् प्रदीयते । पुण्याहं वाचयित्वान्तहोमो हूयते । अग्निं नित्याग्नौ समारोप्य प्रभूतं हविर्निवेद्य पूर्वादीनि निवेदयेत् । यानमारोप्य ग्राम-मालयं सर्वालङ्कारसंयुक्तं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य देवं देव्या सह शुद्धस्नपनविधिना संस्नाप्यार्चापीठे स्थाप्याभ्यर्च्य हविर्निवेद्य प्रणामं कारयेत् ॥

एवं हरेर्वैवाहिकोत्सवे कृते सर्वसम्पत्करं सर्वकल्याणसमृद्धिर्भवति। तत्तद्ग्रामे वासिन्यः स्त्रियः पुत्रमङ्गल्यसंयुक्ता भविष्यन्ति। इष्टान् कामानवाप्नोति विष्णोः सायुज्यमाप्नुयात्। स्नपनं बिम्बं बलिबेरं च देवीभ्यां सहितं रहितं वा कारयेत्। कौतुकादिबेराणामक्षिरेखाद्यतिजीर्णे वृद्धेऽङ्गविहीने चोराद्यपहृते च तद्वदन्यत् पुनर्बिम्बं कृतं चेत् तद्बिम्बं संस्थाप्य देव्या विवाहक्रियां नाचरेत्। अर्चाहीने प्रायश्चित्तं कृत्वा सहार्चयेत्। देव्योः पुनर्बिम्बं कृतं चेत् प्रतिष्ठाप्य विवाहक्रियां कारयेत्। देवेशं योगमार्गेण वा ध्रुवबेरं यत्रैव पूर्ववत् प्रतिष्ठाप्यार्चने कृते पश्चाद् देवीयुतं न स्थापयेदिति विज्ञायते॥

अथ स्नपनोत्सवबलिबेराणां पृथक् प्रतिष्ठाविधिं वक्ष्ये। पूर्वोक्तेन विधानेन बिम्बं सलक्षणं कृत्वा यथोक्ततिथिवारनक्षत्रे तद्दिनात् पूर्वमङ्कुरानर्पयित्वा सम्भारान् सम्भृत्यालयाभिमुखे दक्षिणे वा यागशालां पूर्ववत् कृत्वालङ्कृत्य त्रयाणां बिम्बानां सहप्रतिष्ठा चेत् सहैवाक्षिमोचनं कारयित्वा प्रत्येकं गवादीन् दर्शनद्रव्यं दर्शयित्वा पृथक् पृथग् यथोक्तमधिवासं बेरशुद्धिं कृत्वा त्रयाणां देवानां सहैककुम्भं पञ्चाग्निं पौण्डरीकाग्निकुण्डञ्च कृत्वा प्रत्येकं कलशैः संस्नाप्य शय्यावेद्यां तथैवैकस्यां धान्योपरि प्रत्येकमण्डजादीनि पञ्च शयनानि वासांसि वास्तीर्य प्रतिसरान् बध्वा तथैव शाययित्वा सभ्याग्नौ होत्रं प्रशंस्य सर्वहोमानां पूर्ववत्कृत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वालयमाविश्य देवानुपस्थाप्याभ्यर्च्याभ्यन्तरं प्रविश्य कृते पीठे पूर्ववद् रत्नन्यासं कुर्यादिति केचित्। अग्निं विसृज्याचार्यादिभ्यो दक्षिणां दत्वाचार्यः कुम्भं शिरसा धारयन् अग्रतो गच्छेत्। स्थापका देवमादायालयं प्रविश्य ध्रुवस्य दक्षिणे कुम्भं संन्यस्य देवांस्तत्तत्स्थाने पूर्ववत् प्रतिष्ठाप्य कुम्भस्थां शक्तिमादाय पूर्ववद् ध्रुवबेरे समावाह्य शुद्धोदकैः संस्नाप्य प्रतिसरान् विसृज्य पुनरन्यैर्भूष्यालङ्कृत्य पाद्याद्यैरभ्यर्च्य गर्भागारं प्रविश्यार्चापीठे कृते पञ्चविंशतिभागं कृत्वा विवासितान् रत्नादीनादाय तस्मिन् ब्रह्माणमिन्द्रादिदिग्देवानां चाभ्यर्च्य पुष्पादीन् संशोध्य तमेकनेमीत्युक्त्वा ब्रह्मस्थाने प्रतिष्ठाप्य शतधारमिति गारु? अस्मिन् ब्रह्मा देवानामिति ब्रह्माणमिन्द्रं प्राग-

न्तमित्यैन्द्रे वज्रमग्नामग्निरित्याग्नेय्यां मौक्तिकं यमो दाधार इति याम्ये वैडूर्यं वसवः प्रथम इति नैर्ऋते शङ्खजम् एते शतमिति वारुण्यां स्फाटिकं मरुतः परशात्मेति वायव्ये पुष्यकान्तं सोमं राजानमिति सौम्ये चन्द्रकान्तं ईशानायेति चैशान्यां नीलमिन्द्राग्न्योरन्तरे शंनो निधत्तामित्यमृताश्मकं धाता धातृणामिति यमाग्न्योरन्तरे लोहिताक्षकं यमनीलयोर्विश्वेदेवस्येत्युत्पलमणिं नीलवारुणयोरन्तरेऽधिब्रह्मयतेति प्रवालं वायव्यान्तरे इमं मूर्धन्या इति मनःशिलां वायुसोमयोर्मध्येऽप्सरस्स्विति शुक्तिजं सोमेशानयोरन्तरे यं काद्रवेया इति विमलमणिमीशानेन्द्रयोर्मध्येऽर्यमणं कुम्भीति कुविन्दं संन्यस्याभ्यन्तरे पदे चेन्द्रादीनां दिक्षु गैरिकहरितालमनःशिलाञ्जनकासीसपारदसौराष्ट्रं गोरोचनां तत्तदीशमन्त्रेणासङ्करं विन्यस्य तथा शालिव्रीहियवनीवारषष्टिकमाषमुद्गयवतिलानां सुवर्णेन कृत्वा श्रीयवं समङ्गलांश्च विन्यस्य पञ्चायुधामध्यमादिचतुर्दिक्षु विन्यस्य मध्ये ब्रह्मपदे सौवर्णानि वर्णचिह्नानि कूर्मरूपं मेघं विद्युल्लतां च विन्यसेत् । एवं कर्तुमशक्तश्चेन्नवरत्नान्यष्टमङ्गलपञ्चायुधवर्णचिह्नानि संन्यस्य तच्छ्वभ्रं दुकूलेनाच्छाद्य सुधया पूरयित्वा दृढीकृत्य विष्णुस्त्वां रक्ष इत्यभ्युक्ष्य पौण्डरीकाग्निं विसृज्य गर्भालयं संशोध्यालिप्य पैष्ट्या भूमिमलङ्कृत्योपरिष्टात् सपताकवितानमुक्तादामपुष्पदामाद्यैरलङ्कृत्य तस्याधस्तात् कुसुमाक्षतैरवकीर्यागरुकर्पूरानुद्दीप्य तद्द्वारपार्श्वे दीपाङ्कुरोदकुम्भाद्यैरलङ्कृत्य यज्ञशालामागत्य देवेशं प्रणम्य यजमानो गुरुमभिवन्द्यानुज्ञाप्य वस्त्रोत्तरीयोष्णीषाभरणगन्धमाल्यानुलेपनैरभिपूज्य सोदकं देवसन्निधौ सुवर्णं दद्यात् । राजा चेच्चतुःषष्टिनिष्कं गुरवे ग्रामश्चेदष्टचत्वारिंशन्निष्कमितरेषामाढ्यानामेकविंशतिनिष्कं दद्यात् । अन्येषामशक्तानां दक्षिणाविधानं नवधोच्यते । पादाधिकं नवनिष्कमुत्तमोत्तमम् । तथाष्टनिष्कमुत्तममध्यमम् । तथा सप्तनिष्कमुत्तमाधमम् । पादाधिकषण्णिष्कं मध्यमोत्तमम् । तथा पञ्चनिष्कं मध्यममध्यमम् । पादाधिकनिष्कचतुष्टयं मध्यमाधमम् । पादाधिकनिष्कत्रयं मध्यमोत्तमम् । निष्कद्वयमधममध्यमम् । पादाधिकमेकनिष्कमधमाधममिति तस्माच्छक्तौ न वञ्चयेत् । अज्ञानादर्थलोभाद् वा शक्तिवञ्चनं

कृत्वा तेषां पदार्थिनामेव तत्फलं समवाप्नुयात् । यजमानो रौरवं याति स्थापकानां सभ्याध्वर्यवे होत्रे च पौण्डरीकाध्वर्यवे चैकैकमाचार्यदक्षिणा चतुर्थांशं तदर्धमाहवनीयाध्वर्यूणां तदर्धम् । स्नपनाद्यन्यत्पदार्थिनां मन्त्रहीनेन सर्वेषां हानिर्भवति । तस्माच्छास्त्रं संलक्ष्य यथाविधि समाचरेत् ॥

अथाध्वर्युः सभ्याग्निं परिस्तीर्य वैष्णवं व्याहृत्यन्तं च हुत्वा स्विष्टकृतादि पूर्णाहुतीपरिस्तरणान्तं हुत्वालयाद् दक्षिणे प्रथमावरणे महानसे नैर्ऋते वा पूर्ववत् सभ्याग्निकुण्डं कृत्वा प्रोक्षणोल्लेखनादिकं कुर्यात् । तमग्निं नित्यहोमार्थं निधाय पश्चाद् दैवज्ञमभिपूज्य ततो मुहूर्ते समनुप्राप्ते देवेशं प्रणम्य भूः प्रपद्येति कुसुमाञ्जलिं दत्वा ततादिवाद्यघोषैराघोष्य वितानध्वजच्छत्रैः पिञ्छैश्चामरैर्हेमादिच्छत्रैर्धूपदीपैरष्टमङ्गलैः पञ्चायुधैर्भक्तैश्च परिवृतो नृत्तगेयसंयुक्तं शकुनसूक्तं समुच्चार्य तोयधारापुरःसरमाचार्यः शिरसा कुम्भं धारयन्नग्रतो गच्छेत् । ततोऽनु स्थापका देवमादाय पार्श्वयोरुभयोर्देव्यौ स्नपनोत्सवबलिबेराणां क्रमेणालयं प्रदक्षिणं कृत्वा भक्तैर्विद्वद्भिर्ब्राह्मणैः सपत्नीभिर्दीपाङ्कुरोदकुम्भैः प्रस्थानं कृत्वालयमाविश्य ध्रुवबेरदक्षिणे धान्यपीठे कुम्भं संन्यस्य स्थापकाः प्रतद्विष्णुरिति कौतुकं ब्रह्मस्थाने प्रतिष्ठाप्य पार्श्वयोरुभयोर्देव्योस्तत्तन्मन्त्रेण दक्षिणे स्नपनमुत्तरे चोत्सवं बलिबेरं च दक्षिणे चोत्सवमुत्तरे स्थापनं स्थापयेदित्येके । देवस्य पादौ स्पृष्ट्वा विष्णुसूक्तं पुरुषसूक्तमेकाक्षरसूक्तं च जप्त्वा दक्षिणे देवीं श्रियं श्रीसूक्तं च वामे महीं महीसूक्तं च तत्तत्पादौ स्पृष्ट्वा जपेत् ॥

ध्रुवस्य दक्षिणे चोत्तराभिमुखस्तिष्ठन्नात्मसूक्तं जप्त्वा परमं न्यासं कृत्वा देवं ध्याय(न्) सृष्ट्यादिक्रमेण सुवर्भुवर्भूरिति बिम्बस्य मूर्ध्नि नाभिपादेषु क्रमेण विन्यस्य प्रणवैरावेष्ट्य चैषां न्यासमन्त्रस्वरूपं वक्ष्ये । षण्डपुंस्त्रीरूपान् ऋग्यजुःसाममयान् सितहेमनिभान् रक्तश्यामशुक्लवसनाब्जदण्डपुष्पधरान् प्रसन्नशीतसौम्यलोचनांस्त्रयाणामास्तिकर्षिस्त्रिष्टुप् छन्दो विष्णुर्देवतेति स्मरन् यकारं पादयोरन्तरे पीठे न्यस्याकारं हृदयेऽन्ययोस्तु रूपं वक्ष्यते । यकारं पुंरूपं कनकाभं सिता-

म्बरं द्विभुजं पुष्पगन्धभृतं वायुवेगं ऋषिरन्तर्यामि च्छन्दो देवीगायत्री वायुर्देवतेति स्मरन्, अकारं पुंरूपं कदम्बकुसुमप्रभं पीताम्बरधरमर्थं वैभवीशक्तिसरलं चतुर्भुजं यमकव्यवलम्बितशङ्खचक्रधरं ब्रह्मा ऋषिः देवीगायत्री छन्दः परः पुरुषोऽधिदेवतेति स्मरन्नेतानेव ध्यात्वाक्षराणि संस्कृतभाषया संलिखेत्। अक्षरान् पृथक् पूर्वं प्रणवैर्वेष्टयित्वा मातृकादीन् न्यस्य मन्त्रयोगादिपञ्चमार्गैः केशवादिक्रमेण, इदं विष्णुरिति मन्त्रेण कुम्भस्थां शक्तिं कूर्चेनादायायातु भगवन्निति बिम्बस्य मूर्ध्नि विष्णुमावाहयामीति संस्राव्यावाह्य तस्य पीठस्य परितः पुरुषाद्यावरणत्रयदेवानां तत्तन्नाम्ना समावाह्य दक्षिणे श्रियं श्रीङ्कारं वामे भूमेर्लकारं च हृदये न्यस्य तत्तन्मन्त्रेणावाह्य ततो ब्रह्मण उकारं मकारं शङ्करस्य भृगुपुण्ययोस्तत्तद्बीजाक्षरं च संन्यस्य तत्तन्मन्त्रैस्तत्तन्नाममन्त्रं संयोज्यावाहयेत्। देवस्य तन्मूर्त्याहूताद्यैर्वासाधिकारोक्तवत् षडङ्गान् विन्यस्य प्रणवेनावेष्ट्य संयुक्तमेतदिति ध्रुवकौतुकयोः सम्बध्य कूर्चं प्रक्षिप्य कौतुकादिभ्यः पूर्वोक्तन्यासं च कृत्वा सौवर्णादिपात्रे शङ्खे वा पूतवारिणापूर्य पुष्पाक्षतकूर्चान् विन्यस्य दीपाद् दीपमिव ध्रुवबेरात् प्रणिधिजले तथा ध्यायन् कौतुकबिम्बे समावाह्य दक्षिणे श्रियं वामे महीं देवीं चावाहयेत्। तथैव स्नपनोत्सवबलिबेराणां क्रमेणावाहयेत्। कुम्भोदकात् परितः पूर्ववदावरणत्रयदेवानावाह्यान्येषां पर्षदादीनां च तत्तद्बीजं न्यस्य तत्तन्मन्त्रैस्तत्तन्नाममन्त्रं संयोज्यावाहयेदाचार्यः स्थापकाद्यैः सहितः पुण्याहं वाच्य ब्रह्मघोषणं च कारयित्वा पश्चात् कुम्भोदकेनाभ्युक्षणं यः कुर्यात्, तस्य मनोवाक्कायकर्मकृतं तत्क्षणादेव नश्यति। देवं नित्यार्चनविधानेनाभ्यर्च्य पायसाद्यैर्हविर्निवेद्य होमं कृत्वा बलिं निर्वाप्य विधिना बलिमाराध्य बलिप्रदानात् पूर्वं बलिबेरेणालयप्रदक्षिणं कारयति। पश्चाद् ब्राह्मणानन्नेन तर्पयति। वैष्णवान् सम्पूज्य तद्रात्रौ ध्वजारोहणं कृत्वोत्सवक्रमेणोत्सवं कारयेत्। अशक्तश्चेत् तद्रात्रौ ग्राममालयं प्रदक्षिणीकृत्य स्नपनोक्तक्रमेण स्नपनं कृत्वार्चयेत्॥

यज्ञस्य प्रथममङ्कुरार्पणं, द्वितीयं सम्भारहरणं, तृतीयमक्षिमोचनं, चतुर्थं बिम्बशुद्धिः, पञ्चममग्निमथनं, षष्ठं वास्तुशुद्धिः, सप्तमम-

मीनां प्रणयनं, अष्टमं कुम्भपूजा, ध्यानं च, नवमं कलशस्नपनशय-नास्तरणप्रतिसरबन्धशयनार्थैकादशहौत्रशंसनानि, द्वादश सर्वदेवार्चनं वेदाध्ययनं च त्रयोदशं प्रधानहोमं चतुर्दशं त्रिषवणस्नानं वेदस्यो-त्थापनं पञ्चदशं रत्नन्यासं षोडशं दक्षिणादानं होमसङ्ग्रहश्च सप्तदशं सप्तप्रदक्षिणं, अष्टादशं च बालाचलस्थापनं तयोरावाहनमेकोनविंशं चान्यदेवावाहनं विंशकं स्थापकाद्यैः सह पुण्याहमेकविंशतिं नित्या-र्चनं द्वाविंशद् ब्राह्मणभोजनं वैष्णवार्चनं त्रयोविंशं, उत्सवं चतुर्विंशं स्नपनं पञ्चविंशं महाहविर्निवेदनमिति क्रममेतेषां विपर्यासं न कार-येत् ॥

एवं यः कुरुते भक्त्या विष्णोः स्थापनं श्रद्धामादधानस्तस्य कायकृतं पापं क्षिप्रं नश्यति । सर्वयज्ञफलं लब्ध्वा, सर्वान् कामान-वाप्य, दश पूर्वान् दशापरान् आत्मानं चैकविंशकं विष्णोर्लोकमासाद्य तद् विष्णोः परमं पदं प्राप्नोति । क्षत्रियो विजयं कीर्तिं लब्ध्वानून-मनेककोशमक्षयबलं सर्वशत्रान् भित्त्व सागरान्तां महीं प्राप्य चक्र-वर्ती भूत्वा विष्णोः सारूप्यं पदं प्राप्नोति । वैश्योऽपि धनधान्य-युतस्तेजस्वी पुत्रवान् पशुमान् पूर्णमनोरथः पूरुषस्य सारूप्यं पदं प्रा-प्नोति । शूद्रः स कुलकेतुः प्रजावांस्तेजस्वी पशुमानैहिकान् भोगा-नवाप्य विष्णुलोकं स गच्छति । तद् ग्रामस्य राष्ट्रस्य राज्ञः शान्ति-रायुरारोग्यधनधान्यायुर्वर्धनं च भवेत् । तस्माद् देवयजनं विशिष्ट-मिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते ध्रुवकौतुकस्नपनोत्सवबलिबेराणां
सहप्रतिष्ठाविधिर्नाम षट्त्रिंशः पटलः ॥

---

## अथ सप्तत्रिंशः पटलः ।

अथ द्वारदेवान् पर्षदानां च (पृथक्) पृथक् स्थापनाविधिः । द्वारं विधिवत् कृत्वा षडङ्गान् शिल्पिना सार्धं संयोजयेत् । पूर्वमधर-पट्टिकामूर्ध्वाननमुत्तरशीर्षं न्यस्योर्ध्वे स्तम्भमुत्तराभिमुखमुत्तरस्तम्भं दक्षिणाभिमुखं तयोरुपरिष्टादुत्तरपट्टिकामधोमुखां दक्षिणशीर्षपार्श्वे

चौपासनाग्निकुण्डं कृत्वाघारं हुत्वाघारान्ते कुम्भं सङ्गृह्य तन्तुना परिवेष्टयाद्भिः पूर्य वस्त्रेण वेष्टयित्वा तस्मिन् सुवर्णं निक्षिप्य कूर्चं निधाय षडङ्गान् प्रत्येकं वस्त्रेणावेष्टयाभिमुखे धान्यराशौ कुम्भं विन्यस्याचार्यश्चोत्तराभिमुखो भूत्वा ध्यायन् धातारं भुवङ्गं पतङ्गं पतिरिं वरणं च तस्मिन् कुम्भेऽम्भसि समावाह्य पश्चाद्धौत्रं प्रशंस्य धात्रादिषड्देवानामावाहनजुष्टाकारस्वाहाकारं च हुत्वा धात्रादि-षड्देव(ता)मन्त्रान् प्रत्येकं दशपर्यायं सवैष्णवं हुत्वा प्रभाते स्नात्वा तत्कुम्भोदकेन धात्रादीन् समावाह्याभ्यर्च्य हविर्निवेदनं च कार-येत् । ब्रह्मेशाभ्यां भृगुपुण्याभ्यां च मुखमण्डपे सोपाने वा दक्षिणो-त्तरतः प्रागेव होमं कृत्वा कुम्भपूजां च कारयेत् ॥

मणिकादिद्वारपालान् तत्तत्पार्श्वेऽभिमुखे होमं कुम्भपूजनं च । अन्येषां परिवाराणां तत्तदालयाभिमुखे सर्वेषां पृथगेव वास्तुहोमं हु-त्वाभिमुखे शय्यावेदिं द्विहस्तायतविस्तारं तद्बिम्बार्धाधिकमानं .... शोत्सेधं सङ्कल्प्य तत्तन्मन्त्रेण पूर्ववदभ्युक्ष्याक्षरमेषामधिवासं च कृत्वा पश्चादौपासनाग्नावाघारं हुत्वाघारान्ते कुम्भं चतुराढकपूर्णान् खण्ड-स्फुटितकालरहितान् सङ्गृह्य तन्तुना परिवेष्ट्य जलेनापूर्य वस्त्रयुग्मे-नावेष्ट्य रत्नं सुवर्णं वा तदायुधसहितं तत्तन्मन्त्रेण तत्तत्कुम्भे प्र-क्षिप्य सप्तकलशैः स्नाप्य शय्यावेद्यां धान्योपरि पञ्च वस्त्राणि चास्तीर्य प्रतिसरान् बद्ध्वा तत्तन्मन्त्रेण शाययित्वोत्तराच्छादनं कृत्वा हौत्रं प्रशंस्य तत्तन्मूर्तिमन्त्रेणावाहनजुष्टाकारस्वाहाकारं च कृत्वा सर्वेषां पर्षदानां मन्त्रैर्वैष्णवैः षोडशद्वादशकृत्वो जुहुयात् । यस्य देवस्य स्वकं मन्त्रं न विद्यते, तस्य नाममन्त्रेण तथैव होमं हुत्वा रात्रिशेषं विनीय प्रभाते स्नात्वालयमाविश्य कुम्भं बिम्बं समादाय तत्तत्स्थाने तत्तन्मन्त्रेण रत्नन्यासं कृत्वा तत्तन्मन्त्रैः स्थाप्य तत्तद्बेरहृदये बीजा-क्षरं न्यस्य तत्तन्मन्त्रेणावाह्याभ्यर्च्य हविर्निवेदयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते सर्वपरिवाराणां पृथक् स्थापना-विधिर्नाम सप्तत्रिंशः पटलः ॥

---

## अथाष्टात्रिंशः पटलः ।

अथोर्ध्वं नवषट्पञ्चमूर्तिविधिं वक्ष्ये । सहस्राधिकविप्राणां ग्राममध्ये पश्चिमे पूर्वे वा नलिनकादिविमानेषु नवषष्टिहस्ताद्येकषष्टिकरान्तं द्विद्विहस्तं विभज्य वृद्ध्या सप्तविंशतिभेदेष्विष्टमानं विसृज्य निश्चित्य तत्रैकाशीतिविभागं कृत्वा तन्मध्ये पञ्चविंशतिभागं तस्योर्ध्वे तलकरणार्थं घनं दृढतां यथालक्षणानुरूपं परिकल्प्य तस्यैव परितः प्रागादिचतुर्दिक्षु पुरुषं सत्यं चाच्युतानिरुद्धान् गर्भागारं दशभागं तत्समं तत्प्रमुखे निष्क्रामणं युक्त्या कृत्वा तत्समं प्राच्यां प्रमुखं वास्त्यादीनां मुखमण्डपं तद् गर्भागारं समं त्रिपादमर्धं वाप्येवं विमानं चतुर्मुखं चतुर्द्वारं चतुष्कृतं त्रिशालायुतहारपञ्जरनासिकाद्यैः कृत्वोपरिष्टाद् द्वितीयतलविस्तारं पूर्वं तदेकाशीतिभागं कृत्वा तन्मध्ये पञ्चविंशतिभागं विष्णोरादिमूर्त्तेरावाहनागारं मुखमण्डपसोपानयुक्तं तस्यैव परितोऽलीन्द्रं चतुर्विंशतिभागं तद्बाह्ये द्वात्रिंशद्भागं बाह्यभित्तिं कूटशालाद्यैः शोभितं तस्यालीन्द्रे दक्षिणे नरनारायणयोरासनागारं तत्पश्चिमे नृसिंहस्य चोत्तरे वाराहस्य चागारं युक्त्यैव परिकल्प्य तस्योर्ध्वे तृतीयतलविस्तारायामया लक्षणोपेतं देवेशस्य शयनागारं मुखमण्डपं कृत्वा तत्प्राच्यामलीन्द्रे दक्षिणे दक्षिणामुखं सत्यमूर्तिं तथैव संयुक्तं कृत्वा एवं त्रितलैर्युक्तं नवमूर्तिविमानं कारयेत् ॥

षण्मूर्त्तिप्रतिष्ठा चेदेवं विमानं त्रितलं कृत्वा नरनारायणनारसिंहवाराहांश्च विमाने त्रितले देवेशं शयनं द्वितीयतले विष्ण्वादिमूर्त्तिमधस्तले पुरुषादीन् पूर्ववत् स्थापयेत् । अथवा विमानं त्रितलमधस्स्थले विष्णुमादिमूर्त्तिं भोगासनमार्गेण प्रतिष्ठाप्य तत्परितोऽलीन्द्रं चतुर्दिक्षु चतुर्द्वारयुतं यस्मिन् प्रधानं तस्मिन् मुखमण्डपं कृत्वा तत्प्राच्यामलीन्द्रे दक्षिणे दक्षिणामुखं सत्यमूर्त्तिं तथैव पश्चिमे पश्चिमामुखमच्युतमूर्त्तिमुत्तरे चोत्तराभिमुखमनिरुद्धमूर्त्तिं देवीभ्यां सहितं रहितं वा संस्थाप्योर्ध्वे द्वितीयतले देवेशं योगशयनं वा संस्थाप्यार्चयेत् ॥

पञ्चमूर्त्तिप्रतिष्ठा चेद् विमानं त्रितलं कृत्वा तदूर्ध्वे तले द्वितीये तले विष्णुमादिमूर्त्तिमधस्तले पुरुषादीन् पूर्ववत् स्थापयेत् । अथवा

द्वितीयतले विष्णुमादिमूर्त्तिं पूर्ववत् संस्थाप्याधःस्थलेऽभ्यन्तरघन-संयुक्तं तत्परितश्चालीन्द्रं चतुर्दिक्षु चतुर्द्वारयुतं प्रधाने मुखमण्डपसंयुक्तं कृत्वा तस्यालीन्द्रे प्रागादिपुरुषादीन् देवीभ्यां सहितं रहितं वा पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां सहैव स्थापयित्वार्चयेत् ॥

अथवा विमानमेकतलप्रासादनवहस्तादहीनं निश्चित्य तस्मिन् एकाशीतिविभागं कृत्वा तन्मध्ये नवभागं कृत्वा मध्ये नवभागं गर्भागारं तस्यैव परितः षोडशभागमभ्यन्तरं भित्तिस्तत्परितश्चतुर्विंशतिभागमलीन्द्रं तद्बाह्यद्वात्रिंशद्भागबाह्यभित्तिं पूर्वद्वारसंयुक्तं तत्समं त्रिपदमर्धं वा मुखमण्डपं दक्षिणपश्चिमद्वारप्रदेशे जालकैर्युक्तं बाह्यभित्तिविस्तारात् सप्तदशोत्सेधमर्धाधिकं पादोनद्विगुणं द्विगुणं वा विमानोत्सेधं तदष्टभागं कृत्वा द्व्येकांशमधिष्ठानं तद्द्विगुणं पदोत्सेधमेकांशं प्रस्तरबाह्यभित्तौ संयोज्याभ्यन्तरभित्तेरुपरि कण्ठमेकांशं द्व्यङ्गुलं शिखरमेकांशं स्थूपीत्येवमेकतलप्रासादं परिकल्पयेत् । तस्मिन् गर्भालये दैवतभागे विष्णुमादिमूर्त्तिं भोगासनमार्गेण ध्रुवबेरं पीठे स्थापयति । पुरुषाद्यादिमूर्त्तेर्भिन्नत्वादन्येषामपि ध्रुवबेरं विमानस्यादिमूर्त्तेरनुरूपं विष्ण्वादिपञ्चमूर्त्तेः कौतुकबेरान् विधिना कारयित्वा गर्भागारे ब्रह्मपदे विष्णुमादिमूर्त्तिं तस्यालीन्द्रे द्वारदक्षिणे प्राङ्मुखः पुरुषस्तस्यालीन्द्रे दक्षिणे सत्यमच्युतमुत्तरेऽनिरुद्धं देवीभ्यां सहितं रहितं वा संस्थाप्यार्चयेदिति केचित् । पञ्चानां कौतुकादीनामावाहनोद्वासनमादिमूर्त्तौ देवपुरुषादीनां चतुर्णामेतौ विधिनार्च्य एवं कारयेदिति केचित् ॥

एवं कर्तुमशक्तश्चेत् कूटाकारं द्वितीयं तरुणालयं यथास्थानेन कल्पितं चतुर्वर्गयुतं बाह्यभित्तिविस्तारसममभ्यन्तरभित्तेः सप्तदशोत्सेधं वा तदुत्सेधं षडंशं कृत्वा तदेकांशमधिष्ठानं द्व्यंशं स्तम्भं तुङ्गं द्व्यंशं शिखरमर्धांशं स्थूपी चेत्येवं शिलयेष्टकया भित्तिं सङ्कल्प्य लुपाविधानेन कृत्वा लोष्टैराच्छाद्योपरि स्थूप्येकात्रिः पञ्चसप्तनवैर्वा कारयेत् । मुखमण्डपेन सार्धं वेति केचित् । ध्रुवबेरविमाने विष्ण्वादिपञ्चमूर्तीन् कौतुकमेव प्रतिष्ठापयेत् । अशक्तश्चेद् यथोक्तविमानध्रुवबेरस्य कृत्वा कूटाकारकौतुकादीन् समानीय तस्मिन् विमाने प्रतिष्ठाप्यार्चयेत् ॥

अथ षण्मूर्त्तिः । यथोक्तविमानध्रुवबेराणां कर्माशक्तश्चेत् पूर्वोक्तपञ्चमूर्त्येकतलप्रासादवद् विमानं कृत्वा ध्रुवबेरं विना गर्भागारे ब्राह्मे पदे विष्णुमादिमूर्त्तिं तस्यालीन्द्रे द्वारदक्षिणे प्राङ्मुखं पुरुषं दक्षिणे सत्यं पश्चिमेऽच्युतमुत्तरेऽनिरुद्धं देवीभ्यां सहितं रहितं वा कौतुकादीन् संस्थाप्योपरितलार्थविष्णुमूर्त्तेः प्रतीच्यामुन्नतपीठं कृत्वा तस्मिन् भित्तौ गुहायां वा देवं कौतुकमेवं संस्थाप्यार्चयेत् । पुरुषादीनामभ्यन्तरभित्तौ कृतभागं संस्थाप्यार्चयेदिति केचित् ॥

विष्ण्वादिषण्णां कौतुकानामावाहनाद्यक्षरन्यासमाचरेत् । अथवा वितलप्रासादमेवं कृत्वा विमानोत्सेधं चतुर्भागं कृत्वा सार्धांशमधिष्ठानं तद्द्विगुणं स्तम्भायामं सार्धांशं प्रस्तरं बाह्यभित्तौ संयोज्यालीन्द्रं विसृज्याभ्यन्तरभित्तेरुपरि चोर्ध्वभूमौ पादं त्र्यंशं पादांशं कण्ठं पादं त्र्यंशं शिखरमेकांशं स्तूपितुङ्गं, बाह्यभित्तेरुपरिकूटशालाद्यैरुपशोभितं सोपानमुखमण्डपादीन् शिल्पशास्त्रोक्तमार्गेण युक्त्या परिकल्पयेत् । एवं विमानं कृत्वाधःस्थले पूर्ववद् विष्ण्वादिपञ्चमूर्त्तीन् कौतुकादीन् संस्थाप्य तस्मिन्नुपरितले ब्रह्मभागे पीठे रत्नादीन् विन्यस्योपरि तथार्थं कौतुकं संस्थाप्यार्चयेत् ॥

अथवा पूर्वकूटाकारं जीर्णं चेत् पश्चादेकतलं द्वितलं वानुकल्पमार्गलक्षणोपेतं विमानं कृत्वा तस्मिन् पूर्ववत् कूटाकारोक्तविधानेन संस्थाप्यार्चयेत् । कूटागारं चेत् पञ्चमूर्त्तिकूटागारवत् कूटागारं कृत्वा षण्मूर्त्येकतलवद् बिम्बान् संस्थाप्यार्चयेत् । पश्चादशक्तश्चेन्मलीनकादिषु पूर्ववद् यथोक्तविमानध्रुवबेरांश्च कृत्वानुकल्पविमाने कूटागारयोरुभयरूपेऽप्यर्चितं वा षण्मूर्त्तिकौतुकादीन् समानीय यस्मिन् विमाने प्रतिष्ठाप्यार्चयेदादि(पुरुष)मूर्त्त्यादिसर्वेषां मूर्त्तीनां बल्युत्सवस्नपनादीनि सर्वाणि विष्णोरादिमूर्त्तेरिव समाचरेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते नवषट्पञ्चमूर्त्तिविधानं नामाष्टात्रिंशः पटलः ॥

---

## अथैकोनचत्वारिंशः पटलः ।

अथोर्ध्वे नवमूर्तीनां ध्रुवबेरमानं धाम गर्भगृहद्वारस्तम्भयजमानमानाङ्गुलोद्दिष्टमानेन ध्रुवबेराणि कारयेत् । देव्योर्मानं देवस्य बाहुमानं कण्ठसीमान्तं वा तत्समं त्रिपादमर्धं वा पूजकमुनिभ्यां परिवारदेवानां चाकारं यदि तन्मध्यतले विष्णुमादिमूर्तिं सिंहासने भोगासनमार्गेण श्रीभूमिभ्यां ब्रह्मशङ्कराभ्यां युक्तं परभित्तियुगे दक्षिणवामयोर्वन्द्यमानौ चामरचारिणौ किष्किन्धसुन्दरौ च कामिनीव्याजनीभ्यामर्कचन्द्राभ्यां युक्तं प्रथमद्वारदक्षिणे तुहुणं वामे बलिन्दं द्वितीयद्वारे तापसं सिद्धिदं चैवमादिमूर्तिं तस्यालीन्द्रे दक्षिणामुखौ नरनारायणौ च स्थितौ प्रजापतिशङ्करावर्चकमुनिभ्यामर्कचन्द्राभ्यां युक्तं द्वारस्य दक्षिणवामयोश्चक्रचूलिनं शङ्खचूलिनं च तस्यालीन्द्रे पश्चिमे नृसिंहं योगासनमार्गेणासीनं कव्या चोरुबद्धब्रह्मशङ्कराभ्यामर्चकमुनिभ्यामादित्यचन्द्राभ्यां युक्तं द्वारदक्षिणवामयोश्चण्डप्रचण्डाभ्यां सहैव नृसिंहवत् कुर्यात् । तस्यालीन्द्रे चोत्तराभिमुखं वाराहं पूर्ववद् देवस्य दक्षिणे चन्द्रं वामे हलेशं पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां परभित्त्यूर्ध्वभागे सनकसनत्कुमारौ चन्द्रादित्यौ द्वारदक्षिणवामयोर्दुर्गाविघ्नेशौ तु कुर्यात् । अधःस्थले प्राच्यां पुरुषं भोगासनमार्गेण देवीभ्यां पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यामपरभित्त्यूर्ध्वभागे श्वेतच्छत्रं दक्षिणवामयोश्चामरधारिणीभ्यां मायासंह्लादिनीभ्यां सनकसनत्कुमाराभ्यां चन्द्रसूर्याभ्यां च कारयति । प्रथमद्वारे तुहुणबलिन्दौ द्वितीयद्वारे शङ्खपद्मनिधी पूर्वद्वारसोपानस्थलभित्तौ प्रमुखं श्रियं वरणाभिषेकयुतं कारयेत् । दक्षिणे सत्यमूर्तिं दक्षिणामुखं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यामपरभित्त्यूर्ध्वभागे छत्रं जयाभद्राभ्यां चामरधारिणीभ्यां शुक्रबृहस्पतिभ्यां प्रथमद्वारे नासत्यदण्डौ द्वितीये चक्रशङ्खचूलिनौ दक्षिणे सोपानस्थलभित्तौ दक्षिणामुखीं वाग्देवीं कारयति ॥

पश्चिमे पश्चिममुखमच्युतं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशङ्कराभ्यां परभित्त्यूर्ध्वभागे छत्रचामरधारिणीभ्यां जयाभद्राभ्यां सूर्यचन्द्राभ्यां प्रथमद्वारे गुहजाम्बवौ द्वितीये पद्मशङ्खनिधी सोपानस्थल-

भित्तौ पश्चिमामुखो मन्मथं कारयेत् । उत्तरे चोत्तराभिमुखमनिरुद्धं देवीभ्यां सहितं रहितं वा पूजकमुनिभ्यां ब्रह्मेशाभ्यां परभित्त्यूर्ध्वभागे छत्रचामरधारिणीभ्यां जयापुष्टिकाभ्यां सूर्यचन्द्राभ्यां प्रथमद्वारे विद्युदप्सरसौ द्वितीयद्वारे चक्रशङ्खचूलिनौ सोपानस्थलभित्तौ चोत्तराभिमुखं मुद्गलमुनिं च कारयति ॥

तस्योर्ध्वे तृतीयतले देवेशं योगशयनं दक्षिणशीर्षमनन्तफणेन सप्त पञ्च वा छन्नमौलिनं द्विभुजं पूजकस्थाने महीमार्कण्डेयाभ्यां देवस्य दक्षिणहस्तं मार्कण्डेयशिरोपरिन्यस्तं वामहस्तमुद्धृतकटकं पादं दक्षिणं प्रसार्य वाममीषत्कुञ्चितं नाभ्याम्बुजसमासीनं ब्रह्माणं पञ्चायुधान् गरुडं चोद्दिश्य करतलं प्राग्द्वारयुक्तं पादपार्श्वे मधुकैटभौ दक्षिणपार्श्वे क्षणं सनकं वामे भारतीं सनत्कुमारं तस्योर्ध्वे वेदरूपाणि ऋग्यजुःसामाथर्वान् दक्षिणोत्तरयोर्ब्रह्मशङ्कराभ्या प्रथमद्वारे यमुनागङ्गाभ्यां द्वितीयद्वारे सुरसुन्दरीभ्यां दिव्यैर्जलैर्वापूर्य पृथक् पृथक् सङ्कल्प्याभिषेचयेत् । एकहोमे सर्वं तन्त्रयित्वा एकबलिनिर्वापं कारयेत् । होमं बलिं विना सर्वत्र जलाधिवासनमेवं कारयेदित्येके ॥

अथातो देवयजनं व्याख्यास्यामः । हौत्रेण फलं लभेत् स्वर्गमित्याहुः साङ्गं देवपूजादानं यज्ञ इति सूरयो वदन्ति । यज्ञेष्वेतेषु देवयागो विशिष्यते । यजमानः कृते दिवि शाश्वते तिष्ठति । तस्माद् राजा राष्ट्रस्य यजमानवंशस्याभिवृद्धिकरो भवति । तस्याग्निहोत्रस्याधानं वक्ष्ये । (च ?)उक्तमार्गतिथिवारनक्षत्रलग्ने कर्तुमुद्योगस्तद्दिनात् पूर्वमङ्कुरार्पणं कुर्यात् । आलयात् पुरतो दक्षिणे वा यागशालां षोडश स्तम्भसंयुक्तां त्रिभक्तिचतुरश्रान्तं विमानं विनिर्देशहस्तेनैव द्विहस्तादित्रिहस्तान्तं षडङ्गुलविवृद्ध्या पञ्चधा भित्तिमानं तस्यान्तःस्थलं तालविभागं तदर्धं वा पादोच्चं भक्तिमानस्य पादाधिकमर्धाधिकं पादोनद्विगुणं द्विगुणं वा शय्यावेदिविस्तारं भक्तिमानं समं पादोनमर्धं बिम्बार्धाधिकं वा चतुर्थांशमुत्सेधं तदूर्ध्वे कूटं वर्षनिवारणं तस्यैव परितः प्रावरणं च कृत्वा चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितं तत् सर्वं वितानध्वजदर्भमालास्तम्भवेष्टनमुक्तादामाद्यैरलङ्कारं कारयति । दर्भे-

मालारज्जुपर्वद्वितालायामलम्बदर्भद्वयसंयुक्तदर्भमालालङ्कृत्याश्वत्थौदुम्बरप्लक्षवटवृक्षैस्तोरणादीनि त्रिहस्तमुत्सेधानि तस्यार्धविस्तृतानि तस्योर्ध्वपट्टिकामध्येऽरत्निमात्राणि त्रिशूलयुतानि तोरणानि कारयित्वाग्निमीळेति प्राग्द्वाराश्वत्थमिषेत्वोर्जेत्वादि दक्षिणे उदुम्बरमग्न आयाहीति पश्चिमे प्लक्षं, शन्नोदेवीत्युत्तरे वटवृक्षं च कृत्वा चतुर्द्वारेषु संस्थाप्य द्वारपार्श्वे कदलीक्रमुकोदकुम्भदीपाङ्कुराद्यैरलङ्कृत्य तन्मध्यकृतवेद्यां परितश्चाग्निकुण्डानि कारयेत् ॥

अरणीमश्वत्थं शमीजातमन्यं वा सङ्गृह्य द्वितालायामां षडङ्गुलविस्तृतां भागोत्सेधामरणीं तत्समा चोर्ध्वफलका द्वितालायामप्रादेशपरिणाहं मूलाग्रयोरेकाङ्गुलमात्रं शिखायुक्तं मथनदण्डं ध्रुवस्यायामं द्विप्रादेशं प्रादेशपरीणाहं तदग्रं नाहं बिलादर्वागानुपूर्व्येण संक्षिप्याग्रमग्रे प्रादेशमण्डलं गोलकं बिलविस्तारमाच्छादनं गर्त्तयुतमेवं कुर्यात् । अग्निहोत्रहवणी षड्विंशदङ्गुलायाममधस्तात् षोडशाङ्गुलं दण्डं द्वादशाङ्गुलपरीणाहं तदूर्ध्वे पञ्चाङ्गुलायामवृत्तं मध्ये निम्नं भागं परितो भित्तिरेकाङ्गुलं तस्मादग्रान्तं घृतधारायुक्तमेकाङ्गुलविस्तारं त्र्यङ्गुलं मध्याद्धस्तात् पञ्चाङ्गुलमानुपूर्व्येण संक्षिप्तं घृतधारां तस्योभयपार्श्वयोरेकाङ्गुलं गर्त्तं भित्तिरर्धाङ्गुलं परं छत्राकारं घनं भागमेव करोति ॥

जुहूप्रमाणं द्वितालायामं द्वादशाङ्गुलपरीणाहं मूलं पद्माकारमग्रे चाष्टाङ्गुलायामं चतुरङ्गुलं हि प्रक्षाल्य नादेयीयैरद्भिरापूर्य पृथक् पृथग् वस्त्रयुग्मेनावेष्ट्य प्रत्येकं नवरत्नान् सुवर्णेनाष्टमङ्गलं च पञ्चायुधवर्णचिह्नान् विन्यस्य तत्तदगारे वा देवाभिमुखे धान्यराश्युपरि कुम्भान् संन्यस्य पूर्ववद् ध्यात्वावाह्य पश्चात् स्थापकांश्चाहूयादिमूर्त्त्यादिमूर्त्तीनां यथाक्रमेणादाय सर्वेषामाचार्याणां तत्तत्कुम्भं समादाय पूर्वतो गच्छेत् । तत्तद्योगशालामागत्य स्नानश्वभ्रे प्रतिष्ठाप्य सप्तभिः कलशैः संस्नाप्य वस्त्रोत्तरीयाद्यैरलङ्कृत्याभ्यर्च्य पुण्याहान्ते प्रतिसरान् तत्तद्वेद्यां धान्योपरि पञ्चशयनानि वासांसि वास्तीर्य शाययित्वोत्तराच्छादनं कृत्वा यजमानस्तदा हौत्रान् सर्वान् वस्त्रोत्तरीयाद्यैरलङ्कृत्याभ्यर्च्य पुण्याहान्ते प्रतिसरान् तत्तत्प्रधानहोमे पूर्ववद्धौत्रं प्रशंस्य तथैवावाहनादीनि कारयेत् ॥

विष्णुमूर्तेः शयनस्य सभ्याग्नौ हौत्रशंसनं पुरुषमूर्त्तेराहवनीयं सत्यमूर्त्तेरन्वाहार्यमच्युतमूर्त्तेर्गार्हपत्यमनिरुद्धमूर्त्तेरावसथ्यं नरनारायणयोरन्वाहार्यं नृसिंहस्य गार्हपत्यं वाराहस्यावसथ्यं प्रधानाग्निमित्युच्यते। पश्चादादिमूर्तेः सभ्याग्निं परिषिच्य पलाशेध्मान् गृहीत्वा मूलाग्राभ्यां घृताक्तं विष्णुगायत्र्या शतशो जुहुयात्। उभभृतेनातो देवाद्यैराज्येन जुह्वां पक्वं साज्यमतो देवादिना स्रुवेणाज्यमादाय विष्णुसूक्तमग्निहोत्रहवण्याभ्यां पुरुषसूक्तं च दशपर्यायतो यजेत्। सहस्राहुती पञ्चवारुणं यद्देवादींश्च ब्रह्मयजनादिसर्वदैवत्यमन्त्रान् वैष्णवमिन्द्राहुतिं विच्छिन्नं च सकृद्धुत्वाहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं गार्हपत्ये वैष्णवमावसथ्ये चैकाक्षरादींश्च त्रिष्कृत्वा यजेद् विष्णुसूक्तेन पञ्चाग्निषु क्षीरदध्याज्यलाजैर्युक्तमुपजुह्वा जुहुयात्। आज्यं स्रुचा गृहीत्वा वैष्णवं च सकृद्धुत्वा पौण्डरीके वैष्णवं जुहुयात्। अब्जशतं बिल्वपत्रं वा घृताक्तं विष्णुगायत्र्या जुहोति। पुरुषसूक्तं पारमात्मिकं देवं ध्यायन् सकृद्धुत्वा पर्षदानां होमेषु तत्तन्मन्त्रान् द्वादश दशाष्टौ वा पर्यायतो जुहोति। तदूर्ध्वतले तृतीये शयनाद्यस्य स्थापनमार्गेण पञ्चाग्नीनां होमं हौत्रशंसनं मूर्त्यावाहनादिकं चाचरेत्। अधःस्थले प्राच्यां पुरुषमूर्त्तेर्यागशालायामाहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं श्रीदैवत्यं ब्राह्मं चाहवनीये पुरुषसूक्तं मुनिभ्यां चावसथ्ये चैकाक्षरादिमहीसूक्तं रौद्रं च हुत्वानिरुद्धमूर्त्तेरावसथ्ये चैकाक्षरादिसूक्तमाहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं मुनिभ्यां होमं गार्हपत्ये वैष्णवं महीदैवत्यं रौद्रं च हुत्वा नरनारायणयोरन्वाहार्ये विष्णुसूक्तं विष्णुगायत्रीं च गार्हपत्ये वैष्णवमादित्यदैवत्यमादित्ये चैकाक्षरादिसूक्तमाहवनीये पुरुषसूक्तं प्राजापत्यं च तत्पश्चिमे नृसिंहस्य गार्हपत्ये वैष्णवं यो वा नृसिंहेत्येवमावसथ्ये चैकाक्षरादिसूक्तं ब्राह्ममाहवनीये पुरुषसूक्तमन्वाहार्ये विष्णुसूक्तं रौद्रं च हुत्वा वाराहस्यावसथ्ये चैकाक्षरादिसूक्तं यः स्वयं सृष्टमित्येवं महीदैवत्यमाहवनीये पुरुषसूक्तमैन्द्रमन्वाहार्ये विष्णुसूक्तं गार्हपत्ये अतो देवादिवैष्णवमेते शतमित्यादि वारुणं सर्वेषां होमानां षोडश द्वादश पर्यायतो जुहोति। सर्वान् तत्तत्प्रधानाग्निं विना सर्वहोमाद्यामन्तहोमैः हुत्वा रात्रिशेषं विनीय प्रभाते

स्नात्वाचार्यः स्थापकादीन् स्नात्वालयमाविश्य प्रादक्षिण्यवशेन पूर्ववत् सर्वान् देवानुत्थाप्याभ्यर्च्य गर्भालयेषु सर्वेषु कौतुकपीठे रत्नन्यासं कृत्वाचार्यादिभ्यो दक्षिणां दत्त्वाग्निं परिस्तीर्य पूर्णाहुतीर्हुत्वा नित्यहोमाय विन्यस्य मुहूर्ते समनुप्राप्ते तत्तद्यागशालामागत्य तत्तदाचार्यादयो भूः प्रपद्येति क्रमेण कुसुमाञ्जलिं दत्त्वा तत्तद्देवं प्रणम्य सर्वालङ्कारसंयुक्तं वाद्यघोषेण तोयधारापुरःसरं शकुनसूक्तं समुच्चार्य कुम्भानाहृत्य शिरसा धारयन्तोऽग्रतो गच्छेत् । कौतुकबिम्बादीनां सानुगच्छेदालयं प्रदक्षिणं कृत्वा पूर्वं विष्णुमूर्त्तिं पश्चात् पुरुषसत्याच्युतानिरुद्धान् शयनादेव तस्यानु नरनारायणनारसिंहवाराहांस्तत्तद्गर्भागारं प्रविश्य तत्तद्ध्रुवबेरस्य दक्षिणपार्श्वे कुम्भान् संन्यस्य प्रतद्विष्णुस्तपत इति कौतुकबेरान् संस्थाप्य पार्श्वयोरुभयोर्देव्यौ च पूर्वोक्तस्थापकानां क्रमेण संस्थाप्यात्मसूक्तं जप्त्वा ध्रुवस्य पादं स्पृष्ट्वा सूक्तानि च जप्त्वा तथैव मन्त्रन्यासाक्षरन्यासांश्च कृत्वा समाहितो ध्यायन् सर्वान् देवानावाह्य पुण्याहं कृत्वा नित्यार्चनाविधानेनाभ्यर्च्य पायसाद्यैर्हविर्निवेद्य होमं हुत्वा बलिं निर्वाप्य बल्युद्धारं च कारयेत् । एष विशेषोऽन्यत् सर्वं समानम् । षण्मूर्त्तिप्रतिष्ठा चेद् विष्ण्वादिपञ्चमूर्त्तिं शयानं च यथोक्तविधिना प्रतिष्ठापयेत् । पञ्चमूर्त्तिं चेद् विष्ण्वादिपञ्चानां यथोक्तविधिना प्रतिष्ठापयेत् ॥

अशक्तानामेकतलप्रासादे पञ्चमूर्त्तिप्रतिष्ठाविशेषं वक्ष्ये । पूर्ववदाचार्यमेकं स्थापकादीन् वरयित्वा यथोक्तमङ्कुरानर्पयित्वा तथैवाक्षिमोचनाधिवासनं च कृत्वालयाभिमुखे पूर्ववदादिमूर्तिप्रतिष्ठोक्तवद् यागशालां महावेद्यां च तस्यैव परितश्चाग्निकुण्डानि कृत्वा वास्तुहोमविधिना वास्तुशुद्धिं कृत्वाघारं हुत्वाघारान्ते पूर्ववत् कुम्भं साधयित्वालये बालावादित्याभिमुखे धान्योपरि कुम्भं संन्यस्याचार्यश्चोत्तराभिमुखो भूत्वा पूर्ववद् देवं ध्यायन् कुम्भे सर्वान् समावाह्याचार्यः कुम्भं सङ्गृह्याग्रतो गच्छेत् । तस्यानु स्थापकाः शकुनसूक्तमुच्चार्य विष्णुमादिमूर्तिं पश्चात् पुरुषादीनां कौतुकानुक्रमेण स्नपनोत्सवबलिबेराणां चादाय यागस्थानेऽन्यदेशे स्नानवेद्यां मध्ये

विष्णुमूर्तिं तद्दक्षिणे देवीं श्रियं तत्पूर्वे पुरुषं तद्दक्षिणे श्रियं तद्दक्षिणे पुरुषं सत्यं च तस्योत्तरे महीं चाच्युतमनिरुद्धं च प्रतिष्ठाप्य तेषां दक्षिणपार्श्वे कुम्भं संन्यस्य पूर्ववत् प्रत्येकं सप्तभिः कलशैः स्नाप्य वस्त्रोत्तरीयाद्यैर्विभूष्याभ्यर्च्य यज्ञालये नैर्ऋते विष्टरे देवान् संस्थाप्य पूर्ववत् प्रतिसरं बध्वादिमूर्तेर्ध्रुवबेरस्य प्रतिसरमाबध्य पूर्ववत् पृथक् पृथक् शयनान्यास्तीर्य मध्ये विष्णुमूर्तिं तद्देवीभ्यां सह दक्षिणे पुरुषसत्यौ तस्योत्तरेऽच्युतानिरुद्धौ तत्तद्देवीभ्यां सह समारोप्य तेषां दक्षिणे स्नपनमुत्तरे चोत्सवं बलिबेरं चारोप्य पूर्ववच्छाययेत् । यद् द्वारं तत्तत् तेषां मौलिं कृत्वोत्तराच्छादनं सञ्छाद्य सभ्याग्नौ पूर्ववद्धौत्रं प्रशंस्यावाहनादीनि सर्वान् देवान् कृत्वा सर्वदेवार्चनं च कृत्वा चतुर्दिक्षु वेदानध्यापयेत् । सभ्याग्नौ पूर्ववद् यथोक्तहोमं हुत्वाहवनीयादीनां चतुर्णां च यथोक्तहोमं हुत्वा तथैव पद्महोमं सर्वपरिवारदेवानां तत्तद्दैवत्यं तत्तत्स्थाने तथैव हुत्वा नृत्तगेयाद्यै रात्रिशेषं नयेत् ॥

अथाचार्याद्याः प्रभाते स्नात्वालयमाविश्य पूर्ववद् विष्ण्वादिपञ्चानां कौतुकानां पीठे रत्नादीन् संन्यस्याचार्यादिभ्यो दक्षिणां दद्यात् । सभ्याग्निं परिस्तीर्य स्विष्टाकारं पूर्णाहुतीर्जुहुयात् । तमग्निं नित्यहोमाय विन्यस्य मुहूर्ते प्राप्ते सर्वालङ्कारसंयुक्तं तोयधारापुरःसरं शकुनसूक्तं जपन् देवं ध्यायन् आचार्यः कुम्भं शिरसा धारयन्नग्रतो(ऽभि)गच्छेत् । स्थापकाश्च विष्ण्वादिमूर्तीन् पूर्ववदादाय प्रदक्षिणीकृत्याभ्यन्तरे ध्रुवबेरस्य दक्षिणे भागे कुम्भं संन्यस्य ब्रह्मस्थाने ध्रुवबेराभिमुखे विष्णुमूर्तिं तद्द्वारदक्षिणेऽलीन्द्रे प्राङ्मुखं पुरुषमूर्तिं तस्यालीन्द्रे दक्षिणाभिमुखं सत्यं तत्पश्चिमे पश्चिमाभिमुखमुत्तरे चोत्तराभिमुखमनिरुद्धं च पूर्ववत् स्थापनासूक्तैः संस्थापयेत् । तस्मिन् मुखमण्डपेऽभ्यन्तरे वा दक्षिणे स्नापनमुत्तरे चोत्सवं बलिबेरं च स्थापयेत् । आचार्यश्चात्मसूक्तं च जप्त्वा ध्रुवस्य पादं स्पृशन् सूक्तानि च जप्त्वा संस्थाप्य दक्षिणे चोत्तराभिमुखस्तिष्ठन् ध्रुवबेराक्षराणि संन्यस्य समाहितो गुरुः कुम्भस्थां शक्तिमायातु भगवानिति ध्रुवबे-

रस्य परितः पूर्ववदालयावरणत्रयदेवान् समावाह्य दक्षिणे श्रियं वामे महीं चावाहयेत् । विष्ण्वादिकौतुकानां स्नपनोत्सवबलिबेराणां च मन्त्रन्यासाक्षरन्यासांश्च कृत्वा पूर्ववत् सौवर्णादिपात्रे शङ्खे वा पूत-वारिणापूर्य देवं ध्यायन् ध्रुवबेरात् प्रणिधिजले दीपाद् दीपमिवा-वाह्य विष्ण्वादिपञ्चानां कौतुकानां यथाक्रमेणावाहयेत् । ततः स्नप-नोत्सवबलिबेरमावाहयेत् । एष विशेषोऽन्यत् सर्वं समानम् ॥

षण्मूर्तिश्चेदुपरितले देवस्य कुम्भपूजनस्नपनशयनहोमादीन् पृथगेव कृत्वा पूर्ववत् कौतुकादीनेव विधिना स्थाप्यार्चयेत् । अन्येषां पूर्ववत् पञ्चमूर्तिविधिना कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते नवषट्पञ्चमूर्ति-
प्रतिष्ठाविधिर्नामैकोनचत्वारिंशः पटलः ॥

## अथ चत्वारिंशः पटलः ।

अथैकविमानस्थानकासनशयनानां विधिं वक्ष्ये । विमानं त्रि-तलं चतुरश्रायतं वर्तुलायतं वा मुखमण्डपसोपानसहितं कृत्वादितले स्थानकं द्वितीये चासनं तृतीये शयानं च कृत्वाथवा तृतीयतले स्था-नकं द्वितीये चासनमादौ शयानं कारयेदिति केचित् । योग(भोगादि?)-भेदेष्वेकमार्गेण ध्रुवबेराणि कारयेत् । ध्रुवानुरूपं कौतुकादीनि बेराणि कृत्वा पर्यन्तानामालयं प्राकारगोपुरमण्डपादीनि पूर्ववत् तेषां स्थापना-विशेषं वक्ष्ये । यथोक्तमङ्कुरानर्पयित्वा पूर्ववदक्षिमोचनं चाधिवासं च कृत्वालयाभिमुखे स्थानकस्य तत्प्राच्यां शयनस्य यागशालामलङ्कारं च पूर्ववत् कृत्वा तेषां मध्ये शय्यावेदीं तत्तद्वेद्यां परितश्चाग्निकुण्डानि कृत्वा त्रयाणां देवानां प्रत्येकमाचार्यस्थापकादीन् वरयित्वालयस्यो-त्तरे वास्तुहोममेकं वा कृत्वालयं शोधय सर्वानग्नीनाघारं हुत्वाघारान्ते देवानां त्रयाणां कुम्भपूजनस्नपनप्रतिसरबन्धनहौत्रशंसनमूर्त्यावाहन-जुष्टाकारस्वाहाकारादिहोमादीनि सर्वाणि कार्याणि महाप्रतिष्ठोक्त-विधिना सर्वं पृथगेव कृत्वा प्रभाते स्नात्वा सर्वान् देवानुत्थाप्याभ्यर्च्य पश्चात् तान् संन्यस्याचार्यादीनां दक्षिणां दत्त्वाचार्यः कुम्भं शिरसा धारयन् अग्रतो गच्छेत् । ततोऽनु स्थापका बिम्बमादाय क्रमेणालय-

माविश्य पूर्ववत् प्रतिष्ठाप्य नित्यार्चनविधानेनाभ्यर्च्य पायसाद्यैर्हविर्निवेदयेत् । होमं हुत्वा बलिं निर्वाप्य बल्युद्धरणं कारयेत् । एवं कर्तव्यम् । अशक्तश्चेद् यथाशक्ति वा कारयेत् । अथवादितले बलिदानबल्युद्धरणस्नपनोत्सवं च कारयेदिति केचित् ॥

अथ द्विमूर्तिस्थापनाविधिः । ग्रामादिदेशे तद्बाह्ये वा चूलिकामेव कृत्वा पृथक् पृथगन्तर्मण्डलसंयुक्तदक्षिणे शङ्करभवनमुत्तरे विष्ण्वालयमुत्तरे शङ्करभवनं दाक्षिणे विष्ण्वालयं वा पश्चिमे देवेशं विष्णुं प्राङ्मुखं शङ्करभवनमेतद्विपरीतं वा विमानं सपर्षदं कृत्वा, दारामृत्तच्छास्त्रोक्तविधिना स्थाप्यार्चयेद् देवेशं विष्णुं पूर्वोक्तविधानेन विमानादि सर्वं कृत्वान्तर्मण्डले देशे नवभेदेष्वेकमार्गेण परिवारान् प्रकल्प्य प्रतिष्ठोक्तक्रमेण प्रतिष्ठां कृत्वा नित्यार्चनविधानेनाभ्यर्च्य पायसाद्यैर्हविर्निवेद्य होमं हुत्वा बलिं निर्वाप्य बल्युद्धरणं कृत्वा पूर्ववत् स्नपनोत्सवादीनि कारयेत् ॥

अथोर्ध्वं त्रिमूर्तिस्थापनाविधिः । ग्रामादेर्यथेष्टदेशेऽन्यत्र विविक्ते वा चैकस्मिन् प्राकारे वा पृथक् पृथगेवान्तर्मण्डलयुतं मध्ये विष्ण्वालयं सपर्षदं तथा दक्षिणे शङ्करभवनमुत्तरे ब्रह्माणमुत्तरे शङ्करभवनमुत्तरे ब्रह्माणं वा प्रतिष्ठापयेद् । तदालयाभिमुखमण्डपसोपानोपेतं विधिना कारयित्वा तदुक्तविधिना सकलं बेरं निष्कलं लिङ्गं कृत्वा तल्लिङ्गशास्त्रोक्तविधिना लिङ्गस्थापनं कृत्वा पूर्ववद् देवेशं विष्णुं देवीभ्यां सहितं रहितं वा संस्थाप्यार्चयेत् । ब्रह्माणं चतुर्मुखं चतुर्बाहुं तप्तहाटकसन्निभं विद्युद्भामविसकाशार्चिर्जटामकुटसंयुक्तं कुण्डलाङ्गदहारादिभूषणभूपितमागुल्फलम्बितं शुक्लाम्बरं मौञ्जीमेखलोपवीतोत्तरीयकृष्णाजिनशुक्लमालासमायुक्तं दक्षिणं दक्षिणाकराद्यक्षमालाकमण्डलुधरं दक्षिणं पूर्वकरसकूर्चकरं वा तथा वामकरं कुशाग्रडीधरमथवा दक्षिणकरं स्रुवं वाममाज्यस्थालीं दधन् दक्षिणकरं पूर्वकरं सुन्दरं वा तथा वामकरं गोशृङ्गसन्दधानं तस्य दक्षिणे देवीं भारतीं श्वेताभां जटामकुटमण्डितां द्विभुजां रक्तवस्त्रपुष्पधरां वामे सावित्रीं रक्ताभां जटामकुटमण्डितां चतुर्भुजां श्यामवस्त्रपुष्पधरामन्यत् सर्वं श्रीभूम्योरिव कारयेत् । आसनं चेद् हरेरिव सिंहासनं तस्योर्ध्वे पद्मासनेनासयित्वा

स्थानके पञ्चवीशोपरि देवीभ्यां सहितं रहितं वा कृत्वा तस्य शयानं न कुर्वीत । तस्योभयपार्श्वे शङ्खलिखितौ तन्मुखमण्डपद्वारे तापसं सिद्धिदमन्तर्मण्डले पूर्वादीशानपर्यन्तमग्रत्वादिसप्तर्षीन् सनकं चाष्टपरिवारानालयस्याग्रे वाहनं हंसराजं शैषिकमकल्मषमनुपमं पीठदेवमहाभद्रमन्तर्मण्डलद्वारेशसत्यदण्डौ च कृत्वा पश्चात् स्थापनविशेषं तद्रूपं कौतुकं कृत्वाङ्कुरानर्पयित्वा पूर्ववद् वास्तुहोमाङ्गहोमौ हुत्वा तत्तन्मन्त्रेणाक्षिमोचनाधिवासांश्च कृत्वा यागशालामध्ये शय्यावेदीं तत्प्राच्यां पौण्डरीकाग्निकुण्डं कृत्वा तद्दक्षिणे चौपासनाग्निकुण्डसरस्वत्योस्तथैवोत्तरे चौपासनाग्निकुण्डं सावित्र्यै कृत्वालयादुत्तरे वास्तुहोमं हुत्वा पञ्चाग्नावाघारान्ते कुम्भं संसाध्य ब्रह्माणं सपर्षदांश्चावाह्य पश्चाद् बिम्बं कुम्भं च सप्तकलशैः संस्नाप्य यानमारोप्य प्रतिसरं बध्वा तत्तन्मन्त्रेण शाययित्वा पञ्चाग्नौ हौत्रं प्रशंस्य ब्रह्माणं प्रजापतिं पितामहं हिरण्य गर्भमिति ब्रह्मणे, भारतीं वाणीं ब्रह्मपत्नीं सरस्वत्यै इति भारत्यै सावित्रीं वेदमातरं सर्वदेवत्यां सावित्रीमिति सावित्र्यै दक्षिणप्रणिधौ समावाह्य चोत्तरप्रणिधावन्यत्पर्षदानां तत्तन्मन्त्रैरावाह्य तथैव जुष्टाकारस्वाहाकारौ जुहुयात् । श्वेतमब्जशतं गृहीत्वा गन्धेनाप्लुत्य ब्रह्मगायत्र्या जुहोति । ब्रह्मजज्ञानं हिरण्यगर्भ इति द्वाभ्यां ब्रह्मसूक्तं च षोडशकृत्वो यजेत् । पश्चात् पर्षदानां मन्त्रं प्रत्येकं दशशो हुत्वा चतुर्दिक्षु चतुर्वेदाध्ययनैस्तद्रात्रिशेषं च यापयेत् । प्रभाते स्नात्वा तद्यागशालामागच्छेत् । ब्रह्माणं प्रणवेनोत्थाप्याभ्यर्च्याभ्यन्तरपीठे रत्नादीन् संन्यस्य कुम्भं बिम्बं समादाय सव्यप्रदक्षिणं कृत्वाभ्यन्तरमाविश्य ब्रह्मस्थाने ब्रह्ममन्त्रादीन् जप्त्वा तत् कौतुकं प्रतिष्ठाप्य ब्रह्मसूक्तं ध्रुवसूक्तं च जप्त्वा ब्रह्माणं संस्थाप्य देव्यौ तत्तन्मन्त्रं स्थाप्य तत्तद्बीजाक्षरं च संन्यस्य तत्तत्कुम्भस्थां शक्तिं ब्रह्मजज्ञानमिति मन्त्रेण ध्यात्वाहवेत् । तथा देवीभ्यां चावाह्य तत् कौतुकबिम्बं समावाह्य तत्कुम्भजलेन धात्रादिमहापीठान्तं तत्तन्मन्त्रेणावाह्याग्निं विसृज्य पुण्याहं कृत्वा नित्यार्चनाविधानेनाभ्यर्च्य पायसाद्यैर्हविर्निवेदयेत् । देवानुक्तान् सर्वं हरेरिव समाचरेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते स्थानकासनशयनादि-
मूर्तिस्थापनाविधिर्नाम चत्वारिंशः पटलः ॥

## एकचत्वारिंशः पटलः ।

अथ विमानस्थापनाविधिं वक्ष्ये । विमानं विधिवत् कृत्वा देवानेतान् प्रकल्पयेत् । मुखमण्डपाद् दक्षिणे तापसमुत्तरे सिद्धिदं विमानस्य दक्षिणतो मध्ये सत्यमूर्तिं पश्चिमेऽच्युतमूर्तिमुत्तरेऽनिरुद्धमूर्तिं मुखमण्डपे दक्षिणे मध्यभद्रे विनायकमुत्तरे विन्ध्यवासिनीमिति । एवं मूलतलैः स्थानमासनवद् द्वितीयतले पूर्वे चन्द्रं दक्षिणे नृसिंहं पश्चिमेऽप्यच्युतमुत्तरे वाराहं च कारयेत् । यस्मिन् विमाने चादितले मध्ये तृतीये च यथेष्टदेशे देवेशं नृसिंहं दक्षिणामुखं पश्चिमामुखं वा कारयेत् । सर्वशत्रुविनाशनं सर्वार्थसाधकमिति विशेषेणोक्तमेषामुद्देशं मानं मानाङ्गुलेनैकादशाङ्गुलं समारभ्य सप्तविंशतिमात्रान्तं द्व्यङ्गुलं वर्धयेत् । नवधा भवति । एतेष्विष्टमानेनांशेऽब्जं मृण्मयजलैष्टकं सौधमालेख्यं वा तस्योपरिष्टादालेपयेदिति विशेषः । शेषं समानम् । अस्मिन् विमानार्हदेवान् विमानपालद्वारपालांश्च श्रीभूम्यादिसर्वपर्षदानां च प्रतिमाकरणे तत्रायव्ययायत्तेष्टमिष्टप्रधाने बेरविमाने च स्थापनादिवसात् पूर्वमङ्कुरानर्पयित्वालयाभिमुखे दक्षिणपश्चिमे चोत्तरे च प्रपां कृत्वा विमानस्य परितो वा प्रागादिचतुर्दिक्षु चतुस्तोरणदर्भमालाद्यैरलङ्कृत्य प्रतिष्ठादिवसात् पूर्वं त्र्यहं द्व्यहं वा विमानदेवानामक्षिमोचनममन्त्रकं समन्त्रकं च कुर्यात् । अक्षिमोचनान्तं तस्यालयस्योत्तरेऽग्निकुण्डमौपासनं कृत्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यामालयं संशोध्य पुण्याहं वाचयित्वालयाभिमुखे चौपासनाग्निकुण्डं कृत्वाघारान्ते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं महाभूतदैवत्यं दद्भ्यः स्वाहेत्यङ्गहोमं विमानाङ्गहोमादिभिर्जुहुयात् । स्तूपीमुकुलाय पद्माय फलकाय मृणालिकाय मुष्टिबन्धाय वाजनाय उत्तराय कण्ठाय क्षेपणाय पङ्कजाय कुम्भाय वटुकाय क्षेपणाय वेत्राय क्षेपणाय फलकाय लह्निकाय कुम्भीकाय शक्तिध्वजाय पद्मनासिकाय फलकाय मृणालिकाय मुष्टिबन्धाय वाजनाय उत्तराय उत्तराय कण्ठाय ऊहप्रत्यूहभूमिकल्पाय वाजनाय व्रतवेन्तरताय गिङ्गाय शक्तिध्वजाय नासिकाय कर्णपालिकाय कपोताय वाजनाय वसन्ताय उत्तराय कपोताय वीरखण्डाय फलकाय.

वेत्राय उत्सन्धिकाय धृगाय कुम्भाय धृगाय अस्राय पद्माय हिकायै स्कन्धाय पद्ममालाय स्तम्भोत्तराय वेदिकाय महापट्टिकाय क्षुद्रपट्टिकाय खण्डिकाय कुमुदाय जगत्यै उपाय स्वाहेति व्याहृत्यन्तं हुत्वा विमानस्य प्रागादिचतुर्दिक्षु सवत्सां गां घृतमधुदधिक्षीरं चाष्टधान्यराशिं च सङ्कल्प्य प्रच्छन्नपटं कृत्वा देवानां चाक्षिमोचनं कारयित्वा तत् प्रच्छन्नपटं विसृज्य गवादिदर्शनद्रव्याणि दर्शयित्वाग्निं विसृज्य तत्काले तद्विमाने शुद्धं कुम्भं सूत्रेण वस्त्राभ्यां वेष्टयित्वा पूतवारिणापूर्य सुवर्णमक्षतकूर्चं च विक्षिप्येदमापः शिवा इत्यभिमृश्य विष्णुसूक्तेनापो हिरण्यपवमानाद्यैर्विमानं समभ्युक्ष्य पुण्याहं कारयेत् ॥

प्रतिष्ठोक्तदिनात् पूर्वमपराह्ने प्रागादि यज्ञशालां संशोध्य प्राच्यां मुखमण्डपपूर्वे समाहवनीयं विमानस्य दक्षिणेऽन्वाहार्यं पश्चिमे गार्हपत्यमुत्तरे चावसथ्यं च सङ्कल्प्य तस्यालयस्योपरि स्थलदेवानां प्रत्येकमौपासनाग्निकुण्डं तत्तदभिमुखे विमानस्य परितः कल्पयेदुत्तमम् । सभ्यादिपञ्चाग्नीन् परितः कल्पयेन्मध्यमम् । सभ्याग्निमेकमेव कृत्वाधममाचक्षते । सर्वदेवहोमानामाघारं हुत्वाघारान्ते द्रोणद्वयपूर्ण ... ... सङ्गृह्य त्रिगुणैकसूत्रेण वा वेष्टयित्वा शुची वो हव्येति प्रक्षाल्य धारासुसप्तेत्यपामुत्पवनं कृत्वाद्भिरापूर्य इदमापः शिवा इत्यभिमृश्य वस्त्रयुग्मेनावेष्ट्य पञ्चरत्नं सुवर्णं वाष्टमङ्गलपञ्चायुधवर्णाचिह्नान् पृथक्पृथग्विष्णुसूक्तेन प्रक्षिप्याभ्यन्तरं प्रविश्य ध्रुवबेरस्याभिमुखे धान्यराशौ कुम्भं संन्यस्याचार्यश्चोत्तराभिमुखो भूत्वा ब्राह्ममासनमास्थाय प्राणायामं च कृत्वा समाहितो ध्यायन् ध्रुवबेरात् कुम्भेऽम्भसि तद्विमानं सम्यगावाहयेत् । यस्माद् देवेशं विष्णुं सर्वेषां प्राणभूतत्वात् सर्वधनाच्च तद्विमाने ध्रुवबेरादायनोद्वासनं कारयति । पश्चात् शकुनसूक्तं समुच्चार्य कुम्भमानीय तस्यालयस्याभिमुखे तस्याग्निकुण्डस्य पश्चिमे धान्यवेद्यां वस्त्राणि चास्तीर्य तस्मिन् कुम्भं संन्यस्यालयस्य परितश्चतुर्विंशतिकलशन्यासार्थं धान्यैः पङ्क्तिं कृत्वा तस्मिन्नैशान्यादि पञ्चगव्यघृतमधुदधिक्षीरगन्धोदकाक्षतोदकफलोदककुशोदकरत्नोदकदिव्योदकसर्वौषध्युदकं प्रत्येकमुपस्नानं च यथाक्रमेण

विन्यस्याधिदेवान् समाराध्य यथोक्तमन्त्रैर्विमानस्य पादमूले प्रदक्षिणवशेनाभ्युक्ष्य विमानं विष्णुमयं देवावासं वैकुण्ठोद्भवमिति चतुर्मूर्तिमन्त्रैरग्न्यामभ्यर्च्य हेमादिपात्रे तण्डुलोपरि न्यस्य प्रतिसरं त्रिवृतं सूत्रमादाय पुण्याहान्ते स्वस्तिसूक्तेनाभिमृश्य स्वस्तिदा विशस्पतिरिति तस्य पादमूले प्रतिसरं बन्धयेत् । विमानस्य शयनार्थं तस्यैव परितः शय्यावेदीं हस्तायतविस्तारं द्विभागोत्सेधं व्रीहिभिर्वेदिं कृत्वा नववस्त्रैः स्थूप्याद्युपानान्तं तदंशावसानकं वा निश्छिद्रं परिवेष्ट्य यद् वैष्णवमिति शयनं सङ्कल्प्य चतुर्दिक्षु वेदाध्ययनं कृत्वा सभ्याग्निं समुज्ज्वाल्य तस्मिन् हौत्रं प्रशंस्य दक्षिणप्रणिधौ विमानं विष्णुं देवावासं वैकुण्ठोद्भवमिति चोत्तरप्रणिधावालयाङ्गदेवान् यक्षादीनिन्द्रादिलोकपालांश्चावाह्यावाहनक्रमेण जुष्टाकारस्वाहाकारं च कृत्वा पश्चाद् वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तदालयगतदैवत्यं च हुत्वा चावहनीये पुरुषसूक्तं न्यक्षदैवत्यमन्वाहार्यविष्णुसूक्तं विवस्वन्तदैवत्यं गार्हपत्ये वैष्णवं मित्रदेवत्यमावसथ्ये चैकाक्षरादिसूक्तं क्षत्तारं मन्त्रानालयोपरि स्थलदेवतानां तत्तद्धोमे तत्तद्दैवत्यं दशापर्यायतो जुहोति । नृत्तगेयैश्च वाद्यैश्च रात्रिशेषं नयेत् । प्रभाते स्नात्वाचार्याद्यालयमाविश्य प्रदक्षिणं कृत्वा देवं प्रणम्य मुहूर्ते सम्प्राप्ते तदाचार्यं वस्त्रोत्तरीयाद्यैरलङ्कृत्य दक्षिणां दत्त्वा सर्वानग्नीन् विसृज्याचार्यः शिरसा कुम्भं धारयन् सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुक्तमालयं प्रदक्षिणीकृत्य कुम्भं विमाने समारोप्य तस्य मूर्धन्यायातु भगवानिति मन्त्रान्ते विमानं विष्णुमयं देवावासं वैकुण्ठोद्भवमिति चतुर्भिर्मन्त्रैः समावाह्य पश्चाद् विमानगतदेवांस्तत्तन्मन्त्रेणावाहयेत् ॥

एवं विमानप्रतिष्ठा महाप्रतिष्ठाफलं लभेत । तस्माद् देवेशेन सार्धं वा यत्नेन कारयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानप्रतिष्ठाविधिर्नाम एकचत्वारिंशः पटलः ॥

## अथ द्विचत्वारिंशः पटलः ।

अथ देव्योः श्रीभूम्योः पृथक्पृथक् प्रतिष्ठाविधिः । ध्रुवं देवीसमायुक्ते युक्ते वा कौतुकस्य पश्चाद् देव्योः स्थापनां कारयेत् । कौतुकस्य देवीसमायुक्ते वा चोत्सवस्य श्रीदेव्या सहितं स्थापयेद्यत् तद्ग्रामसमृद्धिर्भवति । यद्द्रव्येण कृतं देवं तद्द्रव्येण देव्यौ च कारयेत् । हीनाधिकद्रव्यैर्नाचरेत् । स्थानके स्थानकमासने चासनं देवस्य बाहुमानं स्तनान्तं कर्णसीमान्तं वा यथोक्ततालक्रमेण देव्यौ सम्यक् प्रकल्पयेत् । स्थापनादिवसात् पूर्वमङ्कुरानर्पयित्वा पूर्ववदक्षियोधनाधिवासनादींश्च कृत्वालयाभिमुखे यागशालां तन्मध्ये दक्षिणे श्रीदेव्याः शय्यावेद्यां द्विहस्तायतविस्तारां तुरीयांशोत्सेधं तत्प्राच्यां स्नपनश्वभ्रं च कारयेत् । तन्मध्ये चोत्तरे शय्यावेदीं तथैव महीदेव्यां तत्प्राच्यामौपासनाग्निकुण्डं तत्स्नानश्वभ्रं च कृत्वाधिवासनगतौ देव्यौ समादाय शुद्धोदकैः संस्नाप्य वस्त्राद्यैरलङ्कृत्य यस्य पश्चिमे विष्टरे देव्यौ संस्थाप्य द्वयोरौपासनाग्निकुण्डे चाघारं कृत्वाघारान्ते द्वौ कुम्भौ सङ्गृह्य पूर्ववत् तन्तुना परिवेष्ट्याद्भिः प्रक्षाल्याधावैरापूर्य पञ्चरत्नाष्टमङ्गलवर्णचिह्नानि पूर्ववत् प्रक्षिप्य वस्त्रयुग्मेनावेष्ट्याभ्यन्तरं प्रविश्य पूर्ववच्छ्रीदेव्या अभिमुखे धान्यराशौ कुम्भं संन्यस्य पश्चान्महीदेव्या अभिमुखे तथा कुम्भं संन्यस्य ध्रुवबेरात् कुम्भेऽम्भसि समावाह्य द्वौ कुम्भौ समादाय शकुनसूक्तं जप्त्वा देव्या सह स्नानश्वभ्रे देव्यौ च प्रतिष्ठाप्य पूर्ववत् सप्तकलशैः संस्नाप्य वस्त्राद्यैर्विभूष्याभ्यर्च्य शय्यावेद्यां धान्योपरि पूर्ववत् प्रत्येकमण्डजादीनि पञ्च शयनानि वासांसि वास्तीर्य याने समारोप्य पुण्याहं कृत्वा पूर्ववत् प्रतिसरान् बद्ध्वा तत्तन्मन्त्रेण शाययित्वोत्तराच्छादनं कृत्वा पश्चाद्धोतारमाहूय तयोः प्राच्यां तिष्ठन् हौत्रं प्रशंस्य प्रत्येकं होमाध्वर्यू तत्तद्देव्योर्मूर्तिमन्त्रं जयाद्यप्सरसश्चावाह्यावाहनक्रमेण निर्वाप्याहुतीर्हुत्वा दक्षिणेऽग्निकुण्डे श्रीसूक्तं श्रीदैवत्यं जयाद्यैर्मूर्तिमन्त्रैस्तस्योत्तरेऽग्निकुण्डे महीसूक्तं महीदैवत्यं तथा जयाद्यैश्च जुहुयात् । पश्चान्नृत्यगेयाद्यै रात्रिशेषं व्यपोह्य प्रभाते स्नात्वालयमाविश्य देव्यौ समुत्था-

प्याभ्यर्च्याभ्यन्तरपीठे पञ्चरत्नान् सुवर्णं वा निक्षिप्याचार्यादिभ्यो दक्षिणां दत्त्वाग्नीन् विसृज्य मुहूर्ते प्राप्ते तदाचार्यः श्रीदेव्याः कुम्भं शिरसा धारयन्नग्रतो गच्छेत् । स्थाप(का ? को) देव्यौ समादायानुगच्छेत् । सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुक्तं देवागारं प्रविश्य ध्रुवस्याभिमुखं द्वौ कुम्भौ संन्यस्य कौतुकस्य दक्षिणवामयोः कृते पीठे देव्यौ तत्तन्मन्त्रेण संस्थापयेत् । आचार्यश्चोत्तराभिमुखस्तिष्ठन् ध्रुवबेरवदक्षरन्यासं च कृत्वा पूर्वे श्रियं श्रिये जातेत्यायातु भगवतीति देवीं मूलप्रकृतिरूपिणीमित्यन्ते मूर्त्तिमन्त्रान् संयोज्यावाहयेत् । पश्चान्महीदेवीमित्यायातु भगवतीति देवीं प्रकृत्यंशं स्वरूपिणीमित्यन्ते हरिणीत्यादिमूर्त्तिमन्त्रानुच्चार्यावाह्य पश्चात् कौतुकयोरक्षरन्यासं च कृत्वा तद्ध्रुवबेरयोर्देव्यौ ध्यायन् दीपाद् दीपमिव पूर्ववदावाहयेदस्त्वासनमित्यासनं दत्त्वा पुण्याहं वाचयित्वा नित्यार्चनाविधानेन सह देवीभ्यामभ्यर्च्य हविर्निवेद्य पञ्च प्रणामान् कुर्यात् । तत्तद्देव्योः पृथक्पृथक्त्वे पृथगेवं कारयेत् ॥

अथ देव्योर्वैवाहिकक्रियाविधिः । देव्यौ च नवबिम्बप्रतिष्ठासमाप्त्यनन्तरे विवाहक्रियां कारयेत् । यजमानो ऋत्विजश्च स्वगृहे देवालये वा यागशालां कृत्वा यथाविभवमलङ्कृत्य तन्मध्ये दक्षिणे श्रीदेवीं वामे महीदेवीं चौपसनाग्निकुण्डं स्थण्डिलं वा कृत्वा द्वयोरेकं वा कारयेदिति केचित् । शुभे मुहूर्ते समनुप्राप्ते पूर्ववद् देवमानीय शुभासनस्थितमर्पयित्वा फलोपहारताम्बूलादीन् निवेद्याचार्यः परिचारकाद्यैः सह देवमलङ्कृत्य यानमारोप्य शङ्खभेर्यादिनृत्तगेयस्तोत्रध्वनिघोषसमायुक्तं देवमानीय यागशालां प्रविश्याग्निकुण्डस्य पश्चिमे महार्हसंस्तरणपर्यङ्कोपरि देवं प्राङ्मुखं संस्थाप्य राजवदुपचारं च कृत्वा यजमानो बान्धवैः सह देवेशं प्रणम्याचार्यं पूजयित्वाचार्यो देवं पाद्याद्यर्घ्यान्तमर्चयित्वा मधुपर्कं च निवेद्य वैखानससूत्रोक्तविधिना विवाहक्रियां कारयेत् । आचार्यश्चात्मसूक्तं जप्त्वा देवं ध्यायन् एकाक्षरादीन् विष्णुसूक्तं पुरुषसूक्तं वैष्णवं च जपेयुः । देवेशं प्रणम्य प्रद्युम्नेति देवो देवीमीक्षेताभ्रातृघ्नीमिति देवं देवी प्रेक्षेत । आचार्येणाघारं हुत्वा कन्याप्रदानसमये देवसन्निधावानीय श्रियः प्रदाता

यजमानः वात्मानं भृगुं स्मृत्वा मूलप्रकृतिरूपामयोनिजां कृष्णानां भृगुपुत्रीं भार्गवीं श्रियं विष्णवे तुभ्यं ददामीति चोक्त्वा सुवर्णगोभूमियुतं जलं दद्यात् । धरण्याः प्रदाने यजमानः स्वात्मानं प्रजापतिं स्मृत्वा विष्णोः पुराणमहिषीं प्रकृत्यंशभूतां काश्यपीं प्राजापत्या रुद्रमन्यं त्र्यम्बकमिति द्वौ रुद्राय जगद्भुवमिति षट् कुमाराय जातवेदस इत्यादिभिर्दुर्गायै नन्दिन्या मूलापो विवेशं शाखा भूतदेवीं प्रवाहिनीनिसो भूत्वा प्रविद्युतास्या गङ्गा वाणी विद्मनोमानुमामेना वमे यो मा महत्यावासतः सत्यं प्रसव्यनं गेयाभ्यो हि श्रमानसमिति चतुर्दशमन्त्रान् रोहिणीभ्यः, यतः स्वमासीत्तस्मा इति भृगवे कस्याङ्गिराभूद् विस्मापल इति मरीचये व्याघ्रधेने यः सस्मार स इति पुलहाय य एषो दा अनन्दरो दैत्य इति पुलस्त्याय प्रप्रायशोये निष्यन्ता इति क्रतवे यो नो वसिष्ठः सप्तोत्तमायेति वसिष्ठाय य आनसूयेशे य एष इत्यत्रये स एकोऽभूद् यत्रैषु भस्येत्याकाशाय प्रक्रम्यायो मातरिश्वेति वायवे वृषाकपेरोजोऽभिमानीत्यग्नये आपो विश्वं चातुर्यमिति तोयाय तथा यादि आदित्यं त्रीण्येवेति पृथिव्यै पावकानो महो अर्ण इति सरस्वत्यै शंतानिहूयामीति श्रियै य उत्तमोऽग्रेः पथायमिति न्यक्षाय यमर्पयन्ति यः संहरति विवस्वते ऋचामधीशो नीतं धृतमिति [illegible] येनायुः सम्भवे महीधराय चरुं पचेत् चूर्णा हीति हरीरक्षकाय चामुण्डी या लोक इति ब्रह्माण्यै त्रैनेत्रदेवि चिनुहीति गणेश्वर्यै ज्वालामालाकरालिनीति पण्मुख्यै युगे युगे सर्वमेति वैष्णव्यै कलेभ्यमेभिरिति वाराह्यै सा सर्वमालाधरी गेतीतीन्द्राण्यै चण्डी हरिगौरीति काल्यै धातास्य फुल्लेति पुष्परक्षकाय विश्वान् वलेसौचयोकृतेति बलिरक्षकाय आग्नेया प्रेऽग्राम इति विष्वक्सेनाय शतधारं कदापि रूकजा इति गरुडाय धर्मोधमादयो गन्ध इति विघ्नाय यमर्पयन्ति शन्नो निधत्तामित्यनन्ताय भूमानुनोग्रे वन्ध्यान इति सुदर्शनाय असेग्र अग्रओजो वलेति ध्वजाय तन्मायशोऽग्रेऽस्मादुपस्येति शङ्खाय भूतानां भूतो भूतो भूतिरिति महाभूताय अक्षहान्ते ये भूता इति विष्णुभूताय अत्रानुक्तान् देवांस्तत्तन्मन्त्रेण वैष्णवं हुत्वा व्याहृतीर्जुहोति । यस्य देवस्य स्वकं मन्त्रं न विद्यते तस्य नाममन्त्रं वै-

ष्णवं जुहोत्याहवनीये पुरुषसूक्तं मार्कण्डेयभृगुभ्यां मन्त्रमाग्नेयमन्वाहार्ये विष्णुसूक्तं ब्राह्मे याम्ये नैर्ऋतं गार्हपत्येऽतो देवादिवैष्णवं श्रिये जातो मेदिनीं देवीं वारुणीं वायव्यमावसथ्ये चैकाक्षरादीन् कौबेरमीशानदैवत्यं द्वादशाष्टचत्वारो वायव्यतो जुहोति विष्णुसूक्तेऽन्यत् पौण्डरीके विष्णुगायत्र्याऽब्जशतं बिल्वपत्रं वा घृताक्तं जुहुयात् । विष्णुसूक्तं ब्राह्मं विष्णुः सर्वेषामधिपतिरित्यादिपारमात्मिकमन्त्रैरतो देवादिवैष्णवान्तं हुत्वा परिवाराणां तत्तद्धोमेषु तत्तन्मन्त्रं वैष्णवं द्वादशाष्टचत्वारो वा पर्यायतो जुहोति । विष्णुसूक्तेन पञ्चाग्निषु दधिक्षीरघृतलाजैर्युक्तमुपजुह्वा हुत्वा सभ्याग्निं पौण्डरीकाग्निं विना सर्वानग्नीनन्ते होमं हुत्वाग्निं विसृज्य नृत्तगेयवाद्याद्यैश्च रात्रिशेषं यापयेत् ॥

ततः प्रभाते स्नात्वाचार्यः स्थापकादीं स्नात्वाचम्य सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं च कृत्वा देवालयं प्रविश्य प्रतद्विष्णुस्तवतेति स्वात्मप्रदक्षिणं कृत्वा यज्ञालयं प्रविश्य भगवतो बलेनेति देवं प्रणम्य विष्णुसूक्तेन शयनाद् देवमुत्थाप्य वस्त्रमाल्यादीनि विमोच्य तद्ध्रुवात् स्नपनोत्सवबलिबेराणां पूर्ववद् ध्यायन् आवाहयेत् । एष विशेषोऽन्यत् समानम् । तेषामपि पृथक्पृथक्त्वे पृथगेव समाचरेत् । स्नपनोत्सवबलिबेराणां प्रतिष्ठा चेद् रात्रौ स्नपनोक्तक्रमेण स्नपनं कारयेत् । औत्सवबलिबेरप्रतिष्ठा चेत्, उत्सवोक्तक्रमेण महोत्सवमेकाहिकोत्सवं वा कारयेत् । बलिबेरप्रतिष्ठा चेत् काले बलिभ्रमणं कारयेत् । एवं यः कुरुते भक्त्या, तस्य महाप्रतिष्ठाफलं लभेरन्निति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते देव्योः पृथक् प्रतिष्ठादि स्नपनोत्सवबलिबेराणां पृथक्प्रतिष्ठाविधिर्नाम-
द्विचत्वारिंशः पटलः ॥

---

## अथ त्रिचत्वारिंशः पटलः ।

अथ विष्णोर्नित्यार्चनम् । मन्त्रेण स्नात्वाचम्य कृतप्राणायामः सावित्रीं जप्त्वा सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं च कुर्यात् । प्रतद्विष्णुस्तपत इति देवालयं गत्वा प्रदक्षिणं करोति । द्वारपालं प्रणम्य कवाटबन्धं यन्त्रिकया निरस्तामिति स्पृश्य

हिरण्यपाणिमिति कवाटमुद्धाटयति । दिवं त्रिवृणोत्वित्यन्तः प्रविश्य वैष्णवैर्मन्त्रैर्देवं प्रणम्य शुभ्रा ज्योतिरिति दीपानुद्दीप्य शाम्यन्त्विति पाणिना दक्षिणेन वा सन्ताड्य भगवतो बलेनेति देवं प्रार्थयति । परिचारकः स्नात्वा कुम्भमादाय दुहतां दिवामिति गत्वा नद्यां तोयं दिवः शुद्धादभिगृह्णामीति सङ्गृह्य तद्भ्रदात् तटाके कूप वा सोमं राजानमित्यालयं प्रविश्य धौतवस्त्रेण धारासु सप्त इति तोयमुत्पूय, उशीरादिगन्धैर्वासयित्वा इदमापः शिवा इति कुशेनाभिमन्त्र्यावधूतमिति मार्जन्या मार्जयित्वा शासु सप्त इति गोमयेनोदकेन प्रोक्ष्योपलिप्य आमात्राजस्येति प्रणिधिमर्घ्यपात्राणि हविःपात्राणि प्रक्षाल्य विधिना हवींषि चोपदंशांश्च पाचयित्वा अर्चको ब्रह्म ब्रह्मेति हृदयं न्यस्य द्यौर्द्यौरसीति शिरसि चाभिमृश्य शिखेति शिखामुद्वर्तयन् देवानामायुधैरिति सर्वत्र कवचं कृत्वा दक्षिणहस्ते सुदर्शनं धारयति । रविन्नामिति वामहस्ते शङ्खं धारयति । हस्ततलयोर्दक्षिणेऽर्कं वामे चन्द्रमण्डलं न्यस्य अद्भुरण्यं निधिं यज्ञं प्राणं देवेन्द्रमित्यङ्गुष्ठाद्यङ्गुलीषु संन्यस्याकारं हृदये न्यस्यान्तरस्मिन्निमेति ब्रह्माणं स्मृत्वाहमेवेनमित्यनुमान्य भूतस्त्वमेति निर्माल्यमपोह्य पीठवेदिमद्भिराप्लुत्य परिमृज्य नारायणाय विद्महे इति ध्रुवस्य पादपुष्पं पञ्चमूर्तिमन्त्रैर्दत्त्वा देवेशस्य निर्माल्यं विष्वक्सेनाय दत्त्वान्येषां निर्माल्यं विसर्जयति । भूः प्रपद्येति देवेशं प्रणम्यानीय द्वारोत्तरपार्श्वे पूर्वे वा प्रथमावरणे स्नानपीठे परं रंह इति आस्थाने स्थाप्यालङ्कारक्रियां कृत्वा इषे त्वोर्जे त्वेति जपन् बिम्बं यथाशुद्धमाम्लाद्यैः संशोध्य शुद्धोदकैः संस्नाप्य चन्दनोदकैरभिषिच्य धौतवस्त्रेण मूर्धाद्यङ्गं विमृजेत् । परिमृष्टेऽर्चापीठे देवेशं प्रतिष्ठाप्य वस्त्राभरणोपवीतैरलङ्कारं कुर्यात् । विभवे सति तु स्नपनविधिना संस्नापयेत् ॥

पवित्रपाणिश्चन्दनाद्यैरूर्ध्वपुण्ड्रं कृत्वा संयुक्तमेतदिति ध्रुवकौतुकयोः सम्बन्धकूर्चं प्रक्षिप्य विष्णुगायत्र्या पीठं प्रोक्ष्य तया ध्रुवस्य पादयोर्मध्ये विष्णवे नम इति पुष्पं दद्यात् । प्रागादिचतुर्दिक्षु पुरुषसत्याच्युतानिरुद्धायेति क्रमेण पुष्पन्यासमाग्नेयादिकोणेषु कपिलाय यज्ञाय नारायणाय पुण्यायेति परितः प्रागाद्यैशानान्तं, वाराहाय सुभद्राय नारसिंहाय ईशितात्मने वामनाय सर्वोद्वहाय त्रिविक्रमाय सर्वविद्येश्वरायेति अष्टादिक्षु न्यस्य पीठाधः परितः पूर्वा-

दन्द्रिमाग्नेयं यमं निर्ऋतिं वरुणं वायुं कुबेरेशानायेति तत्तद्देशे तत्तन्नाम्ना प्रणवादिनमोन्तं पुष्पन्यासं ध्रुवे स्थिते चैवं करोति। आसीने प्रसारितपादस्य परितः शयानेऽप्यनन्तोर्ध्वे पादपार्श्वे चैवं कुर्यात्। देव्योश्च नाममन्त्रैः कौतुकस्थाने प्रागादि सुभद्राय सर्वाय हयात्मकाय सुखावहाय रामदेवाय संवर्ताय पुण्यदेवाय सुवहायेतीशानान्तं संन्यस्य पीठान्ते प्राच्यादि मित्रं सनातनं मित्रं सनन्दनं शिवं सनत्कुमारं विश्वं सनकमिति बहिर्मुखान् संन्यस्यार्चयेदिति केचित्। पूर्ववदिन्द्रादीन् संन्यस्य दक्षिणे मार्कण्डेयं वामे भृगुं तथा भित्तिपार्श्वे ब्रह्माणं शङ्करं च द्वारे धात्रादिद्वारदेवद्वारपालश्रीभूतवीशामितांश्चान्यांश्च पर्षदान् यथोक्तदेशे पूर्ववदर्चयत्यावाहनपाद्याचमनस्नानोदकार्थं च पञ्च चतुस्त्रीणि द्वावेकं वा गृहीत्वा साग्रकुशान् तीर्थकूर्चान् वा निक्षिप्याद्भिः प्रणवेन पूरयित्वा कुडुवसम्पूर्णान्यर्घ्यपात्राणि सौवर्णराजतताम्रकांस्यान्यतमान् पञ्चालाभे द्वावेकं वा तस्मिंश्चन्द्रमभ्यर्च्य पात्राणि संशोध्य तण्डुलत्रीहि-माषयवसर्षपमिश्रमक्षतं प्राहुः। तत्पूर्वे सिद्धार्थकं तिलं कुशाग्रं दधि क्षीरं घृतं च प्रक्षिप्य गायत्र्या सर्वैः समेनाद्यावेन पूरयत्यर्घ्यमेतत्। पात्रे पुष्पाण्यादाय जलेन पिष्टेन चन्दनं गन्धं गुग्गुल्वगरुकोष्ठचन्दनघनगृन्गुलमिश्रं यथालाभं धूपार्थं पिचुवर्तियुतं घृतेन तैलेन वा दीप्तदीपं च सम्भारान् सम्भरति। सूतादिप्रतिलोमापतिता. पाषण्डिनोऽप्यर्चनं हविर्निवेदनं च वीक्षणं नैवार्हन्ति। तस्माद् यवनिकया समावृणोति॥

स्वस्तिकमेकजानुं वा समासीन उदङ्मुखः प्राङ्मुखो वा पार्श्वे बिम्बार्हस्तिष्ठन् वा प्रणम्यात्मसूक्तं जप्त्वा बिम्बस्य मूर्धनि नाभिपादेषु भूर्भुवः स्वरिति विन्यस्य हृदये प्रणवेनादिबीजं च पादमध्ये पीठे यकारं संन्यस्य प्राणिधिमुद्धृत्य दीपाद् दीपमिव ध्रुवबेरात् प्राणिधिजले भक्त्या प्रणवात्मकं विष्णुं रुक्माभं रक्तनेत्रास्यपाणिपादं चतुर्भुजं शङ्खचक्रधरं शुक्लाम्बरधरं किरीटकेयूरहारप्रलम्बकटकाङ्गुलीयककटिसूत्रोदर(ब)न्धयज्ञोपवीतिनं श्रीवत्साङ्कमेवं सकलं ध्यात्वा तस्यामृतोयं कूर्चेनेदं विष्णुरायातु भगवानित्यावाह्य

प्रणवेन कौतुकमूर्ध्नि विष्णुमावाहयामीति संस्राव्य पुरुषसत्याच्युता-निरुद्धमूर्तिमन्त्रैः संस्राव्यावाहयति । तथा स्नपनोत्सवे च कौतुकाद् दक्षिणे देवीं श्रियं वामे महीमावाहयेत्। अथवा बेरे समावाहनं नित्यं नैवेति केचित्। अत्रापश्यन् देवं ध्यायन् पीठान्ते प्रतद्विष्णु-रस्त्वासनामिति पुष्पं दर्भं वासनं सङ्कल्पयति । विश्वाधिकाराना-मित्यभिमुखे स्वगतं ब्रूयात् । मनोभिमन्तेत्यर्चायामनुमानं यावे त्रीणि पदा इन्द्रोऽभिमन्तेति पादयोः शिखाग्रे कूर्चेन वा पात्राज्जलं स्रावयित्वा शंनोदेवीरिति तथा दक्षिणे हस्ते तोयदानमाचमनीयं तद्विष्णोः परमामिमाः सुमनस इति मूर्ध्नि भुजयोर्दक्षिणादिशङ्खचक्रयोः पादे च पुष्पं दद्यात्। तद्विप्रास इमे गन्धा इति ललाटे ऊर्ध्वाग्रमा-लिप्य बाह्वोर्वक्षसि कण्ठे नाभेरूर्ध्वं वा तेनालङ्कारो मात्रया इमे धूपा इति चतुर्दिक्षु धूपयेद् धूपम् । विष्णोः कर्माणि शुभ्रा ज्योतिरिति पार्श्वे दर्शयेद् दीपम् । अग्निरिन्द्रेत्यभिमृश्य पात्रमुद्धृत्य त्रिर्देव इन्द्रियाणीति मधुपर्कवदर्घ्यं निवेद्य द्रव्यालाभे तोयं पत्रालाभेऽक्षतं कू-र्चेन तोयदानं वा पूर्ववदाचमनं दद्यात् । आपोहिष्ठेति स्नानाभ्यु-क्षणं कृत्वा मित्रः सुपर्ण इति प्लोतं तेजोवत्सव इति च वस्त्रं भूतोऽ-भूतस्वित्याभरणं सोमस्य तनूरसीत्युत्तरीयमग्निं दूतमित्युपवीतं देवं ध्यायन् तत्तद्द्रव्यं च सङ्कल्प्य तत्तदङ्गे पुष्पं वार्पयेत्। पूर्ववत् पाद्या-चमनपुष्पगन्धधूपदीपाचमनं पञ्चमूर्तिमन्त्रेण द्रव्यं संयोज्य ददा-मीति सन्दद्यात्। एकः पुरुषः पञ्चभिः संज्ञाभेदत्वात् सर्वं मनसा पञ्चधा सङ्कल्प्य पञ्चनामाभिरेव कुर्यात् । देव्योः स्नपनोत्सवब-लिबेराणामेकमूर्तिमन्त्रैर्वार्चयति पर्षदानां मन्त्रैर्यथालाभमर्चनं स्यात् ॥

अथावनीदमिति प्रमुखे मण्डलमुपलिप्य हविःपात्रं सङ्गृह्या-धिदैवमादित्यमभ्यर्च्य पात्रं संशोध्य देवस्य त्वेति घृतेनाभिघार्य गायत्रीं वैष्णवीं जपन् स्थाल्यां चतुर्भागं पात्रे प्रक्षिप्य एकं हित्वा यथोपदंशात् घृतगुलदधिफलं च प्रक्षिप्य मण्डले निधाय तस्मिन् हर्वीषि सुगन्धमुत्पूतं गव्यघृतं देवस्य त्वेत्यास्राव्याहमस्मीत्यभिमृश्य तदस्य प्रियं शुभ्रस्वयमिति हविर्निवेद्य देवीभ्यां स्नपनोत्सवादिभ्यो निवेदयेत् ॥

भाजमृत्कुटिकासनं वासीनोऽग्निकुण्डे चुल्ल्यां वाग्निं परिषिच्य देवेशाय साज्यं चरुम् अतोदेवाद्यैर्मूर्त्तिमन्त्रैश्च जुहुयात् । देव्यादि-तदालयगतेभ्यः पर्षद्भ्यस्त्रिकालं जुहुयात् । उत्तमे प्रातर्मध्याह्नयो-र्देवाय देवीभ्यां ब्रह्मेशानाभ्यां मध्यमे (चैतेभ्यो मध्याह्नयोर्देवाय देवीभ्यां ब्रह्मेशानाभ्यां मध्यमे?) चैतेभ्यो मध्याह्न एवाधमं वा जुहोति । पुनश्चाग्निं परिषिच्याशक्तः कुण्डादग्निं समारोप्य लौकिकाग्नौ निधाय जुहुयात् । शिष्येण सह तिष्ठन् तत्तद्देशे मणिकादिद्वारपालेभ्यः श्रीभूतवींशाद्यनपायिभ्यो दिग्देवेभ्यो विमानपालेभ्यो महाभूतान्तं प्रणवादिनमोन्तेन तत्तन्नाम्ना पूर्वमुदकं पुष्पं बलिमुदकं दत्त्वा पीठस्य दक्षिणतो भूतयक्षपिशाचनागेभ्यो बलिशेषं दत्त्वा देवेशाय इदं विष्णुरिति शीतलं वारि पानीयं दत्त्वा निवेदितमपनीय तत्र मण्डलं विसृज्य पाणी प्रक्षाल्य तथैवाचमनं विचक्रमे ताम्बूलादिमुखवासं दद्यात् । विधिना बलिमाराध्य बलिबेरं प्रदक्षिणं करोति ॥

विष्णुसूक्तेन मास्तकं सम्पुटं प्रह्वाङ्गं पञ्चाङ्गं दण्डाङ्गमिति पञ्च प्रणामान् कुर्यात् । स्वस्तिकं मस्तकेऽञ्जलौ न्यस्ते, मस्तकाद्धृदयेऽञ्जलिः सम्पुटं पाणी व्यत्यस्य हृदये न्यस्यानतगात्रं भवेत्, स प्रह्वाङ्गः । पादाङ्गुलिभ्यां जानुभ्यामासीनो साञ्जली भूमौ ललाटं निदध्यात् पञ्चाङ्ग । पादौ हस्तौ प्रसार्य साञ्जली भूमावधोमुखो दण्डवच्छेते स दण्डाङ्गः । पुरुषसूक्तेनैकाक्षरादिना संस्तूयाष्टाक्षरेण पुष्पाञ्जलिं ददाति । सूर्यश्चेति कवाटौ बन्धयति । मध्याह्ने साये च पूर्ववत् कवाटमुद्धाटयति । द्वारार्चितपुष्पादीन्यपास्याभ्युक्ष्य ध्रुवबेरस्य पादपीठे न्यस्तं पुष्पादीन्यनुद्धृत्योपरि पूर्ववत् पुष्पन्यासं कृत्य निश्चिते तानि निर्माल्यानि भवन्ति । तथैव धात्रादिद्वारदेवांश्चाभ्यर्च्य कौतुकादिबिम्बेऽर्चितानि पुष्पाण्यादाय तत्तत्पीठपार्श्वे निधायोत्तरे सर्वैरुपचारैरर्चयति । मध्यरात्रौ स्नानाद्यैरुपवीतान्तैर्विनाचामे पाद्यार्घ्याचमनान्तैर्हविराद्यैरर्घ्यामे पुष्पान्यासहोमे बलिदामबल्युद्धरणान् न कुर्वीत । अन्त्यवेलायां कौतुकादिभ्यो ध्रुवबेरे देवमोङ्कारेणार्चितः स्मृतः समारोपयति । प्रादुर्भावाणां च तत्तन्मन्त्रेषु तत्तन्मूर्तिमन्त्रं

संयोज्यार्चयेत् । नवपञ्चमूर्तिविधाने विष्णुमादिमूर्तिं पूर्ववदर्चयति । पुरुषमूर्तेरापोहिष्ठेत्याचमनं हिरण्यगर्भ इत्यर्घ्यदानं हविर्निवेदनं च सत्यमूर्तेर्योगे योगेत्याचमनं इदमापः शिवेत्यर्घ्यमिह पुष्टिरिति हविरच्युतमूर्तेः समाने वृक्ष इत्याचमनं तत्पुरुषायेत्यर्घ्यं समापवर्तिरिति हविरनिरुद्धमूर्तेः पवित्रतेत्याचमनं येनश्चित्रेत्यर्घ्यं त्रीणि पदेति हविर्दद्यात् । नरनारायणनारसिंहवाराहाणां तत्तन्मूर्तिमन्त्रं संयोज्यार्चयति । ध्रुवार्चनायाः पूर्ववद् ध्रुवकौतुकयोः पुष्पन्यासविधानेन पुष्पन्यासं च कृत्वा द्विकालमेककालं वा स्नात्वाभ्यर्च्यावाहनविसर्गं च न कुर्यात् । एष विशेषोऽन्यद् देवानां च क्रमेणार्चने मन्त्रेण च विशिष्टो भवतीत्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
नित्यार्चनाविधिर्नाम त्रिचत्वारिंशः पटलः ॥

---

## अथ चतुश्चत्वारिंशः पटलः ।

अथ बलिविधिः । ताम्ररजतरौक्मं वा बलिपात्रमार्यहस्तात् त्रिंशदङ्गुलविस्तारं भुवङ्गार्धं वा समवृत्तं तत्परितश्चैकद्व्यङ्गुलोन्नतसीमावृतं मध्ये कर्णिकाकारमष्टाङ्गुलायतद्व्यङ्गुलोन्नतवृत्तं तत्परितो द्व्यङ्गुलायतैरष्टदलैर्युक्तं च कारयति । द्विप्रस्थैः शुद्धैस्तण्डुलैश्चरुं पक्त्वा पूर्ववत् प्रक्षाल्य पात्रमभ्यर्च्य संशोध्य चरुं प्रक्षिप्याभिघार्यान्नं सम्मर्द्य कर्णिकारे द्वादशाङ्गुलं दशाङ्गुलमष्टाङ्गुलोन्नतं वा मूलद्विगुणपरीणाहमग्रे तदर्धमेवं बलिं कृत्वा देवाभिमुखे निधाय पूर्ववत् कौतुकात् बलौ ध्यात्वा योगेशं परब्रह्माणं परमात्मानं भक्तवत्सलमिति चतुर्मूर्तिमन्त्रैः समावाह्य तथासनाद्यैरेकोपचारैरर्चयत्येवमुत्तमे । अधिकान्नबलिर्मध्यमे प्रातर्मध्याह्नयोरधमे मध्याह्नेऽन्नबलिरेव । सायंप्रातरन्नाभावेऽक्षतं कुडुवं यथालाभं वाक्षतं निधायाक्षते देवमावाह्यार्चयति । तत्काले देवगणिकादेवदासीः समाहूय नृत्तमण्डपमध्ये मण्डलमुपलिप्याप्सरांश्चावाह्याभ्यर्च्य तानप्सरसः स्मृत्वा प्रोक्ष्य पुष्पं दत्त्वा तैर्नृत्तगेयं च कारयति । पश्चाच्छिष्यमाहूय कटकाङ्गुलीयोत्तरीयोष्णी-

षादिभिरलङ्कृत्य गरुडं बुद्ध्वाराध्यातोदेवादिना देवमनुमान्य उद्यन्तमिति बलिमुद्धृत्य देवस्य त्वेति शिष्यशिरसि स्थापयित्वा व्यञ्जनैर्धूपदीपैर्हेमादिपरिच्छदैर्यथाशक्त्यालङ्कारैर्भक्तैश्च सहितो गच्छेत् । शङ्खतालवितादिवाद्यघोषेण संयुक्तं दिक्ष्वष्टासु नृत्तगेयं च कारयेत् । आवरणद्वयाधिकेषु प्रथमादि प्रत्येकं प्रथमे सकृद् द्वितीये त्रिः प्रथमे त्रिभिरेव वा प्रथमेऽप्येकं द्वितीये द्विरित्येके । प्रतद्विष्णुस्तपत इति प्रदक्षिणं कुर्यात् । अन्तः प्रविश्य भूतपीठान्तरे तिष्ठति । पादौ प्रक्षाल्यार्चको हस्ताभ्यां बलिमादाय देवाभिमुखं न्यस्य कौतुके देवमोङ्कारेण समारोप्य बलिं खण्डयित्वाऽद्याय विष्वक्सेनाय दत्त्वा तच्छेषं भूतपीठे सोदकं क्षिपेत् । नित्योत्सवमिच्छेच्चेत्, बलिबिम्बं देवीयुक्तं चेत् पूर्ववच्छिष्यमाहूय गरुडं बुद्ध्वाराध्य शिरसि स्थापयित्वा बलिमग्रतो यद् देवीयुक्तश्चेच्छिबिकायां गरुडमाराध्य तौ वीभ्यां सह देव्यौ संस्थाप्यालङ्कृत्य पूर्वोक्तगुणसम्पन्नां शिष्यैश्चतुर्भिर्वाहयित्वा सर्वालङ्कारसंयुक्तं बलिसह पूर्ववत् प्रदक्षिणं कुर्यात् । देवीयुक्ते शिबिकायां समारोपयेदिति केचित् । अभ्यन्तरं प्रविश्यालङ्कृते मण्डपे पीठे न्यस्य पाद्याद्यर्घ्यान्तमभ्यर्च्य नृत्तगेयवाद्यैर्विनोदं कारयित्वा पूर्ववत् पादुकार्चनमाचरेत् । एवं नित्योत्सवं त्रिसन्धिषु सायम्प्रातरेव वा कुर्यात् । नित्योत्सवेन महोत्सवफलं लभेत । भगवत्प्रीतो भवेत् । राज्ञो राष्ट्रस्य कुलवर्धनं भवति । बलिभ्रमणकाले येऽनु सेवकाः सर्वे पदे पदे यज्ञफलं लभेत् । नवपद्मश्चमूर्तीनां विष्णुमादिमूर्तिर्वा बलिमाचरति । सायार्चनान्तेऽर्धयामार्चनं कर्तव्यमिति विज्ञायते ॥

अर्चनाङ्गोपचारणामुपचारो विग्रह इत्येकार्थवाचको भवति । आसनस्वागता(सना)नुमानपाद्याचमनपुष्पगन्धधूपदीपार्घ्याचमनस्नानप्लोतवस्त्राभरणोत्तरीययज्ञोपवीतपाद्याचमनपुष्पगन्धधूपदीपार्घ्याचमनहविःपानीयाचमनमुखवासं च बलिप्रणामदक्षिणपुष्पाञ्जलिसहितस्तुतिश्चेति द्वात्रिंशदुपचारैर्युतं नृत्तगेयैश्च संयुक्तमुत्तमोत्तममित्याहुः । आसनादिमुखवासान्तं प्रणामदक्षिणान्तविंशत्युपचारं तथा मुखवासान्ते दक्षिणायुक्तं विंशत्युपचारमर्घ्याचमनान्ते प्रणामदक्षिणा-

युक्तं त्रयोदशोपचारपाद्याद्यर्घ्याचमनान्ते षडुपचारं पुष्पदानप्रमाणं च युगोपचारं प्रणाममेकोपचारं त्रयोदशोपचारान्तानामादौ प्रधानमावाहनमन्ते विसर्जनं च कुर्यात् । सर्वत्रैकोपचारं भेष (?) षडुपचारं स्नापनेऽष्टोपचारं हविर्हीने विमाने त्रयोदशोपचारमष्टोपचारं वा हविर्लब्येऽष्टाविंशतिकं वा विमानार्चनायाभे द्वात्रिंशदुपचारं करोति । अथवा हविर्लब्यमात्रेऽपि षोडशोपचारं वा कारयेत् । आसनस्थो वस्त्राद्यलङ्कारपाद्याचमनपुष्पगन्धधूपदीपाद्याचमनहविःपानीयाचमनमुखवासदक्षिणा इति षोडशोपचारं स्यात् । एतदुपचारक्रमं नवधा भवतीति विज्ञायते ॥

सन्ध्याघटिकाविधानम् । प्रातरर्कोदया मध्याह्नास्तमयांश्च घटिकाद्वादशादि चतुरुक्तं नवधा भवति । उदयात् पूर्वे घटिकत्रये सम्बोधनवाद्यं घोषयति । तत्कालेऽर्चकपरिचारकाश्चोत्थाय स्नानसन्ध्योपासनादिभिरुदयादर्वाग् द्वे घटिकायां कवाटोद्घाटनं कृत्वा दीपसन्दीपने सम्मार्जनानुलेपने कृत्वालये देवेशं प्रणम्य निर्माल्यशोधनं पश्चादेव घटिकायां पात्रादिशुद्धिद्रव्यसम्भरणं कृत्वा ततो घटिकाद्वयं स्नानकालः । पश्चाद् घटिकाद्वयं स्नपनकालः । पश्चाद् घटिकाद्वये हविरन्तमर्चनम् । यवनिकोद्धरणं ततश्चैकघटिकायां नीराजनकरणं ततो घटिकात्रयं नृत्तगेयवाद्यादिविनोदकरणं ततश्चैकघटिकायां महाहविर्निवेदनं होमं बलिदानं च पश्चादेकघटिकायां प्रणामादिपुष्पाञ्जलिप्रमाणं कवाटबन्धनं च मध्याह्नसायाह्नयोश्च स्नानकालेऽर्चनं पञ्चघटिकायां विनोदकरमिति विशेषमर्धयामार्चनं पञ्चघटिकायां हविरन्तार्चनमेवमुक्तमोत्तममूर्तीनाम् । घटिकाविहीनानां स्नपनकाले नीराजनादिविनोदकाले युक्त्या सङ्कोचं कारयेत् । उत्तममध्यमादिभेदेषु यत् कर्म विहीनं तत्तत् कर्म विलोपयन्नन्यानि कर्मणि तत्तच्छेदस्योक्तनाडिकायामूहेन युक्त्या संयोज्य कारयेत् । हविर्हीने सर्वत्र घटिकाचतुष्टयमेव घटिकात्रयं त्रिपादं चेति । सर्वत्र सन्धिषु याममेव समाचरेदित्येके ॥

इति श्रीवैखानसे मरीचिप्रोक्ते घटिकाविधिर्नाम
चतुश्चत्वारिंशः पटलः ॥

---

## अथ पञ्चचत्वारिंशः पटलः ।

अथार्चनापुष्पाणि । जातीचम्पकमल्लिकामालतीतुलसीघटपुष्प-द्रेतिताद्विकर्णीपद्मरक्तोत्पलकुमुदकरवीरनन्द्यावर्तपलाशकर्णिकारमन्दा-रातसीवकुलाग्रकर्णीकमुपार्जुनककुम्भपुन्नागपट्टिकामाधवीति पिण्डि-तकान्यन्यानि तरुलताजातानि सौम्यानि गन्धानि तुष्टिमनोहराणि यथार्हं गृह्णीयात् । पुष्पेषु पद्मं प्रवरम् । तत् सुगन्धीनि मुख्यं तुलस्याः पुष्पपत्रं च हरेः प्रियं भवति । भूवरणस्थलारविन्दकाबिल्वशमीदूर्वातिपर्णीबहुकर्णतमालसहदेवीशङ्खिनीपत्राणि तापसाङ्कुरामङ्कुरो-त्कामङ्कुश्च तुलसीबेरोशीराणां मूलं च । श्वेतपुष्पं शान्तिकम् । पीतं पौष्टिकम् । कृष्णं वश्यकरम् । पद्ममुत्पलं च मिश्रवर्णातिरक्तं रक्तेषु पिण्डीतकं पलाशं च सङ्ग्राह्यम् । बहुवर्णमुत्तमम् । द्विवर्णं मध्यमम् । एकवर्णमधमम् । तत्काले सम्फुल्लं प्रशस्तम् । एकाहिकं वा । जलजं त्र्याह्निकं त्र्याह्निजं च पूजनीयं च भवेत् । आचम्य प्रयतो पाणी प्रक्षाल्य शुद्धे पात्रे पुष्पाण्युक्तानि देवस्य त्वेति गृह्णाति । अलाभे उक्तपुष्पाणां पत्रैरङ्कुरैरक्षतैस्तोयैश्चार्चनं कुर्यात् । कुसुम्भजपापरशुकानिर्गुण्ड्यर्का-दीन्यन्यानि चोग्रगन्धान्यनुक्तानि सर्वाणि वर्जयेत् । पुराणं शुष्कं शीर्णं नखरोमादिभिर्युक्तं लङ्घितं सलेपम् अशुचि त्यजेत् । निर्माल्य-संस्पृष्टं पूतिगन्धं श्मशानचण्डालाद्यावासमीपोत्पन्नशुद्रावनिच्युतं मुखवायुगतं नरैर्गन्धाद्यैर्वाघ्रातं सर्वं त्यजति । भ्रमरैराघ्रातं लम्बितं चानिन्दितं भवति । सर्वेभ्यः सौवर्णं श्रेष्ठम् । तत् सदा शुद्धम् । जाती च निर्माल्यं नैव भवेत् । सौवर्णपुष्पमाभरणं मणिमुक्ताद्यं च प्रक्षाल्यादाय पुनरर्चयति ॥

अथातो हविर्विधिं व्याख्यास्यामः । प्रथमावरणे द्वितीये तृ-तीये वाग्नेय्यां पचनालयं यथापूर्वं कारयित्वा चुल्लिकां च कारयेत् । वेणुकान् यवान् षष्टिकान् प्रियङ्गुशालिभेदानन्यान् व्रीहीन् वाप्येक-जातींश्चातुर्वर्णैरेव कारयेत् । एतेषां पूर्वं श्रेष्ठम् । तस्माद् वरककोद्रवा-दिकधान्यानि प्रतिलोमानि च वर्जयेत् । तत्तच्छुद्धे देशेषु वा धान्या-नास्तीर्य शोषयित्वोलूखलंमुसलौ प्रक्षाल्योलूखले हरिणीं मुसले

विष्णुमभ्यर्च्योलूखले धान्यान् प्रक्षिप्य धान्येषु सोममभ्यर्च्यातो देवादिना किञ्चिदवघातं कृत्वा ततः शुद्धाभिः स्त्रीभिः पुरुषैर्वा रोमस्वेदादीन् परिहृत्यावघातं मूलमन्त्रेणैव कारयति । निरस्तेति शूर्पे प्रक्षिप्य तुषकणादींश्च संशोध्य तण्डुलान् शुद्धानापोहिष्ठेति प्रोक्ष्य पूते पात्रे देवस्य त्वेति गृह्णाति । विष्णोर्द्रोणं हविरुत्तमम् । द्रोणार्धं मध्यमम् । आढकं कनिष्ठम् । देव्योस्तदर्धमाढकं कनिष्ठार्धं वा । प्रस्थाधिकतण्डुलैरिति केचित् । परिवाराणां प्रस्थाधिकैः प्रोक्तमष्टतिलमात्रमाषमष्टमाषं शाणं विंशतिशाणं निष्कं तिलाष्टकं शाणं तदष्टकं षाष्टिकमिति भृगुर्दशनिष्कं फलमष्टनिष्कं वेति केचित् । चतुष्पलं तु कुडुवं चतुःप्रस्थमुडुवं प्रस्थमाढकद्रोणार्धार्धं चतुराढकं द्रोणं भवति । लोहमयीं मृण्मयीं वा स्थालीं सङ्गृह्य मृण्मयं चेत् पप्रत्वातीते विसर्जयन्ति । प्रजास्थालीमिति स्थाल्यां तण्डुलान् देवस्य त्वेति प्रक्षिप्य शुद्धैरद्भिराप उन्दन्त्विति त्रिचतुः प्रक्षालयेत् । विष्णवे जुष्टं निर्वपामीति चुल्ल्यां स्थालीमारोप्य शुद्धैर्धूमैः समेनाग्निना चेचस्पतये पवस्वेति पाचयेद् । उपदंशान् कदलीपनसबृहतीभेदा व्याघ्रीसिंहीचूतोर्वारुककुम्भकारवल्लीत्रयकर्कन्धूग्रन्थनखीकार्कोटकालर्कनालिकरेतिन्त्रिणीसूरणादिभेदाः क्षुद्रकन्दमहाकन्दशृङ्गबेरोत्पलकं पिण्डीशो कूटकन्दादिमरीचिजीरकसर्षपाणि मुद्गभेदाः कुलस्थशिम्ब्यादीनि हत्रिष्यादीनि शाकेषु जीवन्तीझरसीरक्तबाष्पा(ण्य)न्यानि मन्वाद्यैः यथोक्तानि यथालाभमाहरेत् । कदल्यादिष्वेकं द्वौ त्रीन् चत्वारोऽधिकान् दोषविरहितान् प्रक्षाल्य यथायोगं सगन्धरससंयुक्तं सुपचेत् । आढकतण्डुलस्योपदंशं प्रत्येकं षट्फलं च फलं चतुष्फलं वा सङ्गृह्य मुद्गसारं प्रस्थार्धं कुडुवं तदर्धं पादार्धं वा गुलं फलं च यथार्हं दधिप्रस्थं पादहीनम् अर्धं पादं पादार्धं वा । क्रमुकफलानि षोडशद्वादशाष्टचत्वारो द्वे वा । तद्द्विगुणं त्रिगुणं वा ताम्बूलपत्राणि । मातुलुङ्गैलालवङ्गकर्पूराद्यैर्यथालाभं भवेदाढकतण्डुलाधिकेऽप्येवं वर्धयेत् । द्विद्रोणादिषड्द्रोणान्तं प्रभूतम् । शतप्रस्थादि सहस्रप्रस्थान्तं महाहविराचक्षते । तण्डुलैः पक्वं शुद्धान्नम् । तण्डुलैस्तुल्यैरर्धैर्वा मुद्गसारैर्युक्तमौद्गिकतण्डुलैस्त्रिगुणेन पयसा तण्डुलार्धघृतेन गुडेन युक्तं गौल्यं चेति हविः

षड्विधं भवति । द्रोणार्धाधिकं चेदेकपात्रे न पचेत् । पक्षान्तरे पुराणमृद्भाण्डे पचनं न कुर्यात् । अपक्वं स्रावितं गन्धदुष्टं नासिकास्यवायूपागतमवघ्रातं तुषकेशादिसंयुक्तं द्विजानामन्यजातिदर्शितं स्वेदस्पर्शितं लङ्घितं यामद्वयातीतं पात्रान्तरगतं हविरुपदंशं च वर्जनीयम् । अधिपात्रगतं पुनःपाकार्हहविरुपदंशादीन् वर्जयेत् । स्थालीं वास्याद्भिः प्रक्षाल्योर्ध्वपुण्ड्रं कृत्वा तोयधारापुरःसरमानीयोत्तरे निधाय विधिवन्निवेदयति । शुद्धान्नात् कृसरं मुख्यम् । तस्मान्मौद्गिकम् । तस्मात् पायसम् । ततो यावकम् । ततो गौल्यं श्रेष्ठम् । एतैर्हवींषि श्रेष्ठं फलं स्यात् । तस्मिन्नधिकेऽप्यधिकं नित्यमेव हविर्दानेन फलमनन्तं प्राप्नोति । विधिनैव भक्तियुक्तो यो कामेन विष्णोर्देवेशस्य यो हविर्दद्यात्, तत् सर्वं सम्पूर्णमसंशयं लभेत् । तत्स्थालीशेषमाचार्याय दद्यात् । देवस्य निवेदितमन्नादिं सर्वमाचार्याय दद्यात् । तस्य प्रसादेनान्यैरनुगृहीतम् । अन्यथा चेद् भगवान् क्रुद्धो भवेत् । तत् फलं च विनाशयति । यजमानश्चाचिरादेव नाशयतीत्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते पुष्पहविर्विधिर्नाम
पञ्चचत्वारिंशः पटलः ॥

## अथ षट्चत्वारिंशः पटलः

अथातो नवषट्पञ्चमूर्तेरर्चनाविशेषः । अर्चकाः प्रत्येकं यथालाभं स्नात्वालयमाविश्य पूर्वोक्तेन विधानेन कवाटोद्घाटनादिसर्वकार्यं समाचरेत् । द्वितीये तले विष्णुमूर्तिं पूर्ववदभ्यर्च्याधःस्थले प्राच्यां पुरुषं पूर्ववद् दक्षिणे श्रियं कमलामानन्दां पुरुषप्रियामिति वामे मेदिनीं हरिणीमुर्वीं सर्वाधारामिति पूर्ववदर्चयेत् । ब्रह्मेशौ च भृगुं मुनिवरमग्निवर्णमिति भृगुं पुराणं भक्तिमन्तं भार्गवं चिरञ्जीविनमिति प्रथमद्वारदक्षिणे तुर्भणं वामे वलिन्दं द्वितीयद्वारदक्षिणे तीर्थं वामे किष्किन्धं पूर्ववद् दक्षिणे सत्यं पूर्ववद् दक्षिणे धृतिं दक्षसुतां सत्यपत्नीं रमामिति वामे पौष्णीं वरदां पृथिवीमिति ब्रह्मेशौ च धातृनाथौ यकं ब्रह्मसम्भवं वाग्देवपातिमिति वामे पुण्यं शुद्धं विश्वं वरिष्ठ-

मिति प्रथमद्वारदक्षिणे शङ्खनिधिं वामे पद्मनिधिं द्वितीयद्वारदक्षिणे नासत्यं वाजस्रं पूर्ववदर्चयेत् । पश्चिमेऽच्युतं पूर्ववत् पवित्री-मिन्दिरां लक्ष्मीमच्युतप्रियामिति वामे क्षौणीं वाराहीं वरदां मही-मिति ब्रह्मशङ्करौ च भृगुं तपोनिधिं वेदरूपं महातपस्विनमिति मार्कण्डेयं भृगुं दीप्तं पुण्यवाहिनमिति प्रथमद्वारदक्षिणे चक्रचूलिनं वामे शङ्खशूलिनं द्वितीयद्वारदक्षिणे नरं पार्थं गुडाकेशं श्वेतवाहनमिति नरं नारायणं कृष्णं गौरं भक्तवत्सलमिति नारायणमादित्यं पूर्ववत् प्रजापतिं पितामहं हेमवर्णं चतुराननमिति प्रजापतिं पश्चिमे नरसिंहं ब्रह्माणं शङ्करं च पूर्ववदुत्तरे वाराहं पूर्ववन्महीं गां पृथिवीमुर्वीमिति महीमिन्द्रं वरुणं च पूर्ववत् तृतीयतले शयनस्यानन्तशयनमनादिनि-धनममितमहिमानमित्यन्ताद्भुतमित्यनन्तशयनस्य पूजकस्थाने मही-मार्कण्डेयाभ्यां च पूर्ववन्नाभिपद्मे समासीनं ब्रह्माणं पद्मायुधांश्च पूर्व-वद् दक्षिणे यमुनां वामे गङ्गां द्वितीयद्वारदक्षिणे सुरं वामे सुन्दरं चान्यत् सर्वं समानम् । षण्मूर्त्यर्चनं चेद् विमाने त्रितले द्वितले वा नारायणनारसिंहवाराहांश्च विनान्यत् पूर्ववदर्चयेत् । पञ्चमूर्त्यर्चनं चेद् विष्ण्वादिपञ्चमूर्त्तीर्द्वितले पूर्ववदर्चयेत् । एतेषां नित्यार्चनावि-धानेन सर्वमाचरेत् । अत्र विशेषो वक्ष्यते । पुष्पन्यासकाले विष्णो-रादिमूर्त्तेः पादयोर्मध्ये विष्णुमिति परितः प्रागादि विष्णुं महाविष्णुं सदाविष्णुं व्यापिनमिति विन्यस्याग्नेयादिषु कोणेषु पूर्ववत् कपिला-दीन् संन्यस्य प्रथमावरणाद्यावरणद्वयदेवान् पूर्ववत् संन्यस्याथवा विष्ण्वादिपञ्चमूर्त्तिनामभिर्वा संन्यस्यादित्येके । अन्येषां ध्रुवबेराणां पदयोर्मध्ये तत्तत्प्रधानमूर्त्तिनाम्ना संन्यस्य परितः प्रागादिचतुर्दिक्षु संन्यस्यान्यान् सर्वान् पूर्ववदेव संन्यसेत् । नरनारायणस्य पादयोः परितश्चावरणत्रयदेवान् संन्यस्य नाभिपादयोर्मध्ये संन्यस्यावाहने तद्ध्रुवबेरात् तत्तत्कौतुकादिषु समावाहयेत् अर्चने तत्तन्मन्त्रैस्तत्त-न्मूर्त्तिनामद्वयं च संयोज्यार्चनं कारयेत् । अशक्तानां द्वितले चैक तले च षण्मूर्त्यर्चनं चेत् कौतुके पूर्ववत् कौतुकस्योक्तप्रकारेण पुष्प-न्यासं कृत्वा पुरुषादिचतुर्णां कौतुकानां पूर्ववत् कौतुकस्योक्तप्रकारेण पुष्पन्यासं कृत्वानन्तशयनस्य कौतुकपीठे कौतुकस्यावरणत्रयदेवानां

पुष्पन्यासं कृत्वावाहनविसर्जनौ विनौ चैकबेरार्चनविधानेनार्चयेत् । विष्ण्वादिपञ्चानामावाहनविसर्जने विना पूर्ववदर्चयेत् । पञ्चमूर्तेस्तदुपरितले कौतुकं विना विष्ण्वादिपञ्चमूर्तिध्रुवकौतुकसंयुक्तमार्गेणार्चयेत् । पुरुषादीनां चतुर्णां कौतुकमार्गेणार्चयेदिति विज्ञायते ॥

अथ पञ्चमूर्तीनामर्चनाविशेषो वक्ष्यते । पूर्वोक्तानर्चकान् मन्त्रकल्पविदः शुद्धनद्याद्यैर्विधिना स्नात्वाचम्य सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं च कृत्वा देवालयं गत्वा विष्णोर्नुकमिति शनैः प्रदक्षिणं कृत्वा हिरण्यपाणिमिति कवाटमुद्घाटयति । अभ्यन्तरं प्रविश्य देवेशं प्रणम्य दीपान् सन्दीप्य शिष्यैरेव धारास्विस्थापः सङ्गृह्यार्चकाः सर्वासां मूर्तीनां निर्माल्यमादाय विष्वक्सेनं समाराध्य विष्णोर्गर्भालयं सर्वं तस्यैव परितः पुरुषाद्यास्थानमलीन्द्रं च प्रादक्षिण्यक्रमेणावधूतमिति संमार्जनं कृत्वाद्भिरभ्युक्ष्योत्पवनं कृत्वार्चनापात्रं हविःपात्रं च प्रक्षाल्य विधिना शुद्धान्नपायसकृसरगौल्ययावकानि च सर्वालाभे यथालाभं शुद्धोदनं पाचयेत् ॥

अर्चनाद्रव्याणि पृथक् पृथक् सङ्गृह्य विष्णुगायत्र्या गर्भालयं प्रोक्ष्य पुष्पन्यासं करोति । श्रीभूम्यौ समभ्यर्च्याधः शिष्येण धात्रादिभूतपर्यन्तं पर्षदादर्चनं कृत्वा मुखमण्डपद्वारि वामे स्नानपीठे विष्ण्वादिपंचानां कौतुकानां क्रमेण संस्थाप्य शुद्धस्नपनविधिना स्नपयेत् । अलाभे पाद्याचमनमुखवासं च दद्यात् । तैलाभ्यञ्जनमन्यदप्युचितं कृत्वाम्लाद्यैः संशोध्य विष्णुमूर्तिमिषेत्वोर्जेत्वादिना गन्धोदकैः संस्नाप्य चन्दनोदकैरभिषिच्य पुरुषमूर्तिं सहस्रशीर्षाद्यैः सत्यमूर्तिं विष्णोर्नुकाद्यैरच्युतमूर्तिमतोदेवाद्यैरनिरुद्धमूर्तिमेकाक्षराद्यैः संस्नाप्य तत्तत्स्थाने संशोध्य तत्तत्पीठे संस्थापयेत् । एवं कर्तुमशक्तश्चेद् विष्ण्वादिपचानां कौतुकानां विष्णुपंचदिनेष्वेवं संस्नापयेत् । विष्णुमादिमूर्तेः पुष्पन्यासं करोति । पाद्याचामनस्नानोदकार्थं चतस्रः प्रणिधीश्च सङ्गृह्य साक्षतं कुशं कूर्चं वा निक्षिप्याद्भिः प्रणवेन पूरयित्वा प्रतद्विष्णुरिति पुष्पन्यासं दत्त्वा विश्वाधिकानामिति स्वागतं मनोऽभिमन्तेत्यनुमानं त्रीणिपदेति पाद्यं शंनोदेवीरित्याचमनं तद्विष्णोरिति पुष्पं तद्विप्रास इति गन्धं परो मात्रयेति धूपं विष्णोः कर्माणीति दीपं

त्रिर्देव इत्यर्घ्यं पूर्ववदाचमनीयमापो हिष्ठेति स्नानं तयाभ्युक्षणं कृत्वा मित्रः सुपर्ण इति प्लोतं तेजायत्सव इति वस्त्रं सोमस्य तनूरसीत्युत्तरीयमग्निं दूतमित्युपवीतं पूर्ववत् पाद्यादीनि दत्त्वा शुद्धोदनं तदस्य मियमिति निवेद्य द्वारपालादिबलिं निर्वाप्य होमं हुत्वा पूर्ववत् पानीयाचमनमुखवासं च दत्त्वैतान् सर्वान् मन्त्रान्ते चतुर्मूर्त्तिमन्त्रैरथवा पञ्चमूर्तिमन्त्रैरथवा संयोज्य ददामीति मास्तिष्कादिप्रणामं कारयेत्॥

तस्यालीन्द्रे प्राग्द्वाराद् दक्षिणे पुरुषस्य पूर्ववत् पुष्पन्यासं कृत्वा ब्रह्मशङ्कराभ्यां पूजकमुनिभ्यां द्वारदेवद्वारपालादीनभ्यर्च्यासनादीन् पूर्ववत् दत्त्वापोहिष्ठेत्याचमनं स्नानोपचारं दत्त्वापो हिरण्यगर्भ इत्यर्घ्यं पायसहवींषि च निवेदयेत्। सम्पुटप्रमाणं च कारयेत्। एतदेव विशेषः। तस्यालीन्द्रे दक्षिणे सत्यस्य पूर्ववत् पुष्पन्यासं कृत्वा पर्षदानभ्यर्च्यासनादि पूर्ववद् दत्त्वा योगे योगेतवस्तरमित्याचमनमापोहिष्ठेति स्नानमिदमापः शिवा इत्यर्घ्यमिह पुष्टिरिति कृसरहविर्निवेदनं प्रह्वाङ्गप्रणाममिति विशेषः॥

पश्चिमेऽच्युतस्य पूर्ववत् पुष्पन्यासं कृत्वा पद्देवानभ्यर्च्य ध्रुवबेराद् देवीभ्यां सहैवावाह्यासनादीनि पूर्ववद् दत्त्वा समाने दक्षेत्याचमनं तत्पुरुषायेत्यर्घ्यं समाववर्तीति गौल्यहविर्निवेदनं पञ्चाङ्गप्रणाममिति विशेषः॥

उत्तरेऽनिरुद्धस्य पूर्ववत् पुष्पन्यासं कृत्वा पर्षदानभ्यर्च्यासनादीनि पूर्ववद् दत्त्वा पवित्रं तेत्याचमनीयं कयानश्चित्रेत्यर्घ्यं त्रीणि पदेति यावकं हविर्निवेदनं दण्डप्रणाममिति विशेषः॥

उपरितले चैकतलबेरविधिना पुष्पन्यासं कृत्वासनाद्यैरभ्यर्च्य मन्त्रान्तेऽनन्तशयनमनादिनिधनममितमाहिमानमत्यन्ताद्भुतमिति नाममन्त्रं संयोज्यार्चयेदिति विशेषः॥

स्नपनोत्सवबलिबेराणामेवं षोडशोपचारैरर्चयति। यदि स्यादवताराणामेकादशोपचारैरभ्यर्च्य निवेदयेत्। पर्षदानामष्टोपचारैरभ्यर्च्य निवेदयेत्। विधिना बलिमाराध्य बलिबेरेणालयं प्रदक्षिणीकृत्य यामान्ते दक्षिणां ददातीति विज्ञायते॥

अथैकतलप्रासादे कूटामारोभ्यय(?) रूपप्रासादं च पञ्चमूर्त्यर्चनं चेदेवमेवोपरितलार्चनं विना पञ्चमूर्तीरर्चयेत् । षण्मूर्त्यर्चनं चेत् पूर्ववदर्चयेत् । पर्षदाविधि द्वारेषु यत्रास्ति, तत्र धात्रादीनर्चयति । गर्भालयद्वारदक्षिणे बलिन्दं वामे तुभेणं अलिन्द्रे द्वारदक्षिणे मणिकं वामे प्रभावतीं मुखमण्डपद्वारदक्षिणे तापसमुत्तरे सिद्धिदं तस्यैव परितः सोपानमध्ये श्रीभूतं बहिराननं देवाभिमुखे गरुडं प्रथमावरणे चैन्द्राद्यैशानान्तं तत्तत्स्थाने इन्द्राग्न्योर्मध्ये शुक्रं यमाग्न्योर्मध्ये गुहं यमनैर्ऋतयोर्मध्ये दुर्गां नीलवारुणयोर्मध्ये बुधं वरुणोदानयोर्मध्ये बृहस्पतिं सोमोदानयोर्मध्ये ब्रह्माणं सोमेशानयोर्मध्ये विष्वक्सेनमीशानेन्द्रयोर्मध्ये भास्करं विमानस्य परितः प्रागादिचतुर्दिक्षु न्यक्षं विवस्वन्तं मित्रं क्षत्तारं च प्रथमावरणे द्वारदक्षिणे किष्किन्धमुत्तरे प्रजापतिं द्वितीयावरणे द्वारदक्षिणे विघ्नेशमुत्तरे नागराजं देवाभिमुखे चक्रध्वजशङ्खमहाभूताक्षहान्तांस्तृतीयावरणद्वारदक्षिणे चक्रमुत्तरे शङ्खं पुष्पसञ्चयस्थाने पुष्परक्षकं स्नानोदकपानीयवारिसञ्चयस्थाने वरुणं पचनागारे हविरक्षकं चतुर्थावरणे द्वारे चन्द्रादित्यौ चैते पञ्चाशत् देवता भवन्तीत्येके ॥

इति श्रीवैखानसे मरीचिप्रोक्ते नवषट्पञ्चमूर्त्यर्चनाविधिर्नाम षट्चत्वारिंशः पटलः ॥

## अथ सप्तचत्वारिंशः पटलः ।

अथैकबेरार्चनाविधिः ॥ प्रभाते स्नात्वालयं गत्वा पूर्ववत् प्रदक्षिणं प्रणामं च निरस्तेति कवाटमुद्धाटयति । दीपानुद्दीप्य शिष्येण धारास्वित्युदकं गृहीत्वा देवस्य निर्माल्यमादाय विष्वक्सेनं समाराध्य गर्भालयादि सर्वत्र सम्मार्जनं कृत्वाद्भिरभ्युक्ष्योपलिप्याचमनपात्रं हविःपात्रं संशोध्य हवींषि पाचयित्वा पुष्पगन्धार्चनद्रव्याणि सङ्गृह्य प्रतद्विष्णुस्तपत इति पुष्पासनं दत्त्वा विश्वाधिकानामिति स्वागतं मनोऽभिमन्तामित्यनुमान्य त्रीणि पदेति पाद्यं शंनो देवीरित्याचमनं अतो देवादिना तैलाभ्यञ्जनं कृत्वा परिलिखितमित्यादिना

संशोध्य वारीश्चतस्र इति वारिणा स्नापयेत् । इषेत्वा यज्ञस्य शुन्धध्व-मिति त्रिभिरभिषिच्य सहस्रा धारा यदि स्याच्चेद् वस्त्रमाल्याद्यैरलङ्-कृत्य पाद्याद्यर्घ्यान्तमभ्यर्च्य सहस्रधारैरभिषिच्य पूर्ववन्मित्रः सुपर्ण इति प्लोतेन विमृज्य विष्णोर्नुकमिति वस्त्राद्यैरलङ्कृत्य तथैवाचमनं दत्त्वा देवस्य पादयोर्मध्ये विष्णवे नम इति पुष्पं दद्यात् । प्रागादिचतुर्दिक्षु विदिक्षु पुरुषाद्यावरणत्रयदेवानां तत्तद्वाह्ये परितः कौतुकोक्तवदाव-रणश्रीयदेवानां तत्तन्नाम्ना प्रणवादिनमोऽन्तं पुष्पन्यासं करोति । गर्भालयगतदेवान् धात्रादीन् द्वारपालानामन्यत् पर्षदानां तत्तन्मन्त्रे-णाभ्यर्च्याभ्यन्तरं प्रविश्य देवं प्रणम्य तद्विष्णोरिति पुष्पं तद्विप्रास इति गन्धं परो मात्रयेति धूपं विष्णोः कर्माणीति दीपं त्रिर्देव इत्यर्घ्यं तथैवाचमनं तदस्य प्रियमिति हविर्निवेद्य द्वारपालकादिभ्यो बलिं निर्वाप्य होमं हुत्वा पूर्ववत् पानीयाचमनमुखवासांश्च दत्त्वा विधिना बलिमाराध्य बलिबेरेण सहैवालयं प्रदक्षिणं कृत्वाष्टाक्षरेण मन्त्रेण पुष्पाञ्जलिं दत्त्वावाहनविसर्गौ विनान्यत् सर्वं समानमिति विज्ञायते ॥

अथातो नवविधमर्चनाविधिं व्याख्यास्यामः । देवेशस्य हवि-र्द्रोणं तस्यार्धं देव्योश्च पुरुषादीनां चतुर्णां द्रोणार्धम् । तस्यार्धं देवीभ्यां नरनारायणनारसिंहवराहाणां द्रोणार्धमनन्तशयनस्य हवि-र्द्रोणं तस्यार्धं स्नपनोत्सवबलिबेराणां तस्यार्धं देवीनामवताराणामाढकं वा पूजकमुनिभ्यां वीशशैषिकाभ्यां ब्रह्मेशाभ्यां चाढकमन्येषां परि-वाराणामाढकार्धं हविर्देवेशस्य देव्योश्च प्रातर्मौद्गिकं मध्याह्ने गौल्यं रात्रौ पायसमर्धयामे द्विराढकं हविरपूपसंयुक्तं त्रिकालं द्विराढकं पूजा-वेलायाममन्त्रहविर्निवेदनं कर्पूरसहितताम्बूलं नित्याग्निकुण्डे मूर्त्याराधनं मूर्तिहोमं त्रिकालमन्नबलिसंयुक्तं द्विरष्टाजस्रदीपं कर्पूरसहितं त्रिगुणं सन्ध्यादीपं प्रातर्मध्याह्नयोर्द्विशतं शुद्धदीपं कर्पूराद्यगरुसहितधूपं जातीचम्पकोत्पलादिसुगन्धपुष्पानभ्यर्चयेत् । द्वात्रिंशद्विप्रहैरर्चनं देव-गणिकाभिर्देवदासीभिर्भक्तैश्च नृत्तगेयसंयुक्तं तचद्वायकवंशकलारव-दर्दुराद्यैः संयुक्तं प्रातः प्रबोधनघोषं स्नानकाले हविर्दाने बलिदाने पटोद्धरणे बलिभ्रमणकाले शङ्खभेर्यादिघोषणं नटिकाभिर्नटनं सप्त-प्राकारसंयुक्तं सर्वपर्षददेवार्चनमुत्तमोत्तमम् । इन्द्रादिलोकपालाद्यैर-

न्येषां परिवाराणां हविर्निवेदनं विना बलिप्रदानं सप्ताजस्रदीपं तत्-
त्रिगुणसन्ध्यादीपं प्रातर्मध्याह्नयोः शतपञ्चाशत् रात्रौ चतुःशतं श्र-
द्धादीपं पूजावेलानिवेदनं द्विकालहोमं द्विकालमन्त्रबलिं षट्प्राकारस्थ-
देवार्चनं पूर्ववन्नृत्तगेयवाद्यैर्युक्तमुत्तममध्यमम् । पूजकमुनिभ्यां विष्व-
क्सेनसुपर्णाभ्यां हविर्विना द्वादशाजस्रदीपं त्रिगुणं सन्ध्यादीपं पूजा-
वेलानिवेदनं द्विकालहोमं तथैवान्नबलिं पञ्चप्राकारयुक्तं पूर्ववन्नृत्त-
गेयवाद्यैर्युक्तमुत्तमाधमम् । अवताराणां द्विकालनिवेदनं दीपं चाजस्र-
दीपं गुणसन्ध्यादीपं प्रातर्मध्याह्नयोः शतं रात्रौ त्रिंशच्छतं श्रद्धा-
दीपं देवदासीभिर्गणिकाभिश्च नृत्तगेयवाद्यैर्युक्तं प्रातर्मध्याह्नयोरन्न-
बलियुतं पञ्चप्राकारायतस्थं देवार्चनं मध्यमोत्तमम् । अवताराणा-
मेककालनिवेदनं स्नपनोत्सवबलिबेराणां द्रोणार्धं हविर्निवेदनमष्टाजस्र-
दीपं द्विगुणसन्ध्यादीपं प्रातर्मध्याह्नयोरशीतिः रात्रौ द्विशतं श्रद्धादीपं
चतुष्प्राकारयुतं देवार्चनं नृत्तगेयवाद्यैर्युक्तं मध्यममध्यमम् । कौतुकस्य
हविर्द्रोणं तस्यार्धं देव्योरर्धं मौद्गिकं गौल्यं पायसापूपैर्यथालाभं निवे-
दनमन्यत् सर्वं पूर्ववत् ॥

मध्यमाधमं देवेशस्य द्रोणार्धं हविरर्धयामे चार्धकं देवस्यार्धं
तत्तद्देव्योः स्नपनोत्सवबलिबेराणामेककाले निवेदनं प्रातःसायंपूजा-
वेलानिवेदनं अजस्रदीपं षट् त्रिगुणं सन्ध्यादीपं प्रातर्मध्याह्नयोश्चत्वा-
रिंशत्, रात्रौ शतं श्रद्धादीपं त्रिप्राकारयुतं देवार्चनं नृत्तगेयवाद्यैर्युक्त-
मधमोत्तमम् । देवेशस्यैकं हविर्देव्योस्तदर्धं त्रिकालं द्विकालं वा स्नप-
नोत्सवबलिबेराणामेककालं हविर्निवेदनमेककालं पूजावेलानिवेदनं
गौल्यादीनां विना मध्याह्ने बलिहोमाजस्रदीपं तत्त्रिगुणं सन्ध्यादीपं
प्रातर्मध्याह्नयोर्दश रात्रौ विंशतिः श्रद्धादीपं वा नृत्तगेयविहीनं वाद्यैर्युक्तं
द्विप्राकारयुतमधममध्यमम् । देवस्य द्विकालमेककालं वाढकं हविस्तदर्धं
मध्याह्ने देव्योर्यथालाभं व्यञ्जनैर्युक्तं यथालाभदीपैर्युक्तमन्यत् सर्वं
विना चैकप्राकारयुतमधमाधमम् । उत्कृष्टेऽप्यनुत्कृष्टे नेष्टमनुत्कृष्टेऽप्यु-
त्कृष्टं कर्म कर्तव्यम् । अन्यथा महत्तरो दोषो भवति । तद्ग्रामयजमान-
योश्च । राजविनाशाय भवति । यस्मिन्नालये देवेशादिदेवानामेकाहस्यो-
ककाले नित्यं हविरर्धतण्डुलमेककालस्य दशभारं यथालाभोपदंशैर्युक्तं

घृतगुलसहितमुत्तमोत्तमम् । तथाष्टभारमुत्तममध्यमम् । सप्तभारमुत्तमाधमम् । षड्भारं मध्यमोत्तमम्, पञ्चभारं मध्यममध्यमम्, चतुर्भारं मध्यमाधमम् । त्रिभारमधमोत्तमम्, द्विभारमधममध्यमम्, एकभारमधमाधममित्येके ॥

इति श्रीवैखानसे मरीचिप्रोक्ते एकबेरार्चनाविधिर्नाम सप्तचत्वारिंशः पटलः ॥

## अथाष्टाचत्वारिंशः पटलः ।

अथोर्ध्वं मार्गशीर्षमासर्क्षे विष्णुपञ्चदिने विषुवेऽन्यसङ्क्रमणेषु ग्रहणे वान्यस्मिन् पुण्यनक्षत्रे राज्ञो यजमानस्य वा जन्मर्क्षेऽपि पूजाविशेषः । सर्वत्रालयं मृष्टसिक्तोपलेपनाद्यैः संशोध्य पैष्टया भूमिमलङ्कृत्य वितानध्वजदर्भमालास्तम्भवेष्टनतरङ्गद्वारतोरणकदलीक्रमुकाङ्कुरोदकुम्भाद्यैरलङ्कृत्य ग्रामवीथीश्च संशोध्य प्रातः सन्ध्यार्चनान्ते चोत्सवबिम्बमासाद्याभ्यर्च्य तथैव निवेद्याग्निकुण्डे चुल्ल्यां वाग्निं परिषिच्याज्यमिश्रचरुणा तत्तत्तिथिवारनक्षत्रदैवत्यं वैष्णवं श्रीभूदैवत्यं ब्राह्मं रौद्रं तदालयगतपर्षद्दैवत्यांश्च हुत्वा ग्रामवीथ्यां बलिं निर्वाप्य, एकाहिकोत्सवोक्तक्रमेणोत्सवं कृत्वा स्थाने स्थाने च द्रोणद्वयादहीनैस्तण्डुलैर्यथायोगोपदंशैर्युक्तं हविर्निवेदयेत् । एतदुक्तं स्नपनोक्तक्रमेणाष्टशतैरष्टचत्वारिंशच्चतुर्विंशद् वा कलशैः संस्नाप्याभ्यर्च्य तथैव निवेदयेत् । मध्यमं प्रातर्मध्याह्नयोरर्चावसाने देवेशं शुद्धस्नपनविधानेन संस्नाप्याभ्यर्च्य हविर्निवेद्य तथैव होमं कृत्वाधममार्गमाचरेदित्याह मरीचिः ॥

मार्गशीर्षमासे शुक्लपक्षे द्वादश्यामेकादश्यामाचार्यो यजमानोऽपि त्रिषवणं स्नानं कृत्वाचम्य सन्ध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं च कृत्वालयमाविश्य प्रदक्षिणप्रणामं च कृत्वा देवाभिमुखे समासीनो ध्यायन् समाहितोऽष्टाक्षरमन्त्रं यथोक्तविधिना न्यासं कृत्वा वैष्णवीं यथाकामं जप्त्वा वेदाध्ययनं चापि कारयेत् । अथवा वैष्णवी यथा शृणुयान्मध्याह्ने सायाह्ने च यथास्नानादीनि कृत्वा रात्रौ सर्व-

पापविरहिते देवं ध्यायन्नासीनोऽथ शयीत वा । द्वादश्यां प्रभाते स्नात्वा देवेशं शताष्टकलशैर्यथाशक्त्यभिषिच्य महतीं पूजां कृत्वा गौल्यं हविर्निवेद्य पानीयाचमनमुखवासौ च दत्त्वाचार्यः स्वहस्ताभ्यां पुष्पमादाय सहस्रशीर्षमेकाक्षरं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जप्त्वा मन्त्रपुष्पाञ्जलिं बहुशो दत्त्वा तथैवार्चकैः परिचारकैर्वा दक्षिणपश्चिमोत्तरेषु पुष्पाञ्जलिं कृत्वा तत्काले चतुर्दिक्षु वेदानध्यापयेत् । नृत्तगेयाद्यैः स्तोत्रैर्जयशब्दैः संस्तूयाचार्यदक्षिणां दत्त्वा वैष्णवान् संपूज्याश्नीयात् । अस्मिन् मासे नित्यं गौल्यं हविर्निवेदयति । केचिदेतदर्चनं संवत्सरेऽपि यन्न्यूनं सर्वं सम्पूर्णं संवत्सरार्चनफलं लभेरन्नित्याह मरीचिः ॥

तैष्ये मासे क्षीरं गव्यं देवेशाय निवेदयेत् । सोऽपि संवत्सरनिवेदनफलं लभेत ॥

माघमासेऽगरुकोष्ठाद्यैर्धूपं दद्यात् । सोऽपि संवत्सरधूपदानफलं सिध्यति । तन्मासे पुनर्वसौ राघवस्योत्सवस्नपनादीनि कारयेत् । तदर्थं पूर्ववदङ्कुरानर्पयित्वा पूर्वरात्रौ प्रतिसरोत्सवं कारयित्वा सुवर्णरजतताम्रतन्तुना वा प्रतिसरं कृत्वा सुवर्णरजतताम्रकांस्यपात्रे वा शालितण्डुलान् प्रक्षिप्य शयनस्थाने पञ्चशयनानि वासांसि वास्तीर्य देवमारोप्य सर्वालङ्कारसंयुक्तैर्नृत्तगेयवाद्यैर्जयशब्दैर्धूपदीपैश्च परिवृतो ग्राममालयं वा प्रदक्षिणीकृत्य शयनस्थाने विशेषपूजां कृत्वा पुण्याहान्ते प्रतिसरं बध्नाति । पूर्ववच्छाययेद् देवेशं सह देवीं प्रतिसरमाबध्य शाययीत । लक्ष्मणभरतादिभ्यः पृथगेव शयनं कृत्वा प्रतिसरमाबध्य शाययेत् । प्रभाते स्नात्वा देवमुत्थाप्यालङ्कृत्य ग्राममालयं वा सर्वालङ्कारसंयुक्तं यथोचितं प्रदक्षिणीकृत्यास्थानमण्डपे संस्थाप्य स्नपनोक्तविधिना देवस्य देव्योश्च भरतादींश्च पृथगेव स्नपनं कृत्वा तथा देवस्य स्नपनमन्येषां केवलैः शुद्धोदकैरभिषिच्याथवा शुद्धस्नपनविधिना स्नापयेत् । नृत्तगेयवाद्यैर्विनोदं कारयेत् । महाहविः प्रभूतं वा निवेद्यापूपादिपक्वभक्ष्याणि निवेद्यालङ्कृत्यालयं प्रदक्षिणीकृत्यार्चास्थाने न्यसेत् । एवमुत्सवं कुर्यात् । सोऽपि महोत्सवफलं लभेत । राज्ञो विजयं बलवर्धनं राष्ट्रग्रामस्य समृद्धिर्भवतीति विज्ञायते ॥

फाल्गुने मासि गन्धचन्दनादि नित्यमालेपनार्थं यो दद्यात्, स संवत्सरफलदानं लब्ध्वा सर्वैश्वर्यमवाप्नोति । तन्मासे चोत्तरे लक्ष्मीं देवीं प्रादुर्भूत्वा तस्मिन् दिने देवीभ्यां सह सप्तविंशतिभेदैरभ्यर्च्य, उत्सवस्नपनादीनि कारयेत् । प्रभूतं हविर्निवेदयेत् । अशक्तः केवलैः शुद्धोदकैरभिषिच्य यथाशक्ति निवेदयेत् ॥

चैत्रे मासे चैत्र्यां पौर्णमास्यां देवेशं द्वात्रिंशद्विग्रहैरभ्यर्च्योत्सवस्नपनं च हुत्वा प्रभूतं निवेद्य कदल्याम्रपनसैः सुपक्वैर्बहुभिर्निवेद्य सुगन्धपुष्पैर्बहुभिर्देवेशमलङ्कृत्य पुष्पदामैः प्रपां कृत्वा देवं संस्थाप्य नृत्तगेयवाद्यैर्विनोदं कारयेत् । देवाभिमुखे धान्यपीठे मधुमाधवौ समावाह्याभ्यर्च्यातः पुनर्नित्यमेवं वसन्तकालावधिर्यावत् तावदेवं कुर्यात् ॥

वैशाखे मासि पानीयं तटाके कूप्यां वा प्रभाते वैषेभं स्वच्छं मनोरमैः स्वादुजं तोयं सङ्गृह्योत्पूय, आदित्यरश्मौ निधाय रात्राविन्दुकिरणैरपि कृष्टं वायुसेवितं शीतलं क्षिप्त्वा द्वितीयेऽहनि सुगन्धवासिते नवघटे सम्पूर्योशीरादिभिरेलावासितं नवकरके सम्पूर्य पानीयं यो दद्यात्, सोऽपि संवत्सरपानीयफलमाप्स्यति ॥

तन्मासे रेवत्यां महीदेवीं प्रादुर्भावात् तस्मिन् दिने देवीभ्यां सह देवेशं सप्तविंशतिविग्रहैरभ्यर्च्य उत्सवस्नपनादीनि कृत्वा प्रभूतं निवेद्य तन्मासे विशाखनक्षत्रे विशेषतोऽभ्यर्च्याम्रफलानि बहूनि पयसा सह पाचयित्वा निवेद्य प्रभूतं हविर्निवेदयेदित्येके ॥

ज्येष्ठमासि देवेशस्य स्नानतोयममृतवत् सुसूक्ष्मं क्षौमं कार्पासतान्तवं वा वस्त्रं देवेशाय यो दद्यात्, सोऽप्येकाब्दस्नानतोयदानफलं वस्त्रदानफलं च लब्ध्वा चिरायुषा भवति ॥

आषाढे मासि विधिनार्घ्यद्रव्यं संयोज्य दद्यात्, सोऽपि संवत्सरार्घ्यदानफलं लभेतेति विज्ञायते ॥

श्रावणमासि घृतं दधि निवेद्य संवत्सरनिवेदनफलं लभेत । तस्मिन् मासे कृष्णाष्टमीरोहिणी सौम्याग्नेययुक्ते सा जयन्तीति कीर्त्यते । तस्मिन् दिवसे कृष्णस्योत्सवं कुर्यात् । अङ्कुरार्पणं कृत्वा

तद्रात्रावर्चावसाने कृष्णमण्डनं कृत्वा स्थानमण्डपे स्थाप्य परितः प्रावरणं कृत्वा नृत्तगेयवाद्यैर्युक्तं जयशब्दैश्च देवं संस्तूय पटमुद्धृत्य पुष्पान् विकीर्य वस्त्रमाल्यादीनि विमोच्यान्यद् धौतेनाच्छाद्य पाद्याद्यैरभ्यर्च्य तैलेनाभ्यञ्जनं कृत्वा शुद्धस्नानविधिना स्नाप्य चन्द्रोदये गोक्षीरं नवनीतं च शंनो देवीरिति निवेद्य ताम्बूलं प्रदाय निवेदितं क्षीरं प्रजायाः स्त्रियः पिबति। सा सुपुत्रवती भवतीति। तस्मात् काले पूर्ववत् प्रतिसरोत्सवं कृत्वा शयनस्थाने पञ्चशयनानि वासांसि वास्तीर्य प्रतिसरं बध्वा शाययीत। प्रभाते स्नात्वा देवमुत्थाप्य स्नपनोक्तविधिना स्नपनं कृत्वाथवा शुद्धस्नपनविधिना स्नापयेत्। महाहविः प्रभूतं वा निवेद्यालङ्कृत्यालयं प्रदक्षिणीकृत्यार्चास्थाने संस्थाप्यैतदुत्सवेन सत्प्रजासमृद्धिं विजयं कीर्तिं च वर्धयति। इष्टान् कामानवाप्नोति। विष्णुलोके महीयत इति विज्ञायते॥

प्रोष्ठपदमास्यपूपानि भक्ष्याणि निवेदयति। संवत्सरनिवेदनफलं लभते॥

आश्वयुजे मासि नित्यं ताम्बूलसहितं मुखवासं यो दद्यात्, सोऽपि संवत्सरमुखवासदानफलं लभेत॥

कार्त्तिके मासि देवस्य दीपं यो दद्यात्, सोऽपि संवत्सरदीपदानफलं लभेत। तन्मासपौर्णमास्यां कृत्तिकानक्षत्रयुक्ते कृत्तिकादीपं कुर्यात्। देवालयं शोध्य भूमिं पैष्ट्यालङ्कृत्य देवं विशेषतोऽभ्यर्च्योत्सवस्नपनादीनि कारयेत्। सायाह्ने बहुदीपार्थं घृतं तैलं वाहृत्यास्तंगतेऽर्के देवेशस्योभयपार्श्वे गव्यं घृतं समादाय कर्पूरवर्तिकादीपानुद्दीप्य तथा मुखमण्डपद्वारे च दीपमालासहितं कारयेत्। द्वितीयावरणे तृतीयावरणादिषु दिक्षु विदिक्षु चालयाभिमुखे दीपकूटान् कृत्वा दीपानुद्दीपयेत्। दीपपात्रे महादीपमुज्ज्वाल्याधिदैवमाराध्य बलिपीठस्य पश्चिमे दीपदण्डं संस्थाप्य शुभ्रा ज्योतिरिति दण्डाग्रे दीपं संन्यसेत्। देवं चित्रकक्ष्याद्यैरलङ्कृत्यार्चावसानेऽपूपानि बहूनि पृथुकानि भक्ष्याणि गुडेन मिश्रितानि देवस्य निवेदयित्वा पृथुकान् जुहोतीति। पृथुकं निवेद्य महाहविः प्रभूतं वा निवेद्य, एवं यः

कुरुते भक्त्या सोऽपि कीर्तिश्रीजयेष्टान् कामानवाप्य विष्णुलोके महीयत इति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते प्रतिमासविशेषपूजाविधिर्नाम अष्टाचत्वारिंशः पटलः ॥

---

## अथैकोनपञ्चाशः पटलः ।

अथ शुद्धस्नपनविधिं व्याख्यास्यामः । नित्यार्चनायां स्नपने चोत्सवे चान्यस्मिन् पुण्यर्क्षेषु शुद्धस्नपनमाचरेत् । स्नापनद्रव्याणि सम्भरति । देवागारं प्रविश्य देवस्य पादयोः पुष्पाञ्जलिं दत्वा परं रंह इति हस्ताभ्यां देवमादायालङ्कृते मण्डपे पीठे प्रतद्विष्णुस्तपत इति स्थाप्य पात्रपरिच्छदादिपरिवृतो राजवदुपचारं कारयित्वा त्रिपाद। इन्द्रोऽभिमन्तामिति देवस्य पादौ प्रक्षाल्य विष्णुर्मा रक्षत्विति धौतेन विमृज्य वैष्णवे नम इति पुष्पाञ्जलिं दत्वा शं नो देवीरित्याचमनं ददाति । अष्टाक्षरेण मुखे च पाणौ च धौतेन विमृज्य वृतात् परिति मुखवासं प्रदाय विविधैः स्तोत्रैर्गेयवाद्यैरपि विनोदमपि कारयेत् । तन्मुख्यं गौणं च ज्ञात्वा देवेशं प्रणम्य कुर्यात् । विज्ञापयेत् पूजकः स्वयमेव श्रावयेत् तद्वाक्यं विष्णोर्वाक्यमिति स्मृत्वा सर्वं समाचरति । पुनर्मुखवासं निवेद्य विष्णुगायत्र्या धौतेन वस्त्रेण देवस्य स्कन्धे समाच्छाद्याभावनेन वस्त्रेऽतो देवा इत्यलकान् विकीर्य इदं विष्णुरित्यलकशोधनं कृत्वा तैले सोममभ्यर्च्य त्रीणि पदा इति तैलं शिरसि स्राव्य सोमं राजानमिति मर्दयित्वा विष्णोः कर्माणीत्यावर्त्यावर्त्यालकात् सम्बध्य तद्विष्णोः परमं पदमिति परिमलैः पुष्पमाल्यैरलङ्कृत्य तौ करौ प्रक्षाळनं कृत्वा स्कन्धाद् वस्त्रं विमोच्य तद्विप्रास इत्यङ्गेष्वभ्यञ्जनं कृत्वा तच्छेषं भक्तानां प्रदीयते । विष्णोर्नुकमिति शालिपिष्टेन चन्दनेन देवं परिमृज्य तदस्य प्रियमिति वस्त्रेणार्द्रेण विमृज्य शकुनसूक्तेन देवं समादाय प्रतद्विष्णुस्तपत इति स्नानपीठे संस्थाप्य पूर्ववत् प्रक्षाल्य सौवर्णैश्चूतपत्रैर्वेणुभिर्वा परो मात्रया विचक्रमेति दन्तधावनं तालुशोधनं च

भावयति । पूर्ववदाचमनं दत्त्वा दूर्वाक्षतपुष्पैश्च देवस्य मूर्ध्नि पादपर्यन्तं त्रिर्देव इति सन्धौ सन्धौ संयोज्य पादयोः प्रक्षिपेत् ।

वस्त्रादीन् विमोच्य परिलिखितमित्याम्लेन संशोध्य सूक्ष्मैः सिकतैः शुद्धैर्विष्णवे नम इति यथा बिम्बशुद्धिं तथा शोधयित्वा वारीश्चतस्र इति शुद्धोदकैरभिषिच्य पूर्ववद् धौतवस्त्रेणाच्छाद्य पाद्याचमनं दत्वा कर्पूरादिपरिमलैर्युक्तं हारिद्रं पिष्टेन सिनीवालीति देवस्य सर्वेष्वङ्गेषु समालिप्य पूर्ववच्छुद्धोदकैरभिषिच्य पुनः संशोध्याचमनं दत्त्वा वस्त्रमाल्यादिना विभूष्य नमो वरुण शुद्ध इति क्षीरेण पुष्पोदकैरभिषिच्य भूरानिलय इति गन्धतोयैः संस्नाप्य पूर्ववद् वस्त्रमाल्यादिभिरलंकृत्याग्निं दूतमित्युपवीतं सोमस्य तनूरसीत्युत्तरीयं च ददाति । इदं ब्रह्म पुनीमह इति देवहस्तयोः पवित्रं संयोज्य तद्विप्रास इमे गन्धा इति चन्दनेन सर्वाङ्गं समालिप्य पाद्याद्यर्घ्यान्तमभ्यर्च्य देवेशं प्रणम्य सहस्रधारा यदि स्याच्चेत् पूर्ववत् सहस्रधारैरभिषिच्यालाभे षोडशादिचतुरन्तं यथालाभं कुम्भोदकैर्वा वसोः पवित्रमिति पुरुषसूक्तैर्वाभिषिच्य तत्काले चतुर्दिक्षु वेदानध्यापयेत् । स्तोत्रैर्जयशब्दैर्नृत्तगेयवाद्यैर्घोषयित्वा पुनः शुद्धोदकैरभिषिच्य वस्त्रमाल्यादीनि विमोच्याङ्ग प्रति मित्रः सुपर्ण इति प्लोतेन विमृज्य पाद्याचमनं दत्त्वा पुष्पाञ्जलिं ददेत् । शकुनसूक्तेन देवमुद्धृत्य पूर्ववन्मण्डपे पीठे संन्यस्य वस्त्राभरणगन्धमाल्याद्यैरलङ्कृत्य पाद्याद्यर्घ्यान्तमभ्यर्च्य दूर्वाक्षतगन्धपुष्पे ...* युक्तमेकपात्रे सङ्गृह्य देवस्य पुरः स्थाप्य चतुर्वेदांश्च समावाह्याभ्यर्च्याचार्यो मुष्टिमात्रं गृहीत्वा मकुटोपरि त्रिः प्रदक्षिणं कृत्वा प्रादक्षिण्यवशेन प्राच्यादिचतुर्दिक्षु चतुर्वेदादि प्रस्तुतिजलेन सहितमक्षतमेकपात्रे गृहीत्वाभिमुखे न्यस्य सोममभ्यर्च्य हस्ताभ्यां गृहीत्वा विष्णुगायत्र्या मकुटोपरि त्रिः प्रदक्षिणमावर्तीकरोति । पुनः क्षिपेत् । पश्चात् रक्षादीपविधानेन रक्षादीपं कारयेत् । तत्काले देवस्य त्वेति दर्शनं दर्शयित्वाष्टाक्षरेण छत्रचामरादिपरिच्छदान् संशोधयित्वा विनोदमपि कारयेत् । शकुनसूक्तेन

---

* अत्र किञ्चन ग्रन्थजातं गलितमिति भाति ।

देवमुद्धृत्य हविर्निवेदनस्थाने भूरसि भूः प्रतिष्ठित्येत्यादिना प्रतिष्ठाप्य पुष्पन्यासं कृत्वा पूर्ववद् ध्यात्वा देवेशं प्रणम्यान्तर्निवेश्याक्षरन्यासादीनि कृत्वा समावाह्यासनाद्यैरभ्यर्च्य हविर्निवेद्य पानीयाचमनमुखवासादीन् पूर्ववद् दत्त्वा देवेशमुद्धृत्य पूर्ववन्मण्डपे पीठे न्यस्य वस्त्रमाल्यादीनि विमोच्यान्यैर्वस्त्रैरलङ्कृत्याभ्यर्च्यापूपादीनि भक्ष्याणि भोज्यानि विविधानि पक्वान्यपक्वानि विष्णुगायत्र्याष्टाक्षरेण वा निवेदयति । पूर्ववदाचमनमुखवासौ च दत्त्वा यानमारोप्यालयं प्रदक्षिणीकृत्य देवागारं प्रविश्य पूर्वस्थाने न्यस्य नित्यार्चायां चेज्जीवस्थाने प्रतिष्ठाप्यार्चयेदित्याह मरीचिः ॥

अथ देवेशस्याग्रयणविधिः । यथेष्टमासे शुभे मुहूर्ते कर्त्रनुकूलर्क्षे शाल्यादिव्रीहिप्रियङ्ग्वादिधान्यानाहृत्यालयमलङ्कृत्य शुचौ देशे सर्वोपदंशान् प्रतिगृह्णीयात् । दधिगुडदीपार्थतैलं च कदलीचूतपनसं च नालिकेरफलमरीचादिकर्पूरहारिद्रशाणकाखिलं ताम्बूलक्रमुकफलकदलीपत्राणि नवानि वस्त्राणि विविधानि सम्भृत्याचार्यो यजमानश्च वैष्णवैः सार्धं सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुक्तममृतं च कं वा ?पुरस्तु रामं प्रदक्षिणीकृत्यालयं प्रविश्याभिमुखे न्यस्य देवमानम्य हविष्पाकोक्तविधिना धान्यानि शोध्यावघातं कृत्वा संशोध्य तण्डुलाभिवानानद्भिश्चतुर्वा संक्षाल्य गुडेन मिश्रीकृत्य नालिकेरफलान्वितं पश्चाद्धवींषि बहूनि सर्वोपदंशयुक्तं पाचयित्वा देवेशं संस्नाप्य नववस्त्रपुष्पाद्यैरलङ्कृत्यार्चास्थाने स्थाल्याग्निकुण्डे चुल्ल्यां वा वैष्णवं श्रीभूदैवत्यं तदालयगतपर्षद्देवानां मूर्तिमन्तं हुत्वानेकानां पर्षदानां निवेदनमुत्तमम् । अशक्तश्चेद् बलिदानं कारयित्वा देवस्य निवेदिततण्डुलान् भक्तानां ब्राह्मणादीनां प्राश्नीयात् । एवमाग्रयणं विष्णोर्यः कारयेत्, सोऽपि धनधान्यादिसर्वं समृद्धिं प्राप्नोति विष्णुलोके महीयत इति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते शुद्धस्नपनाग्रयणविधिर्नामैकोनपञ्चाशः पटलः ॥

## अथ पञ्चाशः पटलः ।

अथोर्ध्वं देवेशस्य स्नपनविधिं व्याख्यास्यामः । प्रतिष्ठान्ते चोत्सवान्ते चायने विषुवे व्यतीपातेष्वन्यसङ्क्रमणेष्वब्दान्ते राहुसम्प्लवे गुरुशुक्रोदये मासर्क्षे विष्णुपञ्चदिने राज्ञो रामस्य जन्मर्क्षेऽप्यनावृष्टौ महाव्याधिकोपेऽप्यन्यस्मिन् काम्ये च देवेशस्य स्नपनं कारयेत् । यद्दिने कर्तुमुद्योगस्तद्दिनात् पूर्वं नवमे सप्तमे पञ्चमे त्र्यहे वाङ्कुरार्पणं कुर्यात् । अङ्कुरद्रव्यानाहरेत् । नदीसस्यक्षेत्रे तटाकदर्भमूलगजदन्तोद्धृततथागोविषाणकुलीरवासवल्मीकेष्वष्टौ मृदं यथालाभं गृह्णीयात् । हिमवान् निषधो विन्ध्यविङ्करवेदपर्वतमहेन्द्रहरिश्चन्द्रशतशृङ्गेति कुलपर्वतानष्टौ यथाक्रमेण धूम्रश्वेतपीतरक्तश्यामनीलपिङ्गलवर्णान् रक्तान् वा दशाङ्गुलोत्सेधान् पञ्चाङ्गुलमूलविशालानग्रे त्र्यङ्गुलविस्तृतांश्चतुरश्रान् याज्ञिकैर्वृक्षैर्मृदा वा कारयति ॥

शालिव्रीहियवमाषप्रियङ्गुतिलतिल्वसर्षपमुद्गयवाष्टौ धान्यानि । सर्वालाभे यथालाभं वान्याङ्कुरार्पणोक्तधान्यानामङ्कुरांश्च तदलाभे दूर्वाग्राणि वाहरेत् । श्रीरूपोदकुम्भभेरीदर्पणमत्स्ययुग्मांश्च शङ्खावर्तानष्टमङ्गलान् यथाक्रमेण हेमालर्कबिम्बफलानि श्वेतपीतरक्तशङ्खातिरक्तवर्णानष्टाङ्गुलोत्सेधान् चतुरङ्गुलपीठयुतान् पञ्च प्राग्द्रव्याणि चाहरेत् । पञ्चगव्यघृतमधुदधिक्षीरगन्धोदकाक्षतोदकफलोदककुशोदकरत्नोदकजपोदकसर्वौषध्युदकादीनि द्वादश प्रधानानि द्विरष्टांशं कृत्वा शुक्रमसि ज्योतिरसीत्येकांशं घृतं दधिक्राविण्ण इत्यश्विन्यां दधि आप्यायस्वेति गुणांशं क्षीरं गन्धद्वारेति वेदांशं गोमयं सावित्र्या रसांशं गोमूत्रमेवं संयोजयेत् । एवं पञ्चगव्यं घृतं पञ्चदशाहादर्वाक् नवनीतकं पुष्पवर्णिकं फलद्रावणिकं वा मधु तदलाभे नालिकेरजलं सङ्गृह्य मृण्मयपात्रे न ग्राह्यम् । गव्यं न शुक्तं दधि वा ? सद्यो दुग्धं क्षीरं श्रेष्ठम् । पञ्चगव्याद्यैर्द्रव्यैः पञ्चभिः प्रत्येकमाढकं तदर्धं यथालाभं वा सङ्गृह्य शेषं जलेन पूरयित्वा पिष्टचन्दनादिगन्धद्रव्यसंयुक्तं गन्धोदकमाषसर्षपयवव्रीहितण्डुलैर्युक्तं जलमक्षतोदकं वदष्टांशा-

दहीनं चेत् कदलीचूतपनसनालिकेराद्यैर्यथालाभैर्युक्तं फलोदकम् । चन्दनं वाष्टांशादहीनं प्रक्षिप्य कुशैः सहितं कुशोदकम् । नवरत्नैः पञ्चरत्नैर्वालाभे सुवर्णं वा संयुक्तं रत्नोदकम् । अतो देवादिषण्मन्त्रान् प्रणवश्रुतानभिमन्त्रितं जप्योदकम् । ओषध्यः फलपाकान्ताः । सर्वैस्त्रयोऽधिका वा संयुक्तं सर्वौषध्युदकम् । एतैर्द्वादशप्रधानैर्द्रव्यैः समीपे शुद्धो* ... ... .... श्रान् कलशान् स्नानान् बिल्वपत्रकरवीरपद्मकुमुदानि पुण्यपुष्पाणि । जातीफलकर्पूरोशीरचन्दनमुद्गचणकानां चूर्णं नदीतटाककूपवापीजलेषु तीर्थोदकानि सिंहीनकुलव्याघ्रानन्दादित्यसह्ययापाठासहदेवीपूर्वनौषधीहारिद्राणां चूर्णं षड्भागैकभागं तण्डुलचूर्णयुक्तं हरिणस्थौणेयकपत्रागरुव्याघ्रचोग्रेलुपलमांसीफलैलालवङ्गकर्पूरोशीरानारन्दसादनकुस्तुम्बुरुरिति सर्वगन्धचूर्णानि प्रोतं सूक्ष्मकार्पासवस्त्रं पलाशापामार्गपत्रनन्द्यावर्तकरवीरकुपुत्राणीमान्मूलगन्धजातिहिङ्गुलीकमनःशिलाञ्जनगोरोचनानि धातूंश्च पुण्यपुष्पाण्यनुद्रव्याणि प्रत्येकं समस्तमर्धं यथालाभं गृह्णीयात् । वस्त्रं नवं सुसूक्ष्ममहतमुत्तरीयं च सौवर्णमाभरणं मणिमुक्तयज्ञोपवीतं सौवर्णं तान्तवं वाहृत्य स्नानार्थादिवस्त्राणि सम्भारान् सम्भृत्याढकपूर्णान् कलशान् तद्द्विगुणपूर्णान् करकान् द्रोणपूर्णान् घटान् षड्गुणपूर्णानुदधान्यप्रस्थपूर्णान् शरावान् कलशानामपि धान्यान् यथोचितान्यपि भाण्डानि खण्डस्फुटितकालरहितानि नवानि चाहरेत् ॥

अथ देवालयाभिमुखे पश्चिमे चोत्तरे वैशान्ये यथोक्तं स्नपनमण्डपं कूटं प्रपां वा कृत्वा सर्वत्र वितानध्वजदर्भमालास्तम्भवेष्टनद्वारतोरणपूर्णकुम्भाङ्कुराद्यैरलङ्कृत्य परितः आवरणं कृत्वाभ्यन्तरं गोमयेनोपलिप्य पिष्टतोयं सुतेन सूत्रेण पञ्चविंशतिभागं कृत्वा तन्मध्ये चैकपदे स्नानवेदी लोहोपलशिलेष्टकानां दारुपार्थिवानामन्यतमे तपद्रेरपीठान् प्रतिदिग्भागमष्टाङ्गुलं वा हित्वा यथोचितायामविस्तारं चतुरश्रं द्विमेखलं लोहजं षडङ्गुलोत्सेधं लोहजाद् द्विगुणं शैलजं, शैलजाद् द्विगुणमैष्टकम्, ऐष्टकाद् द्विगुणं पार्थिवम् । लोहजं चेदुत्सेधमेषां पादुकादि करणैर्युक्तं वा तस्योत्तरे वारिमार्गं रसाङ्गुलायतं मध्ये-

---

* अत्र मातृकायां ग्रन्थभागो लुप्तः ।

ऽन्वयातं गोलकं तद्द्विगुणविस्तारं च कारयति । तद्वेद्यां वस्त्रेणाच्छाद्य तदभावे कदल्यादिपत्रैराच्छाद्य तस्यैव परितः कुशान् कूर्चान् विक्षिप्य तस्यैव परितश्चाष्टोपदेशादेशं हित्वा बहिः षोडशभागेषु प्रागादिचतुर्दिक्षु चतुर्द्वारार्थं त्यजेत् । शेषे द्वादशभागे द्वादशप्रधानद्रव्यं न्यासार्थं व्रीहितण्डुलैर्वा गोलकोन्नतं वा वेदिं कृत्वा तद्बहिश्चैन्द्रादिदिग्देवानां तत्तत्स्थाने द्वादशाङ्गुलविस्तृतानि षडङ्गुलोन्नतानि पीठानि कुर्यात् । पश्चिमे द्वारवामे पक्षीशस्योत्तरे द्वारदक्षिणे विष्वक्सेनस्य वेद्युपरिष्टादिन्द्रादीशानान्तं जयादीनर्चयति । धान्यवेदीं गायत्र्या प्रोक्ष्य सुमित्रा न इति स्थण्डिलमुल्लिख्य हिरण्यपाणिमिति दर्भान् प्रागग्रान् उत्तराग्रान् वास्तीर्य कलशानाहृत्य त्रिगुणेनैकसूत्रेण वा यवाङ्गुलमन्तरं वा यथालाभं तन्तुना परिवेष्टयाद्भिः प्रक्षाल्य धारासु सप्त इत्युदकं गृहीत्वा इदमापः शिवा इति मन्त्रेणोत्पवनं कृत्वा रात्रौ चेदग्निसन्निधौ जलं गृह्णीयात् । पञ्चगव्यैर्गन्धैरुत्पूतैरेकैकप्रधानमेकैकोपस्नानं चेति चतुर्विंशत्कलशैः स्नपनमधमाधमम् । एतद् हारिद्रचूर्णसहितमित्येके । एकैकं प्रधानं त्रयस्त्रय उपस्नानाश्चेति अष्टचत्वारिंशत्कलशैः प्राग्द्रव्यैरनुद्रव्यैः सहितमेवं मध्यमम् । द्वौ द्वौ प्रधानं षडुपस्नानं च संयुक्तं प्राक्करणैरनुकरणैः सामान्यद्रव्यैश्च युक्तमष्टोत्तरकलशैः स्नपनमधमोत्तमम् । एकैकप्रधानां चाष्टाष्टोपस्नानं चेति केचित् । शताष्टकाद् द्विगुणं मध्यमाधमम् । त्रिगुणं मध्यममध्यमम् । चतुर्गुणं मध्यमोत्तमम् । पञ्चगुणमुत्तमाधमम् । षड्गुणमुत्तममध्यमम् । सप्तगुणमुत्तमोत्तमम् । चत्वारिंशद्द्वयाधिकसहस्रकलशैः स्नपनमुत्तमोत्तममित्येके । गन्धोदकैरुपस्नानकलशानापूर्य सप्तभिः पञ्चभिस्त्रिभिर्वा कूर्चान् कलशे प्रक्षिप्य तत्पिधानैरपिधाय सोपस्नानैर्द्वादशवस्त्रैरावेष्टयेत् उत्तमम् । अष्टवस्त्रैर्वेष्टनं मध्यमम् । चतुर्वस्त्रैर्वेष्टनमधमम् । तदादि द्रव्याधिदेवतानां तत्तत्पार्श्वे चैकादशविग्रहैरष्टविग्रहैस्त्रिभिर्विग्रहैर्वार्चयेत् । प्रणवादिनमोऽन्तैस्तत्तन्नाममन्त्रैः पूर्वं तोयं ततः पुष्पं पश्चात् तोयं समर्पयेत् । एतत्त्रिकोपचारं सर्वत्र सर्वेषामर्चनार्हमित्येके ॥

अथ विग्रहविहीनमशक्तस्य स्नपनं नवधा भवति । प्रमुखे चतुरश्रमेकपङ्क्तिं कृत्वा तन्मध्ये पञ्चगव्यं उत्तरे तस्योपस्नानं दक्षिणे गन्धोदकं पूर्वे तस्योपस्नानं पश्चिमे हारिद्रचूर्णमेतैः पञ्चकलशैर्युक्तमधमाधमम् । मध्ये पञ्चगव्यं दक्षिणे गन्धोदकमुत्तरे कुशोदकं तत्पूर्वे तत्तदुपस्नानं पश्चिमे हारिद्रचूर्णमेतैः सप्तकलशैर्युक्तमधममध्यमम् । पूर्ववत् पञ्चगव्यगन्धोदककुशोदकान् तत्तदुपस्नानान् विन्यस्य पश्चिमेऽक्षतोदकं वायव्ये रसोपस्नानं नैर्ऋत्ये हारिद्रचूर्णमेतैर्नवकलशैर्युक्तमधमोत्तमम् । पूर्ववन्नवकलशान् विन्यस्य पूर्वे जप्योदकं न्यसेदेतद्दशकलशैर्युक्तं मध्यमाधमम् । पूर्ववन्नवकलशान् विन्यस्य तत्पूर्वे मधु तदुत्तरे तस्योपस्नानं दक्षिणे जप्योदकमेतद्द्वादशकलशैर्युक्तं मध्यममध्यमम् । प्रमुखे दक्षिणोत्तरायतदण्डवत् पङ्क्तिं कृत्वा दक्षिणाद्युत्तरान्तं पञ्चगव्यघृतमधुदधिगन्धोदकाक्षतोदककुशोदकान् विन्यस्य तत्पूर्वे तदुपस्नानांश्चोत्तरे हारिद्रचूर्णं तत्पूर्वे जप्योदकं च विन्यस्य तच्चतुर्दशकलशैर्युक्तं मध्यमोत्तमम् । एतैः क्षीरं तदुपस्नानसंयुक्तं षोडशकलशैर्युक्तं मध्यममध्यमम् । तस्मिन् दिशि तस्योपस्नानसंयुक्तं एतैरष्टादशकलशैर्युक्तमुत्तमाधमम् । तस्मिन् सर्वौषध्युदकमुपस्नानयुक्तमेतैर्विंशतिकलशैर्युक्तमुत्तमोत्तममिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते स्नपनद्रव्यसमुदाय-
नवविधाशक्तस्नपनविधिर्नाम
पञ्चाशः पटलः ॥

## अथैकपञ्चाशः पटलः ।

अथोर्ध्वमाचार्यो यजमानश्च द्रव्यदेवताराधनार्थमेकं कलशोद्धरणार्थं द्वौ चान्यत् परिचारणार्थमेकं होतारमेकमेव वरयित्वा प्रभाते स्नात्वालयमाविश्य यजमानमाचार्यादिभिः सप्तवस्त्रोत्तरीयोष्णीषाद्यैरलङ्कृत्याभिपूज्याचार्यमभ्यन्तरं प्रविश्य देवेशं प्रणम्योत्थाप्य पाद्याद्यर्घ्यान्तमभ्यर्च्य हविर्निवेदनं विना फलानि मुखवासं

वा निवेद्याथवा तत्काले शयनं सङ्कल्प्य देवमारोप्य प्रतिसरं बद्ध्वा द्विमुहूर्तं वा शाययित्वासने शयनं विना कौतुकमेव बन्धयेदिति केचित् । शकुनसूक्तं समुच्चार्य तोयधारापुरःसरं वाद्यघोषेण संयुक्तं देवमानीय स्नानवेद्यां प्राङ्मुखमालयादुदङ्मुखं वा परं रंह इति आस्थाने स्थाप्य पाद्याचमनं प्रदाय यजमानस्य यस्योपचारशक्त्या त्रयोदशोपचारैरभ्यर्च्य प्राच्यामाहवनीयाग्निकुण्डे आघारं हुत्वा वैष्णवं हुत्वा हौत्रं प्रशंस्य देवेशस्य द्रव्यदेवतानां मूर्तिमन्त्रैरावाह्यावाहन-क्रमेण निर्वापं स्वाहाकारं च हुत्वा द्रव्यं प्रति द्रव्याधिदैवत्यं वैष्णवं यजित्वा पश्चात् संस्नापयेत् । अभिमुखे दक्षिणे वा शयित्वा बिम्बार्हे तिष्ठन् वा देवमानस्य प्राणायामं कृत्वा परितः पङ्क्त्या-वीशानेन्द्रयोर्मध्ये नादेयादिमृदं चैकस्मिन् पात्रे चोदुत्यं चित्रमिति विन्यस्य तस्मिन् मेदिनीमभ्यर्च्यैकाक्षरादिना मृदा स्नापयेत् । इन्द्रादीशानपर्यन्तं द्वारदक्षिणपार्श्वेषु च कोणेषु च इदं विष्णुरिति हिमादिपर्वतान् संन्यस्याग्निमभ्यर्च्य पिबे निमग्न इति देवं पर्वतेन प्रादक्षिण्यं तत्तद्दिशि प्राणायामं च कारयति । यमपावकयोरन्तरे शुक्रन्तेति शाल्यादिधान्यानेकस्मिन् पात्रे संन्यस्य वायुमभ्यर्च्य प्राणप्रवृत्तिरिति संस्नापयेत् । यमानिलयोरन्तरे सोमौषधींविधातॄन् संन्यस्य तस्मिंस्तक्षकमभ्यर्च्य वितन्यवाणमिति देवमाराध्य पूर्व-द्वारेषु वामपार्श्वेषु कोणेषु शंसादिति श्रीवत्सादिभूषणांश्च संन्यस्या-धिदैवमिन्द्रमभ्यर्च्य त्वं वज्रभृदिति मङ्गलैः प्रदक्षिणं प्रणामं च कारयति । ऐशान्ये सोपस्नानैः पञ्चगव्यं त्रियम्बकमिति संन्यस्य तस्मिन् सर्वोपस्नानैर्विश्वान् देवान् समभ्यर्च्य वसोः पवित्रमिति पञ्चगव्यैः संस्नाप्य वारीश्चतस्र इति सर्वोपस्नानैराभिषिच्य पूर्व-द्वारोत्तरपदे घृतं घृतप्रतीक इति विन्यस्य तस्मिन् सामवेदमुपस्ना-नेऽप्सरसश्चाभ्यर्च्याग्न आयाहीति घृतेन स्नापयेत् । पूर्वद्वारदक्षिणे पदे यन्मधुनो मधव्यामिति सोपस्नानं मधु संन्यस्य ऋग्वेदं ध्याने-नाराध्याग्निमीळे मधुना स्नापयेत् । आग्नेय्यामणोरणीयानिति तथा

दधिं संन्यस्य यजुर्वेदं रुद्रं चाराध्य इषे त्वोर्जे त्वेति संस्नापयेत् । दक्षिणद्वारपूर्वभागेऽप्सरस्सु यो गन्धा इति तथा क्षीरं संस्नाप्याथर्ववेदान् विन्यस्याभ्यर्च्य शं नो देवीरिति क्षीरेण संस्नापयेत् । दक्षिणद्वारपश्चिमे सोमं राजानमिति तथा गन्धोदकं संन्यस्य क्रतून् मरुतोऽभ्यर्च्य माहित्वा शूर इति गन्धोदकैः संस्नाप्य नैर्ऋते पदे इमा ओषधय इत्यक्षतोदकं संन्यस्य काश्यपं बृहस्पतिं चाभ्यर्च्य इमा ओषधय इत्यक्षतोदकं संस्नाप्य पश्चिमद्वारदक्षिणे सोमं राजानमिति फलोदकं संन्यस्य सोमं नागराजमभ्यर्च्य जपं हुत्वानुमदेम इति फलोदकं संस्नाप्य पश्चिमद्वारोत्तरे यतस्त्वमासीदिति कुशोदकं संन्यस्य तस्मिंस्तक्षकं चाभ्यर्च्य चत्वारि शृङ्गेति कुशोदकैः संस्नाप्य वायव्येऽतो देवा इति रत्नोदकं विन्यस्य विष्णुं गन्धर्वमभ्यर्च्य तत्पुरुषायेति रत्नोदकमभिषिच्य चत्वारि शृङ्गेति संस्नापयेत् । उत्तरद्वारे पश्चिमे ब्रह्मा देवानामिति तथा जप्योदकं संन्यस्य पवित्रविद्याधरानभ्यर्च्य पूतसुस्नेति संस्नाप्योत्तरद्वारपूर्वे चित्रं देवानामिति तथा सर्वाभ्युदकं विन्यस्यादित्यप्सरसं चाभ्यर्च्य चत्वारि शृङ्गेति संस्नापयेत् । पञ्चगव्याद्यैर्द्रव्यैरन्तरे ईषदुष्णोदकं संस्थाप्य देवं तत्तत्प्रधानानन्तरे पूर्ववस्त्रं विसृज्यान्यत् धौतं परिधायाष्टोपचारैरभ्यर्च्य ताम्बूलं दत्वा करकोदकेन द्रव्यं प्रति प्रणवेनाभ्युक्ष्यादाय देवं सकृत् प्रदक्षिणं कृत्वाभिषेकं च कुर्यात् । यमनीलयोरन्तरे इमाः सुमनस इति पुष्पाणि चैकस्मिन् पात्रे संन्यस्याधिदैवतं धातारमभ्यर्च्य धाता विधाता इति देवमाराध्य नीलवरुणयोरन्तरे वन्ध्या एषो नु जातीफलादिचूर्णं संन्यस्य चक्रमभ्यर्च्य ऋचो यजूंषि संस्नाप्य वरुणोदानयोरन्तरे एते शतमिति अश्वत्थादिकषायचूर्णं विन्यस्य वारीश्चतस्र इति नादेयादितीर्थतोयं च विन्यस्य कषायेषु वरुणतीर्थोदके सुब्रह्मण्यमभ्यर्च्य स एकदेवेति कषायेणोद्वर्तनं स सर्ववेत्तेति तीर्थोदकैः संस्नाप्य सोमोदानयोर्मध्ये सिंहादिवरौषधीन् संन्यस्य रुद्रमभ्यर्च्य सोमैश्च साङ्गमिति वरौषधीः संमार्ज्य नीलपङ्क्ती-

शयोर्मध्ये सिनीवालीति हारिद्रचूर्णेन संन्यस्य देवसेनामर्चयित्वातो देवादिना हारिद्रचूर्णेन संस्नापयेत् । इमे गन्धेतीशानसोमयोर्मध्ये हरेणापूर्वं सर्वगन्धचूर्णं संन्यस्य इन्द्रमभ्यर्च्य त्वं स्तृरिति संस्नाप्या-पोहिष्ठा मयो भुव इत्युष्णोदकं संस्नाप्याचमनं दत्वा तत्पुरुषायेत्यै-शान्ये प्रोतवस्त्रोत्तरीयाभरणयज्ञोपवीतानि शान्तस्य पश्चिमे पलाशानि मूलगन्धानि तस्य पूर्वभागे जातिहिङ्गुलिकादि धात्रीं च संन्यस्य प्रोते त्वष्टारं मूलगन्धे ब्राह्मणं धातुषु दुर्गां च त्वष्टा वस्त्रेषु भूषणेषु षण्मुखं चाराध्य श्वभ्रस्य दक्षिणे पार्श्वे पीठं संन्यस्य तत्र देवं स्थाप्य देव-माराध्य मित्रः सुपर्ण इति प्रोतेन विमृज्य तेजो वसव इति वस्त्रं सो-मस्य तनूरसीत्युत्तरीयं भूतो भूतेष्वित्याभरणानि पुष्पमालादिभिरल-ङ्कृत्याग्निं दूतमित्युपवीतं दत्वा य एष विभ्रादिति मूलगन्धेन संस्पृश्य त्वं भूर्भुवो बुद्धिमतामिति जातिहिङ्गुलीमनःशिलाञ्जनाद्यैरलङ्कृत्य पाद्यादिनार्चयति प्रणवपूर्वं गायत्र्या मृदादिद्रव्याणि न्यासनं कृत्वा तत्तद्द्रव्यधारकं तत्तदधिदेवं चतुर्मूर्त्तिमन्त्रैः समाराध्य पवमानाद्यैः स-मुच्चार्य देवेशं संस्नापयेदित्येके ॥

ध्रुवार्चादेव स्नापयेत् । मुखमण्डपे देवालयाभिमुखे स्नपना-लयं कृत्वालङ्कृत्य पूर्ववत् पञ्चविंशतिभागं कृत्वा तन्मध्ये द्रोणद्वयं सम्पूर्णकुम्भं सूत्रेण वेष्टयित्वाद्भिः प्रक्षाल्याद्भिरापूर्य तस्मिन् सुवर्णं निक्षिप्य तस्यैव परितः पूर्ववन्मृदादिद्रव्याणां संन्यस्याधिदैवमाराध्य देवेशस्य परितस्तत्पीठार्धे वा पूर्ववज्जायादींश्चाभ्यर्च्य कलशानादा-याभ्यन्तरं प्रविश्य तथैव स्नापयेत् । ततः कुम्भोदके सर्वतीर्थमित्य-भ्यर्च्यातोदेवादिना संस्नाप्यालङ्कारानर्पयेत् ॥

एष विशेषोऽन्यत् सर्वं समानं भवति । उत्सवं बिम्बमादाय कनिक्रदादिनालयं प्रदक्षिणीकृत्यार्चास्थाने वा देवं संस्थाप्याभ्य-र्च्य शुद्धस्नपनविधिना संस्नाप्याभ्यर्च्य तं निवेदयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते स्नपनविधिर्नाम

एकपञ्चाशः पटलः ॥

## अथ द्विपञ्चाशः पटलः ।

अथोत्सवचक्रलक्षणम् । सौवर्णं राजतं ताम्रमायसं दारवं वा मानाङ्गुलेन मात्राङ्गुलेन ुवबेरस्य कौतुकस्य यो देहलब्धाङ्गुलेन वा षोडशाङ्गुलद्वादशाङ्गुलमष्टाङ्गुलं वा मानेन समवृत्तव्यावरणवर्गविस्तारं गोलकं तन्मध्ये वलयमर्धाङ्गुलं तन्मध्ये चालङ्कृत्य कूटस्थविस्तार-द्वयाङ्गुलं पद्मं कृत्रिमवक्त्रं वा वृत्तपट्टान्मध्ये चरायामाद् अर्धाङ्गुलं पञ्चांशैः परिवृतो वेणुपत्रवदाकारचतुरश्रं वा चतुर्विंशत्करैर्युक्तं मध्यमम् । षोडशैर्युक्तमधमम् । मूर्ध्नि पार्श्वयोर्ज्वालायामं त्र्यङ्गुलं प्रभाज्वालावत् त्रितयं तत्पट्टमध्ये वल्मी समचतुरश्रं लिखित्वा युञ्जीत । तस्याधस्तात् फलकात् कुम्भताटीर्युगाङ्गुलविस्तारोच्छ्रयषण्मात्रायतादुभौ पार्श्वयोर्द्वौ सिंहौ चक्रमुद्वहौ वा कुर्यात् । दण्डं तद्द्रव्यैः सहैवं कुर्यात् । अथवा दारवतेन वृक्षदण्डेन वा तच्चक्रायामात्रिगुणं तत्समं वा यथार्हं नाहं षोडशद्वादशाङ्गुलं वा मूलनाहमष्टादशोनमानार्हं पीठे चाग्रे च अङ्गुलं संयोज्य दण्डमध्ये वलयं च दण्डाधस्तात् पीठं चतुरङ्गुलोन्नतमष्टाङ्गुलविस्तारायामं चतुरश्रं वृत्तं वा पद्माकारमष्टदलैरावृतं कृत्वा सुदृढं संयोज्यात्रानुक्तं सर्वं शिल्पशास्त्रविधिना कारयेत् । अथवा नवतालेन चक्रं मानाङ्गुलेन सप्ताङ्गुलं नवाङ्गुलमेकादशाङ्गुलं वा द्विभुजं प्राञ्जलीकृत्य सुस्थितं किरीटाद्याभरणान्वितं त्रिभागैकभागं पीठं तस्यापरभागे चक्रविस्तारं मानाङ्गुलेन द्वादशाङ्गुलमुत्तमम् । नवाङ्गुलं मध्यमम् । षडङ्गुलमधमम् । अन्यत् सर्वं पूर्ववत् । तस्य शिरसि चक्रं संयोज्य सुदृढं कारयेत् ॥

अथोर्ध्वं स्थापनां वक्ष्ये । शुभे दिने कर्त्रनुकूलर्क्षे तद्दिनात् पूर्वमङ्कुरानर्पयित्वा तच्चक्रमुभौ पार्श्वयोर्मुखं स्मरन् संशोध्य वास्तुहोमं कृत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा जलेन गव्येन कुशोदकेन च प्रत्येकमधिवास्य प्रतिमा चेत् पूर्ववदक्षिमोचनान्ते मन्त्रेण कारयेत् । अधिवास्य देवालयाभिमुखे यागशालां कृत्वा तोरणाद्यैरलङ्कृत्य तन्मध्ये शय्यावेदीं चक्रस्याध्यर्धांशविस्तारां तत्तुर्यांशोत्सेधां चतुरश्रां वेदिं कृत्वा तत्प्राच्यामौपासनाग्निकुण्डं कृत्वा तत्प्राच्यां स्नपनश्वभ्रं च कृत्वा पूर्वेद्युरपराह्णेऽधिवासगतं चक्रमासाद्य

दाय शुद्धोदकैः संस्नाप्यालयमाविश्य यज्ञालयात् पश्चिमे चोत्तरे प्राङ्मुखं संस्थाप्य, आघारं हुत्वाघारान्ते चतुराढकसम्पूर्णं खण्डस्फुटितकालरहितं कुम्भं सङ्गृह्य तन्तुना परिवेष्ट्याद्भिरापूर्य वस्त्राभ्यां वेष्टयित्वा पञ्चरत्नं सुवर्णं वा पञ्चायुधांश्च निक्षिप्य चक्रस्याभिमुखे धान्यपीठे कुम्भं संन्यस्याचार्यश्चोत्तराभिमुखो भूत्वा चक्रं ध्यायन् कुम्भेऽम्भसि समावाह्य तच्चक्रं कुम्भं समादाय श्वभ्रे प्रतिष्ठाप्य सप्तभिः कलशैः संस्नाप्य वस्त्राद्यैरलङ्कृत्य शय्यावेद्यां धान्योपरि पञ्चशयनानि पञ्चवस्त्राणि चास्तीर्य कुम्भं चक्रारोप्य तथैव प्रतिसरं दक्षिणे पार्श्वे करे बन्धयित्वा तन्मन्त्रेण शाययित्वा, उत्तराच्छादनं कृत्वा तथैव हौत्रं प्रशंस्य दक्षिणप्रणिधौ चक्रमूर्तिमुत्तरप्रणिधौ पञ्चायुधमूर्तिमन्त्रान् समावाह्यावाहनक्रमेण जुष्टाकारं स्वाहाकारं च कृत्वातो देवादिवैष्णवं मन्त्रं भूमाननोऽग्रे वन्ध्यानय एष इति द्वौ सुदर्शनौ तौ चक्रगायत्रीं चाष्टोत्तरशतमावृत्तिं कृत्वा रात्रिशेषं व्यापोह्य प्रभाते स्नात्वाचार्यादयो देवालयं गत्वा यागस्थानं प्रविश्य चक्रमुत्थाप्याभ्यर्च्य मुहूर्ते समनुप्राप्ते त्वाचार्यादिभ्यो दक्षिणां दत्वाभ्यन्तरे मुखमण्डपे वा दक्षिणपार्श्वे कृते पीठे रत्नं सुवर्णं वा निक्षिप्य तन्मन्त्रेण प्रतिष्ठाप्य तद्बीजाक्षरं न्यस्य कुम्भस्थां शक्तिं तन्मन्त्रेणावाह्यासनाद्यैरभ्यर्च्य मुहूर्ते समनुप्राप्ते हवींष्यपि निवेदयेत्। एवं यः कुरुते भक्त्या स सर्वानिष्टान् कामानवाप्नोति। रिपून् सर्वान् जयिष्यति। विष्णुलोके महीयते। इति विज्ञायते॥

इति श्रीवैखानसे मरीचिप्रोक्ते चक्रलक्षणस्थापनविधिर्नाम द्विपञ्चाशः पटलः॥

## त्रिपञ्चाशः पटलः।

अथ देवेशस्योत्सवविधिं व्याख्यास्यामः। त्रिविधमुत्सवम्। नित्योत्सवं शान्त्युत्सवं श्रद्धोत्सवमिति : द्वादशमासेष्वेकस्मिन् मासे दिनं प्रति तत्काले नित्यं सङ्कल्प्य क्रियते, नित्योत्सवम्। शान्त्युत्सवश्रद्धोत्सवौ ......:..... श्रद्धोत्सवौ। वित्ते यदा युक्तोऽयं

सम्यक् श्रद्धया क्रियते श्रद्धोत्सवो भवेत् । नवाहं सप्ताहं पञ्चाहं त्र्यहम् । तद्द्विगुणं मध्यमत्रयम् । तत्त्रिगुणमुत्तमत्रयं भवति । ग्रामस्य यजमानस्य वा जन्मर्क्षे प्रतिष्ठादिने विष्णुपञ्चकमासर्क्षे विषुवेऽयने वावभृथं सङ्कल्प्य तत्पूर्वे चोत्सवादिनं त्रिगुणं कृत्वा तदुत्सवादौ सायें ध्वजारोहं कारयति । ध्वजदण्डमृजुं कृमिकोटरमनुद्वेजितं विमानविस्तारसमुत्सेधं समं वा तत्तत्पादाधिकमर्धाधिकं पादहीनमर्धं वा चतुर्विंशत्यङ्गुलिपरिणाहं वा वैष्णवं जातीचम्पकक्रमुकं वान्यैर्वा शुभैर्वृक्षसारैर्वा सङ्गृह्यागस्त्यं वेति केचित् । ध्वजपटमहतं शुद्धं दृढं कार्पासतान्तवं सूक्ष्मं चतुर्दशत्रयोदशद्वादशैकादशनवाष्टसप्तषड्ढस्तायामं सप्तषट्पञ्चचतुस्तालत्रिस्तारं वस्त्रद्वयं संयोज्य, एकं वेति केचित् । केशादीन् परिहृत्य जलेन शोधयित्वा संशोष्याग्रेणाग्रं पुच्छेन पुच्छं कृत्वोर्ध्वभागे तत्पटविस्तारार्धं शूर्पाकारवदग्रं कृत्वा तत्पटस्य परभागे तद्विस्तारार्धायतविस्तारौ पादौ मध्यादादवग्रान्तं क्रमात् क्रमशो पादौ युक्तितः कृत्वाग्रादधः पादोर्ध्वे तिर्यग्यष्टिं वेणुं वान्यैः शुभवृक्षैर्वा तत्पटविस्तारायाममङ्गुलीपरीणाहं योजयति । एवं कृते ध्वजपटमध्ये गरुडं मूलबेरस्य बाहुसीमान्तं कर्णसीमान्तं स्तनान्तं नाभिसमं वाथवा शुद्धद्वारसमं वा पादहीनं पादाधिकं वा गर्भगृहस्यार्धं त्रिपादं समं वा चैतेष्वेकमानेन नवतालेन भागेन पञ्चवर्णयुतं वामपादं समाकुञ्च्य दक्षिणं किञ्चित् प्रसार्य द्विभुजं प्राञ्जलिं पक्षद्वययुतं स्वर्णवर्णं ललाटे ताम्रनासाग्रं श्यामवर्णं करपादद्वयरक्ताभं नखदशनौ शङ्खाभमेवं पञ्चवर्णैर्युक्तं सर्वाभरणभूषितं सुमुखाख्योरगारूढं दक्षिणं बाहुं कौबेरं मकुटोज्ज्वलितं शुक्रश्यामवासमं समेखलं किङ्किणीजालयुक्तं हाराङ्गदनूपुरसहितं सुपर्णं लेखयेत् । तस्योभयपार्श्वयोश्चक्रं शङ्खं तथा दीपाधारौ चामरयुग्मौ, उपरि छत्रमधस्तात् पूर्णकुम्भं पालिकां कारयति ॥

ध्वजदण्डमायामषड्भागं पञ्चभागं चतुर्भागं वा कृत्वा तदेकांशायामं वैष्णवं यष्टिं सङ्गृह्य दण्डाग्रे यज्ञोक्तवृक्षैरन्यैः शुभवृक्षैर्वा द्वितालायामं तद्दण्डनाहं त्रिस्तारं तन्मध्ये छिद्रयुतं यष्ट्याधारागि

त्रीणि सभाहृत्य तेषामग्रे यष्टियोजनार्थं सुषिरं कृत्वाचलं संयोजयेत्। तद्दण्डाग्रे ऊर्ध्वे यमद्वयं समं वा यष्टिमधिकं कृत्वात्रैवाधारमेकं तदधश्चैकं तयोर्मध्ये चैकमाधारं क्रमेण संयोज्य यष्ट्यग्रे त्रिभागं द्विभागं वा हित्वा यन्त्रवलयं ताम्रेणायसेन वा कारयित्वा संयोजयति। अस्मिन् ध्वजदण्डद्विगुणायाममङ्गुलपरीणाहं त्रिवृतं तन्तुरज्जुं संयोज्य दण्डं प्रक्षाल्य दर्भमालयाबध्य यूथाधिपाक्षहान्तयोः पृष्ठे चक्रस्य पृष्ठे वाक्षहान्तस्य प्रमुखे वा षट्तालं पञ्चतालं चतुस्तालं व्यपोह्य पञ्चतालं चतुस्तालं त्रितालं वावटं खनित्वा तदवटे तन्मूलेऽष्टदलैरावृतं तद् वृत्तं पद्माकारमालयाभिमुखमण्डपे प्रपायां वा वितानाद्यैरलङ्कृत्य तत्प्राच्यां ध्वजपटविस्तारायामं तस्यार्धविस्तारं ध्वजस्य तत्पश्चिमे चतुर्विंशत्यङ्गुलायामविस्तारं चक्रस्य तस्योत्तरे तथैव विष्वक्सेनस्य धान्यैस्त्रिवेदसंहितानि पीठानि कृत्वा तद्वायव्ये चैशान्ये वाग्निकुण्डमौपासनं कृत्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां संशोध्य दद्भ्यः स्वाहादीन् गरुडध्वजं वैष्णवं च तत्तन्मन्त्रेणाक्षिमोचनं कृत्वापोहिष्ठादिना प्रोक्ष्य, अग्निं परिस्तीर्य पश्चाच्चतुराढकसम्पूर्णान् कालविहीनं कुम्भं तन्तुना परिवेष्ट्याद्भिः प्रक्षाल्य तेनाद्भिरापूर्य वस्त्रयुग्मेनावेष्ट्य इदमापः शिवा इत्यभिमृश्याक्षतं सुवर्णं कूर्चं विक्षिप्य गरुडस्याभिमुखे कुम्भं संन्यस्य गरुडं ध्यायन् कुम्भेऽम्भसि समावाह्य तत्कुम्भं गरुडं तथाभ्युक्ष्य तथैव प्रतिसरं बद्ध्वा पूर्ववज्जुहुयात्। तत्तद्बीजाक्षरं न्यस्य हृदयं न्यस्य तत्कुम्भस्थां शक्तिं कूर्चेनादाय गरुडं ध्यायन्, तन्मूर्तिमन्त्रेणावाह्य तन्मण्डपे कृते धान्यपीठे पश्चिमाभिमुखं ध्वजं संस्थाप्य तत्पश्चिमे प्राङ्मुखं चक्रमुत्तरे दक्षिणाभिमुखं च विष्वक्सेनं संस्थाप्य गरुडं गरुडगायत्र्या शान्तं चक्रौ च तन्मन्त्रेणासनाद्यैरष्टविंशत्युपचारैरभ्यर्च्य मुद्गान्नं गरुडस्यान्ययोः शुद्धान्नं निवेद्य मुखवासं दत्वा पुण्याहं वाचयित्वाग्नेय्यां धान्योपरि न्यस्तभेर्यां भूतीशं महाभुजङ्गविष्णुभक्तं गदाधरमिति भूतीशमावाह्याभ्यर्च्य हविर्निवेद्य वस्त्राद्यैर्वादकमलङ्कृत्याचार्यः प्राङ्मुख उदङ्मुखो वा यष्टिमादाय दक्षिणहस्तेन स्वर्भुवर्भूरिति वदन् त्रिभिः सन्तानयेत्।

पश्चाद् वादकमलङ्कृत्य गरुत्तालैः सर्ववाद्यैः समायुक्तभेरीं सन्ताड्य पश्चादाचार्येण द्रोणैर्द्रोणार्धैराढकैर्वा तण्डुलैः पक्वान्नं कटाहे प्रक्षिप्य पक्वैश्च मुद्गनिष्पावतिलापूपलाजैर्यथालाभैर्वा संयुक्तं प्रभूतं च बलिमाहृत्य शिष्येण वाहयित्वा वादित्रघोषेण पूर्वमलङ्कृत्य ध्वजे रथे शिबिकायां वारोप्य चक्रशान्तौ नयेत् । अथवा हस्तेन शिरसा धारयन् अन्नार्घ्यपुष्पबलिमाराध्याचार्यः पुरस्ताद् गच्छेत् । आलयद्वारपालेभ्यो लोकपालेभ्यो विमानपालेभ्योऽनपायिभ्यश्च बलिं दत्वा पश्चादैन्द्रादिक्रमेण पश्चिमविमानं चेत् वरुणादिक्रमेण यस्यां दिशि विमानं तद्दिक्पालपूर्वं वा बलिं दत्वोत्सवं घोषयेत् ॥

ग्रामे यज्ञस्य घोषदसीत्यादि यथाक्रमं तद्दिग्देवमन्त्रांश्च घोषयति । अत्र गद्यपद्यैस्तद्देशभाषाभिः गाथाभिः सह सर्वे देवाः सर्वा देव्यः सर्वे ऋषयः सर्वा ऋषिपत्न्यः सर्वे पितरः सर्वाः पितृपत्न्यः सिद्धविद्याधरगरुडगन्धर्वयक्षराक्षसभूतपिशाचनागकिन्नरासुराद्यष्टादश गणाः सर्वेऽप्यायान्त्वित्युक्त्वाघोष्यैवं ग्रामं प्रदक्षिणं कृत्वा शकुनसूक्तं जपन् आलयं प्रविश्य प्रदक्षिणं कृत्वा विष्वक्सेनमनपायिनश्च स्वस्थाने प्रतिष्ठाप्य ध्वजस्थानमाविश्य यानादवरोप्य पाद्याद्यैरभ्यर्च्यानुमान्य यन्त्ररज्जुं समादाय ध्वजस्तम्भान्तस्त्रिवेदिं बध्नीयात् । आचार्यः प्राङ्मुख उदङ्मुखो वा स्थित्वा ध्वजदण्डाग्रे यन्त्रेणारोहयेत् । भूरसि भूरित्यादिना तत्तन्मन्त्रेण ध्वजदण्डस्य मूलं हस्ताभ्यामवलम्ब्य ध्वजं प्रतिष्ठापयामीति प्रतिष्ठाप्यासनाद्यैरभ्यर्च्य पुण्याहं वाचयित्वा ब्रह्मघोषणं च कृत्वा मुद्गान्नं निवेद्य पानीयमाचमनं ताम्बूलं च दत्वा ध्वजगरुडस्य निवेदितमन्नं पिण्डं कृत्वाऽश्नीयाद् या स्त्री पुत्रकामी सा बलायुरारोग्यायुष्मन्तं पुत्रं प्रसूयते । यावद् ध्वजावरोहणान्तं तावद्द्विस्त्रिकालं द्विकालमेककालं वा निवेदयेत् । जयमत्युच्छ्रितं धन्यं ध्वजमिति चतुर्भिर्नाममन्त्रैरहरहस्त्रिसन्ध्यं सप्तविंशतिविग्रहैः पूजयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते उत्सवार्थध्वजारोहणविधिर्नाम त्रिपञ्चाशः पटलः ॥

## अथ चतुष्पञ्चाशः पटलः ।

अथोत्सवारम्भे यजमानः सर्वलोकशान्त्यर्थं विष्णोरुत्सवं कारयेत् । शिबिकारथरङ्गडोलायन्त्रमण्डपगजतुरगसिंहव्यालहंसभ्रमणहसितादीनां शक्तितः कुर्यात् । आलयाभिमुखे दक्षिणेऽन्यस्मिन्नुक्ते देशे द्वितीयावरणे वास्थानमण्डपं कूटं वा पञ्चहस्तादिभेदेन प्राङ्मुखं दक्षिणामुखमालयदिङ्मुखं वा परिकल्प्य द्वात्रिंशत्स्तम्भादिशतस्तम्भान्तं मण्डपं कूटं प्रपां वा कृत्वा प्रपायां तन्मध्ये वर्षनिवारणार्थं कूटं युक्तितः कारयेत् । सर्वं वितानध्वजपताकमुक्तादामस्तम्भवेष्टनमुत्तरङ्गदर्भमालावेष्टैरलङ्कृत्य द्वारेषु तोरणपूर्णकुम्भदर्भमालाकदलीक्रमुकदीपाङ्कुरैरलङ्कृत्य माला यत्र यत्र दीपहस्तदीपान् भेरीपटहमद्दलगोमुखतालकाहलनववंशीझर्झरीवञ्चुलमद्दलशङ्खसुषिरझल्लरीत्यादीनि शक्तितः कारयेत् । छत्रैर्नानाविधैः पिञ्छैरनेकविविधैर्ध्वजपताकैर्ध्वजमालायुतैर्वितानैः स्तम्भैः स्तम्भवेष्टनैराहृत्य नर्तकान् गायकान् परिचारकांश्च स्वं स्वमन्यं वाहूय यजमानश्च पूर्वेद्युरेव पूर्वाह्णे देवेशस्य द्विगुणार्चनार्थं कुम्भदेवाराधनार्थं होमाध्वर्युबलिदानार्थमाह्वानार्चकमेवं पञ्चपदार्थिनः पञ्चदशपरिचारकांश्च वरयित्वा यथोक्तसमित्पुष्पदर्भहोमद्रव्यं पुष्पगन्धधूपदीपार्घद्रव्यं नववस्त्रतन्तुहेमरत्नधनधान्यतण्डुलघृतदधिक्षीरं च दीपार्थं घृततैलं वालाभे पार्थिवं घृतेषु दुर्गन्धयुतं त्यक्त्वान्यमाहरेत् । अर्धं द्विरर्धं तण्डुलं बहूपदंशान् फलगुडसहितं भक्तानां भोजनार्थं यानि द्रव्याणि तानि सम्भरति । तद्ग्रामवासिनः सर्वेऽलङ्कृतास्तत्परा हर्षयुक्ता भवेयुः । ग्रामवीथीः संशोध्य गृहं प्रति द्वारेषु दीपाङ्कुरोदकुम्भादिनावभृथान्तं नाहविष्याशिनस्तत्पाङ्क्तिनववस्त्रोत्तरीयाभरणयुताः पुरुषसूक्तपूर्वमनुनारायणाष्टाक्षरद्वादशमक्षरं च पारायणं भगवतो देवस्य यानि कर्माणि समारभेत् । ततो देवालयं प्रविश्य देवं प्रणम्योत्सवबिम्बं देव्योश्च तदलाभे स्नपनं तदलाभे कौतुकं वाहृत्य मध्याह्नार्चनान्ते स्नपनोक्तविधानेनोत्सवादौ यथाशक्ति कलशैः संस्नाप्याथवा केवलैः शुद्धोदकैर्वाभिषिच्याभ्यर्च्य हविर्निवेदयेत् । तदालयगतदेवानां सर्वेषां परिवाराणां च यावत्तीर्थं तावत् त्रिकालं

द्विगुणमभ्यर्च्य हविर्निवेदयति । परिवारदेवानां बिम्बाभावे तत्तत्पीठे तत्तद्देवानभ्यर्च्यैककालं वा हविर्निवेदयेत् । सायाह्ने यजमानोऽर्चका-चार्यशिष्यैः सार्धं वस्त्रोत्तरीयाभरणैरलङ्कृत्य चक्रवंशान्तानां सप्त-विंशतिविप्रर्हैरभ्यर्च्यालङ्कृत्य खनित्रं चानीय सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुक्तमाचार्यो विष्णुर्मां पात्वितीत्युक्त्वाग्रतो गच्छेत् । आलयाद् ग्रामाद् वा प्राच्यामुदीच्यामैशान्यां दिशं गत्वा तत्र संशो-ध्योपलिप्य तस्मिन् नवतालमानेन भूलोकवद् भुवमुल्लिख्य तन्मध्ये महीदेवीं ध्रुवबेरस्य बाहुमानं स्तनान्तं वोर्ध्ववक्त्रमैशान्ये न्यस्तमौ-लिकां नैर्ऋत्यां न्यस्तपादां दक्षिणमाकुञ्च्य वामं प्रसार्य यथालाभ-माभरणमङ्गलयुक्तां कल्पयन्त्यां चाहिष्काम ? याद्यैरभ्युक्ष्यैकादशोप-चारैरभ्यर्च्य तमनुमान्य ललाटे बाह्वोः स्तनयोर्वा मेदिनीमिति म-न्त्रेणाचार्यः प्राङ्मुख उदङ्मुखो वा त्वां खनामीति खनित्वा हेमा-दिपात्रे मृदं गृहीत्वा वस्त्रेणाच्छाद्य ततः क्रमेण ग्रामं प्रदक्षिणीकृत्य देवालयं प्रविश्याङ्कुरार्पणस्थाने मृदं संन्यस्य विधिनाङ्कुरार्पणं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
मृत्सङ्ग्रहणविधिर्नाम चतुष्पञ्चाशः पटलः ॥

## अथ पञ्चपञ्चाशः पटलः ।

अथालयाभिमुखे दक्षिणे वाग्नेय्यां वा यागशालां पञ्चहस्ता-दहीनां चतुर्द्वारयुतां वा मण्डपं कूटं वा कारयित्वा तोरणपूर्णकुम्भवि-तानध्वजदर्भमालाद्यैरलङ्कृत्य मध्ये चाष्टतालायामां चतुस्त्रिद्वितालो-त्सेधां कुम्भवेदीं च कृत्वा तत्प्राच्यां पूर्ववत् सभ्याग्निकुण्डं कृत्वो-पलिप्य पैष्ट्या भूमिमलङ्कृत्य तस्योपरि द्व्यङ्गुलमुत्सेधं धान्यान्या-स्तीर्य नवभागं विभज्य पुष्पाक्षतैरवकीर्य चतुःपार्श्वे दीपाष्टमङ्गल-पञ्चायुधानि परितो न्यस्य खण्डस्फुटितकालरहितानि नवकुम्भानि समाहरेत् । एतेषु द्रोणद्वयपूर्णान् इन्द्रं नरो न इति तन्तुना यवान्तर-मावेष्ट्य शुची वो हव्येति प्रक्षाल्य नद्यां तोयं दिवा सङ्गृह्य धाराशु

सप्त इति वस्त्रेणोत्पवनं कृत्वोशीरादिगन्धैर्वासयित्वा, इदमापः शिवा इति कुशेनाभिमन्त्र्याद्भिः कुम्भान् सम्पूर्याक्षतकूर्चान् विक्षिप्य पृथक् पृथग् वस्त्रेणायुग्मेनावेष्ट्य पद्मरागवज्रवैडूर्यपुष्यरागमौक्तिकप्रवाळमरकतगोमेदेन्द्रनीला इति नवरत्नानि मध्यमादिनवदिक्षु नवकुम्भेषु गायत्र्या संन्यस्य नवरत्नानामलाभे सुवर्णं वा निक्षिप्य प्रधानकुम्भे पञ्चायुधांश्च सुवर्णेन निक्षिप्य प्राणायामं च कृत्वा सङ्क्रमेण तद्वेद्यां विष्णुमूर्तैर्नवकुम्भान् समारोप्य तान् पिधानैरपिधाय सभ्याग्निकुण्डे चाघारं हुत्वाघारान्ते त्वाचार्यस्तद्वेद्या दक्षिणे चोत्तराभिमुखस्तिष्ठन् प्राणायामं च कृत्वा समाहितो ध्यायन् मध्ये प्रधानकुम्भे देवेशं विष्णुं देव्यौ च प्राच्यां पुरुषं दक्षिणे सत्यं पश्चिमेऽच्युतमुत्तरेऽनिरुद्धमाग्नेय्यां कपिलं नैर्ऋत्यां वज्रं वायव्यां नारायणमैशान्यां पुण्यं च तत्तत्कुम्भे समावाह्य पाद्याद्यैरभ्यर्च्याग्निं प्रज्वाल्य पश्चादौत्सवं बिम्बमासाद्याष्टोपचारैरभ्यर्च्य हविर्निवेदनं कारयति । पश्चाद् यज्ञशालामागत्य पुण्याहं वाचयित्वा होमादिपात्रे तण्डुलोपरि न्यस्तं सौवर्णं प्रतिसरं बद्ध्वा यस्य देवस्य यजमानार्थे प्रतिसरबन्धं कृत्वा तद्रात्रावुत्सवान्ते स्नानकाले प्रतिसरं विमोच्य स्नापयित्वाभ्यर्च्य हविर्निवेदनं कारयति । पश्चाद् यज्ञशालामागत्याग्निं परिषिच्यातोदेवादिना विष्णोर्नुकाद्यैः सहस्रशीर्षाद्यैश्च देव्यादिभ्यस्तदालयगतपर्षद्देवेभ्यो मूर्तिमन्त्रैश्च जुहुयात् ॥

प्रथमदिनोत्सवादि दिनदैवत्यं तिथिवारनक्षत्रदैवत्यं क्रमात् स्रुवेणाज्यमादायोत्सवाधिदैवत्यमुपभृतेन पक्वं साज्यं तद्वारदैवत्यमाज्येनाग्निहोत्रहवन्यां नक्षत्रदैवत्यमाज्येन जुहुयात् । सर्वेषामलाभे तत्तत् स्मृत्वा स्रुवेण जुहोति । यावत्सङ्ख्याहुतं तावत्समिद्धोमं जुहोति । प्रथमदिने पालाशं द्वितीये बैल्वं तृतीये शाम्यं चतुर्थे नैयग्रोधं पञ्चम उदुम्बरं षष्ठेऽश्वत्थं सप्तमे खादिरमष्टमे प्लक्षं नवमे पलाशं जुहुयात् । एतेषामलाभे पलाशमश्वत्थं वाज्यालाभे आज्यमिन्द्रं चरुं जुहुयात् । दधिक्षीराज्यलाजैर्युक्तमुपजुह्वा वैष्णवं हुत्वा देवेशस्य द्विगुणमर्चनार्थं होमार्थं कुम्भदेवताराधनार्थं ।विशेषतः प्रथमदिने

पद्मं द्वितीयदिने बैल्वं तृतीयदिने करवीरं चतुर्थे कुमुदं पञ्चमे नन्द्यावर्तं षष्ठे तुलसीं सप्तमे स्थलारविन्दमष्टमे विष्णुक्रान्तिं नवमे पङ्कजमे· तेषामलाभे करवीरतुलसीभ्यां वार्चयति । कुम्भस्थान् देवान् एकादशोपचारैरष्टोपचारैर्वाभ्यर्च्य द्विकालं हविर्निवेद्य तद्वेद्यां पश्चिमे विष्टरे देवेशं दक्षिणे चक्रमुत्तरे विष्वक्सेनं पूर्वे गरुडं संस्थाप्य पश्चिमे धान्यपीठे बलिरक्षकं चाराध्य सर्वानभ्यर्च्य बलिं निवेद्य बलिबेरं स्नाप्याभ्यर्च्य हविर्निवेद्य विधिना बलिमाराध्य चक्रमग्रे नीशशान्तं बलिक्रमेण नयेत् । बेराभावे चक्रादीन् पात्रेषु समावाह्याभ्यर्च्य नयेत् । अथवा चक्रं बलिबेरं वा नयेत् । द्रोणैर्द्रोणार्धैस्तण्डुलैः पक्वमन्नं प्रभूतं बलिं कटाहे प्रक्षिप्य पक्वैश्च मुद्गमाषतिलतिलन्नचूर्णापूपसक्तुलाजैर्यथालाभैर्वा युक्तं वाहृत्य शिष्येण वाहयित्वा पुष्पगन्धधूपदीपाक्षतायुतं वा संयुक्तं बलिदाताग्रे दत्त्वा बलिं वाद्यसमायुक्तं पूर्ववत् तदालयगतदेवानां पर्षद्देवतानां च बलिं दत्त्वा ग्रामस्य बाह्यवीथ्यां महत्त्वेऽन्तरवीथ्यां प्रदक्षिणवशेन यस्यां दिशि विमानं चेत् तद्दिक्पूर्वमष्टदिक्षु दिक्पालानां मध्ये ब्रह्मणश्च बलिनिर्वापं कारयेत् । ग्राममध्ये विमानं चेद् मध्यमादिनवदिक्षु बलिं दत्त्वा पश्चिमादिविमानेषु मध्ये ब्रह्मबलिं विना कारयेदित्येके ॥

तत्र वास्तुविन्यासविशेषे बलिमादित्याद्यष्टदिक्षु बलिं निक्षिपेत् । पौराणिकश्रेणिकं चेत् चतुष्कोणादिसन्धिषु सर्वत्र सर्वेषां बलिं क्षिपति । पूर्वापरदण्डं चेत् पश्चिमे वरुणनिर्ऋतिवायुभ्यो मध्ये ब्रह्मयकुबेरेभ्यः प्राच्यामिन्द्रानलेशेभ्यो बलिं दद्यात् । दक्षिणोत्तरमेकवीथ्यां यमनिर्ऋतिवायुकेभ्यो मध्ये ब्रह्मवरुणेन्द्रेभ्य उत्तरे कुबेरपवनेशानेभ्यो बलिं दद्यात् । नदीतीरादिस्थानं चेद् आवरणाद् बहिः परितोऽष्टदिक्षु बलिं क्षिपेत् । ग्रामं योजनादर्वाक्त्वे तस्मिन् गत्वा बलिमाचरेत् । तत्तत्स्थानाद् दर्भान् विकीर्य दिगीशाय बलिं दद्याद्, मध्यमम् । तन्मध्ये तद्दिगीशाय बलिं दद्यादधमम् । तत्तन्नाम्ना प्रणवादिनमोन्तं पूर्वमुदकं पुष्पं बलिमुदकं च दत्त्वा सर्वेषूर्ध्वे बलिं हे भूता इति दिवैत्वमिन्द्रादीशानां सर्वेषु स्थानेष्वेकं विष्टरमादाय तत्र तत्र संस्थाप्य तस्मिन् दिगीशेभ्यो भूतेभ्यो

यक्षेभ्यः पिशाचेभ्यो राक्षसेभ्यश्च बलिं दद्यात्, मध्यमम् । तन्मध्ये तद्दिगीशाय बलिं दद्यात्, अधमम् । ततन्नाम्ना प्रणवादिनमोन्तं पूर्वमुदकं पुष्पमुदकं दत्त्वा पूर्वे पूर्वे बलिं हे भूता इति दत्त्वैवमिन्द्रादीनां सर्वेषां स्थानेष्वेकविष्टरमादाय तत्र तत्र संस्थाप्य तास्मिन् दिगीशेभ्यो बलिनिर्वापं कारयेदिति केचित् ॥

तद् विष्टरं संशोध्य प्रक्षाल्य कुर्यादेवं क्रमात् प्रदक्षिणवशेन बलिं दत्त्वालयं प्रविश्य भूतपीठे बलिशेषं निर्वपति । राजधानिके राजवेश्माभिमुखेऽङ्गणत्रिभागे कृत्वा पश्चिमभागे मध्यमे प्रासादसमीपे वा तथेन्द्राय तत्पार्श्वे जयं श्रियं तत्पार्श्वे शचीदेव्यै बलिं निर्वपति । द्वारपार्श्वे शङ्खनिधिं सर्वत्र निर्वापनान्तर हे भूता इत्याकाशे विसृज्याथवा देवेशेन सहाग्रतो बलिमेवं क्षिपेत् । शिबिकादियानं वस्त्रपुष्पगन्धाद्यैरलङ्कृत्य देवेशं नानावर्णाम्बरैर्नवैः कौशेयाद्यैर्धूपितैः कार्पासतान्तवैर्वा रत्नैर्युक्तं मकुटमकरकुण्डलमुक्ताभरणकेयूरहारप्रलम्बयज्ञोपवीतकिरीटसूत्रोदरबन्धनामाङ्गुलीयकाभरणैः स्रग्गन्धमौल्यनानाविधः पुष्पगन्धैश्च देवेशमलङ्कृत्याञ्जनार्थं लोहाद्वा । देवेशस्यालङ्कारहीने सर्वनाशाय भवेत् । तस्माद् यत्नेनालङ्कारयेत् । वस्त्रं जीर्णमुपयुक्तं वा यो दद्यात् महत्तरो दोषो भवति । तस्मान्नवं मृदु सुसूक्ष्मम् अहतवस्त्रं यो दद्यात्, स्वकुले त्रिसप्तभिर्विष्णुलोकमवाप्नोति । देवस्योपयुक्तेषु कौशेयक्षौमादिवस्त्रानलिप्तांश्च विष्णुगायत्र्या प्रोक्ष्य यथार्हकं शुद्धिं कृत्वा गृह्णीयात् । आभरणे प्रक्षाल्य रथशिबिकादीन् अन्यान् परिच्छदांश्च यथार्हकं शुद्धिं कृत्वा गृह्णीयात् । देवेशं प्रणम्य वेदाहमिति यानमारोप्य भक्तैर्जयशब्दैः स्तोत्रैः स्तुतिभिश्च नृत्तगेयसमायुक्तं शकुनसूक्तं जपेत् । अनुगच्छेत् । सौवर्णैः पुष्पैरन्यैर्वा प्रभामण्डलमलङ्कृत्य संयोज्य श्वेतच्छत्रमयूरपिञ्छरचितैश्छत्रैश्च दुकूलपट्टेतररचितैश्छत्रैश्चामरैर्मयूरव्यजनैरन्यैर्हेमरजतताम्रजैः परिच्छदैः परिवृतो वितानध्वजपताकैरग्रतो गच्छेत् । धूपदीपैश्चोद्धृततोयधारापुरःसरं सर्ववाद्यसमायुक्तमेवं ग्रामं प्रदक्षिणं कारयेत् । तद्ग्रामवासिनोऽप्यन्ये स्त्रीबालवृद्धा येऽनु सेवते, ते सर्वे पदे पदे यज्ञफलं लभेदिति ब्रह्मवादिनो वदन्ति ।

ग्रामाभ्यन्तरे तस्मिन् स्वे स्वे गृहे दीपाङ्कुरोदकुम्भाद्यैरलङ्कृत्य प्रतिस्थानं कृत्वा द्वारस्थदेवं स्ववंशांश्च नमस्कृत्य कदलीचूतपनस-नालिकेरापूपसक्तुलाजादीन् ब्राह्मणात् सङ्गृह्य मूर्तिमन्त्रेण निवे-दयेत् । शूद्रानुलोमानामपक्वं निवेदयेत् । प्रतिलोमानि तानि सर्वाणि वर्जयेत् । ग्रामं प्रदक्षिणीकृत्य शकुनसूक्तेनालयमाविश्य स्थानमण्डपे-ऽलङ्कृत्य तत्र सिंहासने विष्टरे वा देवं संस्थाप्य पाद्याचमनमुखवासं स्नानं तेजोवत्सव इति वस्त्रं तथैवाचमनं विष्णोः पुष्पं तद्विप्रास इति गन्धं परो मात्रयेति धूपं विष्णोः कर्माणीति दीपं त्रिर्देव इत्यर्घ्यं तथैवाचमनं तदस्य प्रियमिति हविरिदं विष्णुरिति पानीयं तथैवाचमनं त्रिर्देव इति मुखवासं प्रदायैवं क्रमेण षोडशोपचारैः क्रमेण स्नपनो-त्सवादीनि पूर्ववत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते वराहलक्षणस्नापन-
विशेषविधिर्नाम पञ्चपञ्चाशः पटलः ॥

## अथ षट्पञ्चाशः पटलः

अथ नारसिंहविधिः । नारसिंहो द्विविधः गिरिजः स्थूणाज-श्चेति । तयोर्मुखं सिंहासमानं नरका । (यम्) तस्य मूर्धादिपादान्तं स-विंशतिशताङ्गुलं शिरोमात्रत्रयं नेत्रसूत्रात् षण्मात्रं तस्मात् पोषणं चतुर्मात्रं तस्मादास्यं द्विमात्रमधरं त्र्यङ्गुलं नेत्राद् भ्रुवोर्मात्रायतं शेषं ललाटान्तं वा नवाङ्गुलं दृगन्तरं नवाध्यर्धं द्विमात्रं नेत्रायामं त्रयद्वयं तस्यार्धं विस्तारं कनीनिकायामं विस्तृतयवं पञ्चयवविस्ता-रायामं हनोर्भ्रुवोर्द्वादशाङ्गुलं तारं नेत्रसूत्रसमं मुखमास्यतारदशाङ्गुलं विवरं चतुरङ्गुलविस्तारं शेषं वर्तुलमुन्नतं चत्वारः पुरोदन्तमर्धमात्रं विस्तृतायता जिह्वा षडङ्गुलायामा त्र्यङ्गुलविस्तृता भागं कपोलान्तघो-षणं चतुष्कलात् कर्णमुकुलादधस्तात् कपोलषडङ्गुलं पराग्रात् कण्ठ-मूलान्तं पञ्चाङ्गुलं कला कर्णमूलं कर्णत्रिमात्रायतं चतुर्यवकलान्तरं सूकरकर्णवदेव व्रणवक्त्रं स्थानयुक्तं तीक्ष्णे कृष्णमन्याङ्गायामविस्तारं वराहस्योक्तमार्गेण कारयेत् ॥

सिंहासने देवं नृसिंहं सुखासनं पादं दक्षिणं प्रसार्य वामं समाकुञ्च्य चतुर्भुजं शङ्खचक्रधरं दक्षिणं पूर्वमभयकरं वामकटयवलम्बितं वाममूरुस्थितं कुन्देन्दुधवलप्रभं रक्तवस्त्रं सर्वाभरणसंयुक्तं करण्डिकामकुटं देवमेवं कारयेत्। दक्षिणे देवीं श्रियं वामपादं समाकुञ्च्य दक्षिणं प्रसार्य वामहस्तेन पूर्ववद् दक्षिणेनासने निहितं स्वर्णाभां सर्वाभरणभूषितां वामपार्श्वे महीं देवीं दक्षिणं पादं समाकुञ्च्य वामं प्रसार्य दक्षिणकरमुत्पलधृतं वाममासने निहितम्। हिरण्यपशुघृततण्डुलांश्चाचार्यादिभ्यो वेदविद्भ्यः सोदकं दत्त्वा गोभ्यस्तृणमुष्टिं प्रदाय पश्चाद् देवस्य ताम्बूलं निवेद्य प्रभूतं महाहविर्निवेद्य नृत्तगेयवाद्यैर्विनोदं कारयेत् सायं। परेद्युः प्रातःकाले ग्रामं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य पूर्ववत् स्नपनार्चनादीनि कुर्यात्। तीर्थस्नानदिनात् पूर्ववत् सन्ध्यार्चनान्ते होमान्तं सर्वं हुत्वा देवं चित्रकक्ष्यादिभिः सायुधमलङ्कृत्य गजाश्वारूढजनैः सार्धं मृगयेवोत्सवं कारयेत्। अथवा भूतदिनाद् द्वितीये चतुर्थे वा पश्चाद्युग्मे शान्तिं चाह्नि कारयेत्। तद्रात्रौ पूर्ववत् सर्वं कृत्वा देवं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य संस्नाप्याभ्यर्च्य हविर्निवेदयेत्। अभ्यन्तरमण्डपे शयनस्थाने वा पूर्ववत् प्रतिसरं बद्ध्वा तथैव शाययित्वा प्रभाते स्नात्वा देवमुत्थाप्य पाद्याद्यैरभ्यर्च्य तीर्थस्नानकालात् पूर्वं हविर्नैव निवेदयेत्। प्रतिदिनोत्सवाधिदैवत्यं तिथिवारनक्षत्रं च क्रमेण वक्ष्ये। प्रथमं ब्राह्मम्। द्वितीयमार्षम्। तृतीयं रौद्रम्। चतुर्थं वासवम्। पञ्चमं सौम्यम्। षष्ठं वैष्णवम्। सप्तमं सर्वदैवत्यम्। अष्टमं याम्यम्। नवमं वारुणम्। हुत्वा, प्रथमतिथौ आग्नेयं, द्वितीयतिथौ प्राजापत्यं, तृतीये कौबेरं, चतुर्थे वैघ्नं, पञ्चम्यां श्रीदैवत्यं, षष्ठं कौमारं सप्तममादित्यमष्टमं रौद्रं नवमं तोकं दशममैन्द्रमेकादशं याम्यं द्वादश्यां वैष्णवं त्रयोदश्यां कौमारदैवत्यं चतुर्दश्यामैशं पञ्चदश्यां सौम्यं च हुत्वा, सूर्यवारादि, उदुत्यं चित्रमिति द्वावादित्याय, सोमायास्ते याते धामानीति द्वौ सोमाय, ममाग्नेऽहमग्नयेऽग्न आयाहीति त्रीन् भौमाय, श्रविष्ठजाय तद्विष्णोः परमं तद्विप्रास इति त्रीन् बुधाय, बृहस्पतिर्देवानां बृहस्पते अतियदुपयामीति चत्वारो बृहस्पतये, प्रजापते न त्वत्सुभूहुवं

भूरिति द्वौ शुक्राय प्रभुर्देवो गृहाधिपत इति शनैश्चराय, इति तत्तद्धा-नैर्जुहुयात् । कृत्तिकादिनक्षत्रेष्वग्नये कृत्तिकाभ्यः स्वाहेति तत्तन्न-क्षत्रदैवत्यं च जुहुयात् । वैष्णवं विष्णुसूक्तं तदालयगतानां मूर्तिम-न्त्रैश्चाज्यमिश्रं चरुणा वैष्णवान्तं नित्यं सायं प्रातरेवं जुहुयात् ॥

तीर्थदिने पूर्ववत् प्रातरुत्सवं कृत्वा तत्रास्थाने मण्डपे विष्टरे देवं संस्थाप्याष्टोपचारैरभ्यर्च्याभिमुखे गरुडं दक्षिणे चक्रमुत्तरे विष्व-क्सेनं च धान्यपीठे संस्थाप्याभ्यर्च्य देवाभिमुखे गोमयेनोपलिप्य धान्यान्यास्तीर्य, उलूखलमुसलौ विन्यस्य, वस्त्रेण वेष्टयित्वा तयो-र्ब्रह्मेश्वरावभ्यर्च्य हरिद्रायां लक्ष्मीं चाराध्य पुष्पादीन् संशोध्य हारिद्र-मुलूखले प्रक्षिप्य, अतोदेवादीन् वायूनुच्चार्य किञ्चिदवघातं कृत्वा चूर्णीकृत्य तैलचूर्णेन कलाश्चतुर्भिर्द्वावेकं वा पूरयित्वा देवाभिमुखे धा-न्योपरि दर्भानास्तीर्य तत्पूर्णान् कलशान् विन्यस्य वस्त्रेणाच्छाद्याधि-दैवं सिनीवालीमभ्यर्च्य देवमाराध्य वेदाहमिति चूर्णेनाभिषिच्य त-च्छिष्टेन तच्चक्रादीनभिषिच्य देवस्पृष्टं चूर्णं किञ्चिदपि शिरसा धार्यं तस्याशुभं विनश्यति । तस्माच्चूर्णमादाय चक्रसहितं ग्रामं प्रदक्षिणी-कृत्य तच्चक्रसन्निधौ भक्तानां ब्राह्मणादीनां शिरसि विकीरयेत् । बल्युत्सवाद्यानुगता ये, सर्वे ते विप्रसमा जनाः । तस्मादस्पृश्यसं-स्पर्शनं न दोषाय भवेत् । मध्याह्ने वावभृथं स्नानं प्रधानमपराह्ने वा कुर्यात् । देवं शयनमारोप्य चक्रवीशशान्तान् पुरस्कृत्यालयाभिमुखे तटाके वा विहितमैशान्ये चोत्तरे वा तदभावे तटाके नद्यां विहृते नदीसङ्गमसमुद्रे वा धनुःसहस्रादर्वाग् ग्रामादूर्ध्वं न गच्छेत् । तत्तीरे तटाकं चेत् पश्चिमे मण्डपं कूटं प्रपां वा कृत्वालङ्कृत्य देवं प्राङ्मुखं प्रतिष्ठाप्य पाद्याचमनं दत्त्वा तथैव चक्रादीन् संस्थाप्य दशकलशा-नाहृत्य तन्तुना वेष्टयित्वाद्भिः संशोध्य वस्त्रेणोत्पवनं कृत्वाद्भि-रापूर्य सिद्धार्थकोदकाक्षतोदककुशोदकजप्योदकरत्नोदकसम्पूर्णान् प्र-धानकलशान् पञ्चैते चोपस्नानाः शुद्धोदकैः पूरयित्वा देवाभिमुखे धान्योपरि मध्ये सिद्धार्थकोपरि तत्प्राच्यामक्षतोदकं दक्षिणे कुशोदकं पश्चिमे जप्योदकम् उत्तरे रत्नोदकं च संन्यस्य तत्तद्वामपार्श्वे तत्तदुप-

स्नानकलशान् विन्यस्य वस्त्रेणाच्छाद्याधिदैवतादीनप्सरसः काश्यपो बृहस्पतिर्मुनयस्तक्षकः सर्वमन्त्रान् विद्याधरान् विष्णुगन्धं दशैते दश-कलशेषु क्रमेणाभ्यर्च्य पुण्याहं कृत्वा देवं पाद्याद्यर्घ्यान्तमभ्यर्च्य म-ध्यादिपञ्चकलशोदकैः शं नो देवीः पूतस्तस्येति इमा ओषधयः भिस्त्वा शूरश्चत्वारि वागिति च देवमभ्युक्ष्य वारीश्चतस्र इति सर्वोपस्नानै-रभिषिच्य शिष्टोदकैश्चक्रं संस्नाप्य तच्चक्रं गरुडं विष्वक्सेनं च तत्तीर्थ-जले निमज्जयित्वा पश्चात् सर्वे जनास्तत्तीर्थे देवसन्निधौ स्नाताः सर्व-

मुक्ता विष्णुलोकं स गच्छति । देवं शुद्धोदकैः संस्नाप्य प्लोतेन विमृज्य वस्त्रोत्तरीयाभरणैरलङ्कृत्य चक्रादींश्चाभ्यर्च्य यानमारोप्य तद्वीथीर्जलकुसुमैरवकार्य चक्रं मीशामिता (?) पुरस्कृत्याचार्यः शकुन-सूक्तं जपन्, तोयधारासमायुक्तमग्रतो गच्छेत् । सर्वालङ्कारसंयुक्तं सर्व-वाद्यघोषणं स्तोत्रध्वानियुतमालयमाविश्य तत्तद्द्वारेषु दीपाङ्कुरोद-कुम्भाद्यैः सदर्पकं प्रत्युत्थानं कृत्वा पाद्याचमनं दत्त्वा स्थाने संस्थाप्य चतुर्दिक्षु चतुर्वेदाध्ययनं कृत्वा स्तोत्रैर्जयशब्दैः संस्तूयाभ्यन्तरे चक्रा-दींस्तत्तत्स्थाने संस्थाप्य देवेशं सप्तविंशतिविग्रहेणाभ्यर्च्य विष्णुसूक्तेन पञ्च प्रणामान् कृत्वाष्टाक्षरेण पुष्पाञ्जलिं दत्त्वा पश्चाद् यागशालामा-गत्याग्निं प्रज्वाल्य परिस्तीर्य पूर्णाहुतिं हुत्वान्तहोमं हुत्वाग्निं विसृज्य कुम्भवेद्यामाचार्यः कुम्भस्थान् सर्वान् मध्यमादिक्रमेण प्रणवेन ध्रुवबेरे समारोप्य तद्रात्रौ ध्वजावरोहणं बलिं चक्रादीनां विना। कटाहे सकल-बलिद्रव्यैः सह युक्तमन्नं प्रभूतं निक्षिप्य पूर्ववदालयगतदेवानां च वाद्यघोषणसमायुक्तं पूर्ववद् बलिं दत्त्वा तत्र स्थितान्यदेवान् विसृज्य वाद्यघोषणं विना तद्ग्रामं सर्वदेवालये शून्यागारे तटाके चैत्यवृक्षमूले मातृदुर्गाविघ्नेशशास्त्रादीनां गृहे श्मशानसमीपे वापि कूपारामस्थाने ग्रामचतुःसीमे भूतक्रूरदेवानाम् एवं बलिं निक्षिप्याग्निसन्निधौ स्नात्वा देवालयं प्रविश्य देवेशं प्रणम्य ध्वजदेवमभ्यर्च्यासेग्र इति ध्वजावरो-हणं कृत्वा तद्रात्रावुत्सवान्ते स्नपनं च कारयेत् । तद्दिने सम्भवे तद्दिनात् तृतीये पञ्चमे वा समाराध्यैवमेव बलिं दत्त्वा ध्वजावरोहणं स्नपनं च कारयेदित्येके ॥

पुष्पयागविधिं वक्ष्ये । प्रतिष्ठान्ते वोत्सवान्ते विषुवे व्यतीपाते विषुवायने सूर्योपरागे युगान्ते सङ्क्रान्त्यां श्रवणे राज्ञो जन्मर्क्षे दुःस्वप्ने राष्ट्रविभ्रमणे दुर्भिक्षानावृष्ट्याद्यतिवृष्टिपरचक्रभयमहाव्याधिपीडितादिसर्वोपद्रवेषु विधिना देवस्य स्नपनं कृत्वा तद्दिने श्वोऽहे भगवतः पुष्पयागं कुर्यात् । प्रतिष्ठोत्सवौ विनान्येषु पूर्वोक्तविधिनाङ्कुरार्पणं कृत्वा कर्माणि समारभेत् । ततो देवेशमास्थानमण्डपे सर्वालङ्कारसंयुक्तं धान्यराशौ संस्थाप्याभिमुखे धान्यपीठे पुष्पाधिदेवमाराध्य पुष्पादीन् संन्यस्य नववस्त्रोत्तरीयाद्यैर्देवमलङ्कृत्य त्रयोदशोपचारैरर्चयित्वा देवस्य दक्षिणस्यामौपासनाग्निकुण्डं कृत्वाज्येनाघारं हुत्वाग्निहोत्रं प्रशंस्य देवेशादितदालयगतदेवानां पूर्ववदावाहनं जुष्टाकारं स्वाहाकारं च कृत्वा तथैव पुष्पेशस्य कृत्वा देवेशस्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं प्राजापत्यं व्याहृतीश्च हुत्वा पद्मपत्रेण बिल्वपत्रेणाज्यमाप्लुत्य विष्णुगायत्र्याष्टोत्तरशतं हुत्वा श्रिये जातेति श्रीसूक्तं श्रीदेव्याः पञ्चभूमिदैवत्यं महीसूक्तं महीदेव्यास्तदालयगतपर्षद्देवानामपि तत्तन्मन्त्रैर्मूर्तिमन्त्रैर्वा हुत्वा पुष्पाधिदैवत्यं वैष्णवान्तं द्वादशकृत्वो जुहुयात् । ऋत्विजः सर्वे दधिक्राव्णेति दधिप्राशनं कृत्वा नववस्त्रोत्तरीयकुण्डलादिभिरलङ्कृत्य वाग्यता भवन्ति । ब्राह्मणादन्येनापि वैष्णवेनाघोष्य शङ्खडिण्डिमकालकाहलझल्लरीमद्दलादिलण्डिकाद्यैर्वीणावेणुप्रभृतिभिश्च समाप्ते सर्वान् घोषयित्वा प्राङ्मुखो नृत्तगीतवाद्याद्यैर्युक्तं दक्षिणे पुराणवचनं पश्चिमे स्तोत्रध्वनियुतमुत्तरे सूत्रनिरुक्तकल्पांश्च सर्वाण्येतानि सर्वत्र कुर्यात् । प्रागादिचतुर्दिक्षु चतुर्वेदानध्यापयेत् । दक्षिणेऽरुणनारायणाद्यानकानध्यापयेत् । पूर्वादिचतुर्दिक्षु दक्षिणवामयोराचार्यम् ऋत्विजांश्च परात् परतरं गुह्याद् गुह्यतरं सर्ववेदार्थं सारभूतमष्टाक्षरं द्वादशाक्षरं विष्णुगायत्रं पुष्पाञ्जलींश्च पादयोर्दद्यात् । अष्टोत्तरशतावसानेषु पाद्याद्यर्घ्यान्तमर्पयेत् । स्तनदघ्नेषु पुष्पान् यथोदितं नयेत् पुराणम्लानशक्तश्चेद्(?) यदि मक्षिकानि दुर्गन्धदुर्गमनुष्याधिष्ठितानि पद्मानि पुराणानि भवन्ति । सङ्ग्राह्यपुष्पाणि श्रेष्ठानि सर्वाण्याहरेत् । तदनघं विंशतिकृत्वो दद्यात्, उत्तमम् । द्वादशकृत्वो मध्यमम् ।

अष्टकृत्वोऽधमम् । एवं कृत्वा महाहविः प्रभूतं वा निवेदयेत् । मुखवासं निवेद्यान्यानि धूपदीपानुलेपनादीनि तथा निर्दिष्टं भवति । क्षमामन्त्रेण देवेशं प्रार्थ्य वैष्णवं व्याहृत्यन्तं हुत्वान्तहोमं हुत्वा पुत्रकामः पुत्रं लभेत् । धनकामो धनादीनि, प्रतिष्ठाकामः प्रतिष्ठां, जयार्थी जयं, श्रीकामः श्रियमन्नकामोऽन्नं लभेतान्यच्च सर्वथा कामावाप्त्यर्थमुत्तमं हेतुकामार्चनायान्यमूनं सम्पूर्णं भवति आचार्यादिभ्यो दाक्षिणां दत्त्वा । एतत् सदा शुश्रूषणाय नाभक्ताय नासंयताय न नास्तिकाय पुत्राय(?)भक्ताय संयताय दद्यात् ॥

अथातो यजमानः श्रद्धया प्रधानाचार्यं पूर्वं पश्च परिचारकांश्च यथोक्तां दाक्षिणां सोदकं (दत्त्वा) देवसन्निधौ भक्तानां वैष्णवानां सम्पूज्य नर्तकान् गायकान् परिचारकांश्च यथार्हं पूजयेत् । तत्रोपयुक्तं सर्वमाचार्यस्य प्रदातव्यम् अन्यथा हुतं चेत् तत् सर्वं निष्फलं भवति । देवेशस्योत्सवमेवं कुर्यात् । तस्य कायकृतं पापं तत्क्षणादेव नश्यति । दश पूर्वान् दशावरानात्मानं चैकविंशकं सारूप्यमभिरक्ष्यं विष्णोः परमं पदं गच्छेत् । तद्ग्रामवासिनः सर्वेषां मांसवमशान्ति(?) यान्ति । सर्वयज्ञफलं लभेत् । सर्वसम्पत्समृद्धिं कारयेदित्याह मरीचिः ॥

अथैकाहिकोत्सवं वक्ष्ये । राज्ञो ग्रामस्य यजमानस्य च जन्मर्क्षे विष्णुपञ्चदिनेऽन्यस्मिन् पुण्यकर्म चैकाहिकोत्सवं कारयेत् । सोऽपि दिनोक्तवत् तद्दिनात् पूर्वमङ्कुरानर्पयित्वा सम्भारान् वाहृत्य पूर्वेद्युरेव शर्वर्यां नित्यार्चनावसाने देवेशं विशेषतोऽभ्यर्च्य पूर्ववत् प्रतिसरं बद्ध्वा तथैव शाययेत् । प्रभाते स्नात्वा देवमुत्थाप्य प्रभातसन्ध्यार्चनान्ते नित्याग्निकुण्डे चुल्ल्यां वा परिषिच्य तत्तीर्थे चोत्सवादिनाधिदैवतं हुत्वा पूर्ववद् बलिमासाद्य यानमारोप्य सर्वालङ्कारसंयुक्तं ग्राममालयं वा प्रदक्षिणीकृत्यालयं प्रविश्य चूर्णं संस्कारं कृत्वा चूर्णेन संस्नाप्य पश्चाद् देवाभिमुखे तथैव पञ्च कलशान् न्यस्योपस्नानान् विन्यस्य तथैव देवमभ्युक्ष्य तच्छिष्टतोयेन चक्रमभिषिच्य पश्चाच्चक्रतीर्थस्नानं प्रविश्य तज्जलेऽवगाह्य निमज्जनानां तीर्थं कृत्वा

शुक्लवस्त्रं परिधाप्याभ्यर्च्यालयमाविश्यास्थानमण्डपे देवेशं संस्थाप्य स्नपनोक्तविधिना संस्थाप्याथवा शुद्धस्नपनविधिना संस्नापयेत् । महाहविः प्रभूतं वा देवेशाय निवेद्य नृत्तगेयवाद्यैर्विनोदं कारयेत् । पश्चादालयं प्रदक्षिणीकृत्याभ्यन्तरं प्रविश्य पूर्वस्थाने संस्थाप्यार्चयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते एकदिनोत्सवादि-
पुष्पयागोत्सवो नाम षट्पञ्चाशः पटलः ॥

## अथ सप्तपञ्चाशः पटलः ।

अथोर्ध्वं मत्स्याद्यवताराणां विधिः । ग्रामादौ यथोक्तदेशे पूर्वोक्तेषु विमानेषु मत्स्यकूर्मवराहनारसिंहवामनरामरामयुक्कृष्णकल्कीति दशावताराणां पूर्वोक्ते निर्देशमाने ध्रुवबेरं निश्चित्य पश्चान्निर्देशमानपूर्ववन्मत्स्यदेहं भागाङ्गुलेन भागाधिकं द्वितालं नासाग्रात् पुच्छपर्यन्तमष्टाविंशतिमात्रं नासाग्रान्नेत्रपर्यन्तं चतुरङ्गुलं नेत्रात् कण्ठं द्विमात्रं नाभेः पुच्छमूलान्तं त्रिषडङ्गुलं तस्मात् पुच्छमूलान्तं त्रिषडङ्गुलं भवेत् । तस्मात् पुच्छाग्रं चतुरङ्गुलं शिरःकुक्षिपुच्छविस्तारं समवृत्तं पद्माकारम् । अत्रानुक्तं शिल्पशास्त्रोक्तवद् ध्रुवबेरं कारयेत् ॥

मत्स्यस्थापनविशेषं वक्ष्ये । कौतुकं विष्णुं चतुर्भुजमेव कारयति । तद्रूपं कौतुकं नैव चाचरेत् । आलयाभिमुखे पूर्ववद् यागशालां कृत्वा तोरणाद्यैरलङ्कृत्य पञ्चाग्निपौण्डरीकाणि कल्पयेत् । तस्य प्रधानं पौण्डरीकाग्निः । तस्मिन् हौत्रं प्रशंस्य मूर्त्यावाहनादीनि कारयित्वाग्निं विधिना कारयेत् । मत्स्यं विष्णुं भद्रं क्रीडात्मकमिति चतुर्मूर्तिमन्त्रैरावाह्याज्यं निरूप्याज्याहुतीर्हुत्वा यत् स्वयं सृष्टमित्येतेति तन्मन्त्रेणाष्टोत्तरशतं हुत्वान्यत् सर्वं प्रतिष्ठोक्तविधिना कारयेत् । इत्यर्चनाविशेषः । ध्रुवबेरं तत्तन्मूर्तिमन्त्रैः पाद्याद्यष्टोपचारैरभ्यर्च्य कौतुकं पूर्ववन्मन्त्रैर्मूर्तिमन्त्रान् संयोज्यार्चयेत् । नित्यं बलिस्नपनोत्सवादीनि पूर्ववत् कुर्यात् ॥

अथोर्ध्वं कूर्मस्य लक्षणं वक्ष्ये। तस्य देहभागाङ्गुलेनैकेनैकतालं शिरोमानं द्विमात्रं कण्ठमेकाङ्गुलं त्रिमात्रं हृदयान्तं तत्समं नाभिमध्यं त्रिमात्रं पृष्ठान्तं प्रकोष्ठं प्रकोष्ठपाणितलं प्रत्येकमेकाङ्गुलं तथैवोरू जङ्घा पादतलं तस्यायामसमं वैपुल्यं पञ्चवर्णसमायुक्तमन्तःश्वेतनिभं तस्यायामं षड्भागं कृत्वा द्विभागं त्रिभागं वा पीठोत्तुङ्गं षडङ्गुलिविस्तारं पद्माकारं शेषं युक्त्या कारयेत् ॥

तस्य प्रतिष्ठाविशेषः। विस्तारदंष्ट्रायामं द्विमात्रं कण्ठमात्रतारं नवाङ्गुलं तथैव बाहुमूलाङ्गविस्तारं पूर्वमध्यमदशतालोक्तमार्गेण कारयेत्। वराहं चतुर्भुजं शङ्खचक्रधरं सन्ध्याश्यामनिभं पादं दक्षिणं सपत्नीकं नागेन्द्रस्य फणामणिस्थापितं वामकरस्थापिकलाम्रुत्क्रमणाय कुञ्चितविस्ताराभ्यां महीमादाय देवेशस्यारूढाभ्यां द्वयोः संन्यस्य देवस्य हस्तेन दक्षिणे देव्याः पादौ गृहीत्वा तस्यापरभागे वामहस्तेन धारयन् देवस्य मुखेन देवीं जिघ्रन्तं वा कारयेत्। तां महीं प्राञ्जलीकृतहस्तामीषत्प्रसारितपादां पुष्पाम्बरधरां श्यामाभां सर्वाभरणसंयुक्तां किञ्चिद् देवं समीक्ष्य सव्रीडां हर्षसंयुक्तां देवस्य स्तनान्तं वा मानेन देवीं पञ्चतालेन कुर्यात् ॥

प्रळयवराहं वक्ष्ये। सिंहासने सुखासीनं वामपादमाकुञ्च्य दक्षिणं प्रसार्य चतुर्भुजं शङ्खचक्रधरं .......................मूरुं प्रतिष्ठितं पीताम्बरधरं सर्वाभरणभूषितं तस्य दक्षिणे देवीं महीं वामपादं समाकुञ्च्य दक्षिणं प्रसार्य श्यामाभां सर्वाभरणसंयुक्तां वामहस्ते फुल्लोत्पलधरां दक्षिणमासने निहितहस्तां देवं किञ्चित् समीक्ष्यलोचनां कारयेत् ॥

यज्ञवराहं श्वेताभं चतुर्भुजं तथा शङ्खचक्रधरं, वामपादं समाकुञ्च्य दक्षिणं प्रसार्य सिंहासने सुखासीनं पीताम्बरधरं सर्वाभरणभूषितं दक्षिणे देवीं हेमाभां वामपादं समाकुञ्च्य दक्षिणं प्रसार्य हस्तं वामं पद्मधरं दक्षिणमासने निहितं वामपार्श्वे महीं श्यामाभां दक्षिणपादमाकुञ्च्य वामं प्रसार्य हस्तं दक्षिणमुत्पलधरं वाममासने निहितं देवं किञ्चित् समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत्। त्रयाणां च वराहाणां कौतुकं तत्तद्रूपं विष्णुं चतुर्भुजं वा कारयेत् ॥

तेषां स्थापनविशेषः । पूर्वोक्तयागशालां सर्वालङ्कारसंयुक्तां तन्मध्ये शय्यावेदीं परितः पञ्चाग्नीन् परिकल्प्य प्रधानाग्नौ हौत्रशंसनम् अथवा चैकाग्निविधिना कृत्वा वाराहं वरदं महीधरं वज्रदंष्ट्रिणमित्यादि वराहस्य पृथुलामुर्वीमधस्स्थां महीधरामिति देव्याः प्रहूय वराहं प्रलयवराहं भूतीशं जगन्नायकमिति प्रलयवराहस्य देव्याः पूर्ववत् । यज्ञवराहं वेदमयं यज्ञेशं यज्ञवर्धनमिति यज्ञवराहस्य श्रीभूमिभ्यां पूर्ववदेवमावाहयेत् । जुष्टाकारं स्वाहाकारं च कृत्वा, आदिवराहस्य क्ष्मामेकामिति प्रलयवराहस्य यज्ञैर्मन्त्रैरष्टोत्तरशतमावर्त्य जुहुयात् । एष विशेषोऽन्यत् सर्वं समानम् । त्रयाणां ध्रुवबेराणां तत्तन्मूर्तिमन्त्रैरष्टोपचारैरभ्यर्च्य पश्चात् कौतुकानां प्रत्येकं तत्तन्मूर्त्तिनाम संयोज्य षोडशोपचारैरभ्यर्चयेत् । अथवा षोडशोपचारक्रमम् ॥

प्रतद्विष्णुरिति पुष्पमासनं त्रीणि पदा इति पाद्यं शं नो देवीरित्याचमनं आपोहिष्ठामय इति प्रदाय राजवदुपचारान् कारयित्वा शुद्धस्नपनविधिना संस्नाप्याभ्यर्च्य महाहविः प्रभूतं वा निवेद्य पानीयाचमनमुखवासादीनि दत्त्वा वस्त्राभरणगन्धाद्यैरलङ्कृत्य देवस्य त्वेत्यादर्शं दर्शयित्वा नीराजनादीनि कारयेत् । अपूपपृथुककदलीचूतपनसनालिकेराणां फलानि च विष्णुगायत्र्या निवेद्याचमनं प्रदाय कर्पूरसहिततामबूलं मुखवासं वा शिलाक्षारेण संयुक्तं दद्यात् । नृत्तगेयवाद्यैर्विनोदं कारयेत् । देवेशं प्रणम्यालयाभ्यन्तरे पूर्वस्थाने पूर्ववत् प्रतिष्ठाप्य देवं प्रथमेऽहनि सायमुत्सवं कृत्वा द्वितीयदिनादि नित्यं प्रातः सायं नित्यार्चनान्ते द्विगुणार्चां हविर्निवेदनं कुम्भदेवाराधनं होमं च बलिदानं च कृत्वा प्रातरेवं सायमेवमुत्सवं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते उत्सवविधिर्नाम सप्तपञ्चाशः पटलः ॥

---

## अथ अष्टपञ्चाशः पटलः ।

अथैककालोत्सवे बलिकालोत्सवं कर्तुमशक्तश्चेत् पूर्ववत् द्विगुणार्चनं हविर्निवेदनं होमं बलिदानं च द्विकालं कृत्वा देवमेककाले

सायाह्ने पूर्ववदकृच्छ्रस्योरसवं कारयेदिति । अतिवातादिवृष्टिशत्रुचोरभयादिसमाकुले सीमाक्षये प्रथमावरणे द्वितीये वा वह्निं निर्वाप्योत्सवं कारयेत् । अवताराणामुत्सवं यदि कुर्यात्, पूर्वेद्युरेव रात्रौ पूजावसाने सर्वालङ्कारसंयुक्तं प्रतिसरोत्सवं कृत्वालयमाविश्य देवमभ्यर्च्य हविर्निवेद्य प्रतिसरं बद्ध्वा शयनाधिवासं सङ्कल्प्य प्रभाते स्नात्वा देवमुत्थाप्य पाद्यमाचमनं दत्त्वा देवीं संस्नाप्याभ्यर्च्य हविर्निवेदयति । अलङ्कृत्य यानमारोप्यालयं प्रदक्षिणीकृत्यालयाद् बहिर्गत्वा ग्रामं निरीक्ष्याभ्यन्तरं प्रविश्यास्थानमण्डपे सिंहासने विष्टरे वा संस्थाप्य राजवदुपचारं कृत्वा देवेशं स्नाप्याभ्यर्च्य श्यामाभां सर्वाभरणभूषितां देवीं कारयेत् । अथवाधंसतोर्ध्वे वामं पादं प्रसार्यान्यमाकुञ्च्य तद्वदन्यदूर्ध्वं दक्षिणहस्तं प्रसार्य वाममूरौ स्यात् । अन्यहस्ताभ्यां शङ्खचक्रधरं देवीभ्यामेवं कारयेत् ॥

केवलं नृसिंहं पद्मपीठोपरिष्टाद् द्वौ पादौ विन्यस्योत्कुटिकासनेनासयित्वोरुमध्ये वस्त्रेणाबध्य चतुर्भुजं शङ्खचक्रधरम् अन्यहस्ताभ्यां जानुद्वयोपरिष्टात् प्रसारितवियुक्तं वा संस्थापयेत् ॥

अथोर्ध्वं स्थौणजनृसिंहः । सोपधानसिंहासने चासीनं पादं वाममाकुञ्च्यान्यं प्रसार्य चतुर्भुजं शङ्खचक्रधरं दक्षिणं पूर्वमभयं वाममूरुं प्रतिष्ठितं समाकुञ्च्य तीक्ष्णदंष्ट्रेक्षणं भयानकश्चेद् भागं रक्ताम्बरधरमेवं कारयेत् । अथवा षोडशद्वादशहस्तैर्युक्तं त्रिभागं स्थितं वामोरावसुरेन्द्रं विन्यस्योरासि हस्ताभ्यां नखैर्भेदयित्वा दक्षिणभागे चैकैकाभयप्रदानमेकेन श्रोत्राङ्गुलीयविन्यस्यासं वामे चैकेन मकुटग्रहणमेकेन मुष्टिप्रहरणमन्यैर्दमनं वा जिघांसतीत्येवमतिभयानकं कृत्वा तस्य कोपशान्त्यर्थं दक्षिणवामयोः श्रीभूम्यौ नारदं वीणाहस्तिनं प्रह्लादं वन्दमानं भक्तिभरितं चेन्द्रादिलोकपालान् वा वन्दमानांश्च कारयेत् ॥

नृसिंहस्थापनाविशेषः । पूर्ववत् पञ्चाग्नीन् परिकल्प्याहवनीये प्रधानाग्नौ हौत्रशंसनं कृत्वा एकाग्निविधिना कारयेत् । नारसिंहं तपोनाथं महाविष्णुं महाबलमिति । गिरिजस्य देव्यौ पूर्ववत् । नारसिंहं तपोनाथं भक्तवत्सलम् अनन्तं महाबलमिति । स्थौणजस्य देवे प्रह्लादं

लोकपालान् वाहनं सामभेदादि शेषादिभ्यो राज्ञामन्येषां च पूर्वोक्तमूर्तिमन्त्रैः, प्रह्लादं दैत्यपतिं विष्णुभक्तं महाबलमिति प्रह्लादस्य यों वा नरसिंह इति मन्त्रेणाष्टोत्तरशतमावर्त्य जुहुयात् । अन्यत् सर्वं प्रतिष्ठोक्तविधिना कारयेत् ॥

ध्रुवबेरं तत्तन्मूर्तिमन्त्रैरष्टोपचारैरभ्यर्च्य कौतुकबेरं पूर्वोक्तषोडशोपचारैस्तत्तन्नाम्ना संयोज्याभ्यर्च्य स्नपनोत्सवादीनि विष्णोरिव कारयेत् ॥

अथ वामनः । त्रिविक्रमं च वामनं पञ्चतालमूर्धादिपादतलान्तं षडङ्गुलं द्विभुजं छत्रदण्डधरं कौपीनवाससं शिखापुस्तकमेखलोपवीतकृष्णाजिनसमायुक्तं पवित्रपाणिनं बालरूपिणं ब्रह्मवर्चस्विनं तन्मूर्ध्नि केशान्तं त्र्यर्धं केशान्तादग्रान्तं यावद् द्वयं त्रिमात्रं तत्समं हन्वन्तं गलं त्र्यङ्गुलं तस्माद् हृदयं षण्मात्रं यवयवं हृदयान्नाभ्यन्तं तत्समं नाभेर्मेढ्रमूलान्तं द्वियवं शिरसाङ्गुलं तस्मादूरू द्वादशाङ्गुलं जानु द्विमात्रमादित्याङ्गुलं जङ्घा तद्द्विमात्रं तदायामं दशाङ्गुलं मुखमात्रान्तं दशाङ्गुलं यवाद् त्र्यर्धोनकला नेत्रं नेत्राद् ग्रीवान्तलम्बं चावधि केशान्तं शिरोभागद्वयं विस्तारं मात्रार्धविस्तृतेऽस्य पुरोगदशान्तरायतेन षड्भिर्यवैः गोलकनेत्रान्तरश्रोत्रदशौ द्वियवान्तरं पञ्चमात्रं श्रोत्रविस्तृतं कर्णान्तं त्रिगुणायामं नालं लम्बोदरं मात्रार्धविस्तृतौ नासाग्रविपुलं मात्रद्वयं तदर्धं मध्यमं मूलविस्तारं त्रियवाङ्गुलमुन्नतं नासाग्रागोष्ठमूलाद् द्वियवोनत्र्यङ्गुलं तारार्धं तद्द्विगुणं तद्दीर्घं तद्दीर्घाद् द्विगुणमास्य उत्तरोष्ठविशालं यवद्वयं पालिषड्यवायाममधरोष्ठमधोहनुः सषड्यवा कलाकन्याहनुपर्यन्तं निर्गममष्टाङ्गुलविशालं हिक्कादधो द्विहस्तसप्ताङ्गुलदीर्घं द्वौ दशाङ्गुलं प्रकोष्ठमणिबन्धतलं भागं तस्मात् मध्याङ्गुलिसमार्धाङ्गुलोन्नतं दीर्घप्रदेशिन्यनामिकाकलायताङ्गुष्ठायामं कनिष्ठायामविस्तृतौ नवाष्टरससप्तषट्पञ्चयवतारं क्रमादङ्गुष्ठादिकनिष्ठान्ताङ्गुलीनां कला द्वियवं तस्य विपली तस्य बहलं हव्यवाहाङ्गुलमग्रतारं त्रिभागं नखविस्तृतं स्वतारं त्र्यधिका नसायामं त्रिमात्रार्धं चतुर्मात्रं षड्यवभागं षडङ्गुलं क्रमान्मणिबन्धं प्रकोष्ठं कौर्परबाहुमूलं साष्टादशाङ्गुलं वक्षःस्थलस्य विपुलं मध्यं कलाङ्गुलं श्रोणितारं षोडशाङ्गुलमुत्सं गुल्फो-

नतम् ऊरुमूलं जानु द्विदशाङ्गुलं समाङ्गुलं जङ्घातारं पञ्चार्धाङ्गुलमलकाविशालं सार्धरुद्राक्षाङ्गुलाग्रविस्तारं पञ्चाङ्गुलं चतुर्यवाङ्गुलायताङ्गुष्ठतर्जनी तत्समायता दीर्घार्धविस्तृताङ्गुष्ठमङ्गुलीनां विस्तारं युक्त्यैवं कारयेत् ॥

त्रिविक्रमं त्रिधा प्रोक्तं लोके त्रिपदविन्यासात् भूलोकात् क्रमेण ललाटसीमान्तमुद्धृतमेतैर्यथेष्टानि रूपं निर्मित्य पूर्ववच्चतुर्विंशतिशताङ्गुलभेदेन देवं चतुर्बाहुमष्टभुजं वाष्टभुजं चेद् दक्षिणे चक्रासिशक्तिधरं वामे खेटकशार्ङ्गहलमुसलधरमेवमष्टभुजं चतुर्भुजो दक्षिणे चक्रं वामे शङ्खं तद्विपरीतं स्ववामपादं दक्षिणं स्थितं वामं प्रसारितं दक्षिणमुत्तानकरं वामप्रसारितपादेन सह प्रसारितं श्यामाभं रक्ताम्बरधरं सर्वाभरणभूषितं तत्पृष्ठे कल्पद्रुरिन्द्रच्छत्रधरमुभौ पार्श्वे जवनं जलेशौ चामरधारिणौ तदूर्ध्वे दक्षिणादिवामकरदक्षिणे निशाकरं तथा सनकं संन्यससनत्कुमारौ च कृत्वा प्रसारितभागस्योर्ध्वपादे ब्रह्माणं तत्पादं प्रगृह्य हस्ताभ्यां प्रक्षालनं कृत्वा तच्छ्रोत्रस्योरुगणपार्श्वे तन्नागौ ऊर्ध्वम् । अन्यत् सर्वं हरेरिव कारयेत् । तस्य नित्यार्चनाविशेषः । वामनस्य त्रिविक्रमस्य च तत्तन्मूर्तिमन्त्रैरष्टोपचारैरभ्यर्च्य कौतुकस्य पूर्वोक्तषोडशोपचारैस्तत्तन्मूर्तिमन्त्रं संयोज्यार्चयेत् । स्नपनोत्सवादीनि पूर्ववत् कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते त्रिविक्रमवामनलक्षणविधिर्नाम

अष्टपञ्चाशः पटलः ॥

---

## अथ एकोनषष्टितमः पटलः ।

जमदग्निरामं मध्यमं दशतालं सविंशतिशताङ्गुलं द्विभुजं रक्ताभं श्वेतवस्त्रधरं दक्षिणेन हस्तेन परशुधरं वामभुजेऽभयकरं जटामकुटं सोपवीतिनं सर्वाभरणभूषितं स्थापयेत् । तद्रूपं विष्णुं चतुर्भुजं वा । अस्य प्रतिष्ठाविशेषः । पूर्वोक्तयागशालायां तन्मध्ये शय्यावेदीं परितः पञ्चाग्नीन् परिकल्प्यान्वाहार्ये प्रधानाग्नौ हौत्रं प्रशंस्याथवैकाग्निविधिना वा कृत्वा रामम् ऋषिसुतं विष्णुं परशुपाणिनमिति आवाह्याज्यं निरूप्याज्याहुतीर्यजेत् । विष्णुर्वरिष्ठरिक्थेन मन्त्रेणाष्टाधिकं शतं

कृत्वा शिष्टं सर्वं पूर्ववत् । तस्यार्चनाविशेषः । ध्रुवबेरं तत्तन्मूर्तिमन्त्रै-रष्टोपचारैरभ्यर्च्य कौतुकं पूर्वोक्तं षोडशोपचारैस्तत्तन्मूर्तिमन्त्रैः संयोज्यार्चयेत् । स्नपनोत्सवादीनि विष्णोरिव समाचरेत् ॥

अथोर्ध्वं राघवरामः । सविंशतिशताङ्गुलं द्विभुजं त्रिभङ्गं स्थितं दक्षिणे शरं वामे चापधरं श्यामं रक्ताम्बरधरं किरीटाभरणाञ्चितं दशरथं कारयेत् । आभङ्गं समभङ्गं त्रिभङ्गमिति त्रिविधं भवति । अत्रा भङ्गादीनां क्रमेण नतिमानमिति वेदशराङ्गुलं स्यादेतेषां पादाङ्गुष्ठ-तारमष्टादशाङ्गुलं क्रमेण तस्मात् त्रिभागैकभागं पार्ष्ण्यन्तरं पादतल-मस्तकाद् भङ्गस्य मध्यसूत्रमूर्ध्नि वामने कबिमण्डले वामनासापुटेऽधर-हनोर्वामपार्श्वे सव्यहस्तदक्षिणपार्श्वे वामाङ्घ्रिपार्ष्णिपार्श्वे प्रलम्बयेत् ॥

समभङ्गमुखं तथोक्तं वामस्तनपीठपार्श्वे नाभिमध्ये वामोरुम-ध्यमपार्ष्णौ मध्यमे तु लम्बयेदिति भङ्गस्य मुखं पूर्ववन्नाभेर्वामोरुमध्ये पार्ष्ण्यन्तरे केवलं लम्बयेत् ॥

पूर्ववद् हिकासूत्रात् स्तनं द्विमात्रं सूत्रार्धं मात्रार्धं कर्णनीम-मिति भङ्गेऽन्यसूत्राणि युक्तितः कारयेत् । सव्यहस्ततलाग्रं सूत्रश्रोणि-दघ्नमूरुमूलसमं बाहुकोर्परपार्ष्ण्यन्तरसमं वा हस्तं सवापमुष्णीषद्वय-सोन्नतनीप्रमुखमौलिपार्श्वे धनुःस्थितमेव कारयेत् । देवस्य बाहुमानं देवीं स्थितां नवार्धतालमानेन समभङ्गवशात् स्थितां रुक्माभां शुक-पिञ्छनिभाम्बरां सर्वाभरणसंयुक्तां करण्डिकामकुटां शिरोरुहोद्बन्धध-म्मिल्लयुतां वामहस्तेन पद्मं दक्षिणहस्तं प्रसार्य कटकाग्रस्योत्सेधं स्तनाक्षसमं नाभेर्मध्यं त्रिबन्धान्तरं त्रयोदशाङ्गुलं पार्श्वमध्ये बाह्वन्तरं सप्ताङ्गुलं प्रसारितं करतलं मध्योर्वन्तं द्विमात्रं तथा मणिबन्धान्तं चतुरङ्गुलं पार्श्वमध्यबाह्वन्तरं रसाङ्गुलं शेषं युक्त्यैव कारयेत् ॥

देवस्य दक्षिणे पार्श्वे देवीं किञ्चित् समीक्ष्य विस्मयोत्फुल्ल-लोचनां देवीं कारयेत् । वामे पार्श्वे कर्णसीमान्तं बाहुमूलान्तं लक्ष्मणं दशतालं षोडशाधिकशताङ्गुलं मध्योर्वन्तरं द्विमात्रं मुखं मध्याङ्गुल-मेवमष्टाननं भागचतुष्टयं समभङ्गस्थितमन्यत् पूर्ववदुद्दिष्टम् । उत्सेध-कौन्तलैर्द्राग् भूषणाञ्चितं सुवर्णाभं श्यामाम्बरधरं चापधरं रामवत् स्थितं कारयेत् ॥

हनूमन्तं प्रमुखे किञ्चिद् दक्षिणमाश्रित्य देवस्य स्तनान्तं चोद्यसप्ततालवेदाधिकाशीतिमात्रं द्विभुजं दीनमूर्ध्वाननं दक्षिणेनास्यं पिधाय वामहस्तेन स्वपादान्तं निगूह्य तद्विपरीतं जानुमध्यमाकर्णस्थितं कपिराजं कारयेत् । मूर्ध्नो कलाभ्रुवौ तस्माद् द्वकलामात्रं नासिकान्तमधस्तात् कण्ठं षण्मात्रं कण्ठाद् दशाङ्गुलं हृदयं हृदयान्नाभिर्नाभेर्मेढ्रान्तं तस्मादूरू विंशतिमात्रं जङ्घा सप्तदशाङ्गुलं हस्तायामं विंशत्यङ्गुलं हीनं प्रकोष्ठं वामपादायमामसमं वा शेषाङ्गं नखस्योक्ततारासु मात्रोनम्, ऊरोर्बाह्वोः कटिमध्ये श्रोणी च लोचनं वा मात्राहीनं करैरर्धाङ्गुलं हीनमङ्गुले .............. । अत्रानुक्तं सर्वं युक्त्यैव कारयेत् ॥

राघवस्य प्रतिष्ठाविशेषः । पूर्वोक्तयागशालायां तन्मध्ये शय्यावेदीं तस्यैव परितः पञ्चाग्नीन् त्रेधाग्नीनेकाग्निं वा कारयेत् । चतुरग्नीन् वा कारयेदिति केचित् । अतो लक्ष्मणसंयुक्तमनेन वार्धमेकशुभे चैकवेद्यां सौमित्रे भिन्नं .........................................
.....................प्रधानाग्नौ हौत्रशंसनं कुर्यात् । एकाग्निविधाने तदग्नौ हौत्रशंसनं कुर्यात् । पूर्वोक्तमूर्तिभिरावाहनादीनि कारयेत् ॥

रायामीशेति मन्त्रेणाष्टोत्तरशतं हुत्वान्यत् सर्वं समनाम् । लक्ष्मणस्य पृथक् प्रतिष्ठा चेद् राघवस्योक्तमार्गेण तथा सीतया श्रीदेव्यै भरतशत्रुघ्नयोश्च राघवलक्ष्मणयोरिव सर्वं समाचरेत् ॥

मूर्तिमन्त्रैर्मन्त्रमेव विशेषः । तथा हनूमन्तस्य यो वा वायुरिवेति प्रतिष्ठामाचरेत् । नित्यार्चनाविशेषः । राघवस्य ध्रुवबेरं तत्तन्मूर्तिमन्त्रैरष्टोपचारैरभ्यर्च्य पूर्वं षोडशोपचारैस्तत्तन्मूर्तिमन्त्रं संयोज्यार्चयेत् ॥

अथोर्ध्वं बलभद्ररामस्य मध्यमं दशतालं पादादि चोष्णीषान्तं सविंशतितालाङ्गुलं द्विभुजं रामवद् दक्षिणेन हस्तेनावलम्बितमुसलं वामेन हलधरं श्वेताभं रक्तवस्त्रधरमुद्बन्धकुन्तलं दक्षिणे रेवतीं देवीं पद्मकिञ्जल्कवर्णाभां पुष्पाम्बरधरां दक्षिणहस्तेन पद्मधरां वामं प्रसारितहस्तामेव बलभद्रामं तद्रूपं कौतुकं विष्णुं चतुर्भुजमेव कारयेत् ॥

तस्य प्रतिष्ठाविशेषः । पूर्वोक्तयागशालायां तन्मध्ये शय्यावेदीं तस्यैव परितः पञ्चाग्नीन् परिकल्प्य आहवनीये प्रधानाग्नौ हौत्रशंसनं कृत्वा रामं यदुवरं विष्णुं हलायुधमिति । रेवतीमिन्दिरां लक्ष्मीं रामप्रियामिति रेवतीं क्ष्मामेकामिति मन्त्रेणाष्टोत्तरशतं गजित्वान्यत् समानम् । पूर्ववद् ध्रुवबेरेऽष्टविग्रहैः कौतुके षोडशोपचारैस्तत्तन्मूर्तिमन्त्रैः संयोज्यार्चयेत् । स्नपनोत्सवादीनि पूर्ववत् कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते रामत्रयविधिर्नाम
एकोनषष्टितमः पटलः ॥

## अथ षष्टितमः पटलः ।

अथ कृष्णस्य लक्षणं वक्ष्ये । मध्यमं दशतालं सविंशतिशताङ्गुलं द्विभुजं श्यामाभं रक्तवस्त्रधरं सर्वाभरणभूषितं किरीटिनमुद्बन्धकौन्तलं वा दक्षिणेन हस्तेन क्रीडायष्टिधरं वामोद्यतकरकोर्पराहिक्कासूत्रादधस्तादथोर्ध्वकरं दशाङ्गुलं दक्षिणे करे कटकाग्रं नाभिमात्रं श्रोणिदघ्नमूरुमूलसमं वा तस्मात् षट्सप्ताष्टदशाङ्गुलं हिक्कानासाग्रात् पादतलान्तसूत्रं हिक्काद्वयमेकाङ्गुलं सूत्रात् तस्यार्धं हृदयं नाभेर्दक्षिणे कलाङ्गुलं मेढ्रभागे वामे जान्वन्तरं जगतीद्वयसूत्रात् मात्राद्वयं पार्ष्ण्यन्तरमेवं समभङ्गसूत्रम् अन्यत् सर्वं राघवस्योक्तमार्गेण दक्षिणे रुक्मिणीं देवीं हेमाभां शिरोरुहधम्मिल्लयुतामुद्बन्धकौन्तलां वामहस्तं दक्षिणं प्रसार्य वामे पद्मां तथा वामपार्श्वे सत्यभामां श्यामाभां शिरोरुहबन्धधम्मिल्लयुतामुद्बन्धकौन्तलयुतां वामहस्तं दक्षिणं सपुष्पं वामं प्रसार्य किञ्चिद् देवं समीक्ष्य सर्वाभरणसंयुक्तां कारयति । देवीभ्यां करण्डिकामकुटं वेति केचित् । देवस्य वामे गरुडं प्राञ्जलीकृत्य सुस्थिरं कारयेत् । दक्षिणहस्तेन लीलायष्टिधरं वामोत्कोर्परं सशङ्खं वा कारयति । तद्रूपं कौतुकं विष्णुं चतुर्भुजं कृत्वा वामपदं किञ्चित् संस्थितं दक्षिणमुत्तानकुञ्चितं दक्षिणमभयं नवनीतयुतं वामं प्रसार्योत्तानं सर्वाभरणभूषितमम्बरहीनमम्बरधरमायुतं नवनीतनृत्तरूपं कारयेत् ॥

एवमेव कालियाहिफणोपरि स्थितं दक्षिणहस्तं सपातकं वामकरेणाहिकरेणाहिपुच्छं सङ्गृह्य नर्तकं कारयेत् ॥ गोपीगोपगोकन्यकाभिः परिवृतं दक्षिणं सत्ययोद्यतपादं वामं सुस्थितमाहृत्य द्विहस्ताभ्यामङ्गुलीषु वेणुविवरान् संयोज्य त्रिभङ्गभङ्गगानरससमन्वितं गोपालं गायकं रथारूढं ... .... ध्वजाश्वचक्रमुकुलादिरथाङ्गैर्युक्तं रथं कृत्वा पार्थं सचापं प्राञ्जलीकृत्याधःस्थले स्थितं चोपरि यत्र यष्टिपाणौ गृहीत्वा दक्षपादं गृहीत्वा स्थितं वाममुद्धृत्य रथभित्तौ संस्थाप्य दक्षिणहस्तेन व्याख्याननिर्णयाङ्गुलिमुद्रया संयुक्तं पार्थसारथिरूपं कारयेत् ॥

तस्य प्रतिष्ठाविशेषः । पूर्वोक्तयागशालायां तन्मध्ये शय्यावेदिं तस्यैव परितः पञ्चाग्निपौण्डरीकाग्निमथवा त्रेताग्निमेकाग्निं वा सङ्कल्प्य पौण्डरीके प्रधानाग्नौ हौत्रं प्रशंस्य त्रेधाग्निविधाने गार्हपत्ये कुर्यात् । एकाग्निविधिना तदग्नौ कुर्यात्। अथवा सर्वत्र पौण्डरीकाग्निं सङ्कल्प्य तस्मिन् कुर्यादित्येके। कृष्णं नारायणं पुण्यं त्रिदशाधिपतिमिति कृष्णस्य, रुक्मिणीं सुन्दरीं देवीं रमामिति रुक्मिण्याः, सत्यभामां सतीं गतिं कृष्णामिति सत्यभामायै, गरुडस्य पूर्ववत् । नवनीतनटं कृष्णं देवकीसुतं बालरूपिणमिति नवनीतनटस्य, कालियमर्दनं कृष्णं गोपालं वटपत्रशायिनमिति कालियमर्दनस्य, गोविन्दं जनवल्लभं सुन्दरं कृष्णं गायकमिति गोपालस्य, पार्थसारथिमर्जुनसहायं कृष्णं देवमयमिति पार्थसारथिरूपस्य, अर्जुनं धनञ्जयं कृष्णप्रियमित्यर्जुनस्य, अन्यानि रूपाणि तत्तत्कर्मणा संयोज्य कारयेत् । एवमावाहनादीनि कारयेत् । कृत्वा सत्यः सत्यस्थ इति मन्त्रेणाष्टोत्तरशतमावर्त्य हुत्वा शेषं समानम् । अस्य नित्यार्चना ध्रुवबेरे पूर्ववदष्टोपचारैः कौतुकं षोडशोपचारैर्मूर्तिमन्त्रं संयोज्यार्चयेत् । स्नपनोत्सवादीनि पूर्ववत् कारयेत् । रुक्मिणीसत्यभामाभ्यां पृथक् प्रतिष्ठा चेद् देव्योः पृथक् प्रतिष्ठाविधानेन कारयेत् ॥

क्षीणं मध्यमं दशतालमन्यानां मुखमन्यद् नराकारं चतुर्भुजं चक्रशङ्खधरं खड्गखेटकंधरमुग्ररूपं भयानकमेव देवं कृत्वा कौतुकं

चतुर्भुजमेव कारयेत्। तस्य प्रतिष्ठाविशेषः। पूर्वोक्तयागशालायां तन्मध्ये शय्यावेदीं तस्यैव परितः पञ्चाग्निपौण्डरीकाग्निमेव सङ्कल्प्य सभ्याग्नौ प्रधाने हौत्रशंसनम्। कल्किणं विष्णुं कामरूपं संहारात्मकमित्यावाहनादि कारयेत्। पूर्णो वहन्तामिति मन्त्रेणाष्टोत्तरशतं हुत्वान्यत् समानम्। अर्चनां पूर्वोक्तक्रमेण मूर्तिमन्त्रं संयोज्यार्चयेत्। स्नपनोत्सवादीनि पूर्ववत् कुर्यात्। अथवा मत्स्याद्यवताराणां पूर्ववत् त्रेधाग्निविधिनाग्निं सङ्कल्प्य तत्प्रधानाग्नौ हौत्रशंसनावाहनादीनि कारयेत्॥

एषां रूपभेदमेवं शक्तिभेदं नैवमेव भवेत्। तस्मात् प्रतिष्ठाविशेषार्चनादीनि सर्वाणि विष्णोरिव समर्चयेत्। तथावरणे ध्रुवबेरं कौतुकबेरं च प्रत्येकं कर्तुमशक्तश्चेत् पूर्वोक्तेनैकबेरक्रमेण षण्मासमहितं शैलजं कृत्वार्चास्थाने ब्रह्मपदे ध्रुवस्थाने दैविके वा प्रतिष्ठाप्य षोडशोपचारैरर्चयेदित्येके॥

अथादिमूर्तिविधिः। अनन्तोत्सङ्गसमासीनां दक्षिणपादमाकुञ्च्य वामं प्रसार्य दक्षिणहस्तं तदनोर्ध्वे संन्यस्य वामहस्तं वामजांनूर्ध्वे प्रसार्य चतुर्बाहुं चक्रशङ्खधरं फणान् पञ्च सप्त वा छत्रमौलिनं नवाब्जाभं सर्वाभरणभूषितं दक्षिणे भृगुं वामे मार्कण्डेयमेकजानुक्रमेणासयित्वा दक्षिणे ब्रह्माणं वामे शङ्करं तद्रूपं कौतुकं प्रतिष्ठोक्तक्रमेण प्रतिष्ठां कारयेत्। तस्य विशेषः। आदिमूर्तेः समन्तान्महीमानमत्यन्ताद्भुतमनन्तभोगमित्यादिमूर्तेर्नागराजं सहस्रशीर्षमनन्तमशेषमित्यनन्तमित्यावाहनादीनि कारयेत्। अन्यत् समानम्॥

अनन्तभोगशयने प्रतिष्ठा चेदनन्तशयनादिमन्त्रैरावाहनं पुष्पन्यासकाले द्वासिनमेवमिति संस्मरेत्। स्वप्नान्तभूप्रवृद्धे देवे निशाभ्रत्भालनसंयुक्तं शयनं हरिं प्रणवेनोत्थाप्य पादवाक्येन पश्चात् पञ्चायुधानां तत्तन्मूर्तिमन्त्रैः समर्चयेत्। अनन्तफणवाद्येऽनन्तं नागराजं सहस्रशीर्षं विष्णुं खगमिति मन्त्रैरावाहनमर्चनं पुष्पन्यासं च कुर्यात्। शेषमहानिति केचिद् वदन्ति। कौतुकस्य विष्ण्वादिमूर्तिमन्त्रैः पूर्ववदर्चयेत्। उद्वाहनकाले मन्त्रेण देवेशं शाययेत्। भोगशयने चाभ्यन्तरे जयां विजयां च समर्चयेत्॥

अन्यत् सर्वं पूर्ववत् । अनन्तोर्ध्वे पुष्पन्यासं कृत्वा कौतुकमावीरमेव स्मरेदिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते कृष्णकर्क्यादि-
मूर्तिलक्षणं नाम षष्टितमः पटलः ॥

## अथ एकषष्टितमः पटलः ।

अथ मानुषं वासुदेवमाश्रयेत् । विमाने मध्यमं दशतालं सविंशतिशताङ्गुलं द्विभुजं चक्रशङ्खधरं दक्षिणे रुक्मिणीं देवीं तद्दक्षिणे हलधरयुतं बलभद्रं तद्दक्षिणे प्रद्युम्नं द्विभुजं दक्षिणे क्षुरिका वामं कक्ष्यवलम्बितं तद्दक्षिणे विरिञ्चं चतुराननं चतुर्भुजं तस्य वामपार्श्वेऽनिरुद्धं द्विभुजं खड्गखेटकधरं तस्य वामे द्विभुजं साम्बं दक्षिणे दारुकमन्यद्दण्डधरं तस्य वामे गरुडं तेषा .... .... कारयेत् । देवानेतान् स्थानकमेव संस्थाप्य तदूर्ध्वं कौतुकं कारयेत् । अथवा तेषां मध्ये विष्णुं चतुर्भुजमेवं स्थापयेत् ॥

दैविकवासुदेवं सिंहासने समासीनं चतुर्बाहुं चक्रशङ्खधरं श्रीभूम्या समासीनं तथा देवस्य दक्षिणे वामयोः पूर्वोक्तदेवान् बलभद्रस्य देवीं रेवतीं प्रद्युम्नस्य दक्षिणे रोहिणीमनिरुद्धस्य रामां साम्बस्येन्दुकरीं च सभवाः स्थापयेत् । एतेषां कौतुकबिम्बं पूर्ववदेषां स्थापनविशेषः पूर्ववत् । पञ्चाग्निपौण्डरीकाग्नींश्च कृत्वान्वाहार्ये दक्षिणे चावसथ्यं चोत्तरे चौपासनाग्निकुण्डं कृत्वा वासुदेवं सभ्ये प्रधानाग्नौ हौत्रशंसनं बलभद्रस्याहवनीयेऽनिरुद्धस्यावसथ्ये साम्बस्यावसथ्ये दक्षिणोत्तरयोरौपासनाग्नौ विरिञ्चगरुडयोः प्रधानाग्नौ भद्रेशं वासुदेवं पुण्यमूर्तिं पुण्यात्मकमिति मानुषवासुदेवस्य दैविकवासुदेवमिति । अन्यत् पूर्वमिति ॥

दैविकवासुदेवस्य देवीभ्यामृषिभ्यां च पूर्ववद् बलिनं हलधरं नागराजं सङ्कर्षणात्मकमिति बलभद्रस्योषावत् प्रद्युम्नं वीरं बलशालिनामिति प्रद्युम्नस्य पुरुषं सत्यमच्युतमनिरुद्धस्य साम्बस्य पिताम-

हस्य गरुडयोः पूर्ववन्मूर्त्तिमन्त्रैरावाहनादीनि कृत्वा सभ्याग्नौ द्वयोर्वासुदेवयोः सहस्रशीर्षाद्यैरावाहयेत् । विष्णोर्नुकाद्यैराहवनीये विष्णोर्नुकाद्यैरन्वाहार्येऽतोदेवाद्यैर्गार्हपत्ये विष्णुगायत्रीमावसथ्ये चैकाक्षरादिभिश्शेषाणां प्रत्येकं दशशो हुत्वा ब्रह्मजज्ञानं हिरण्यगर्भ इति ब्रह्मणे शतधारं कदाचिद् विसृजेत् । गरुडस्य तथैव जुहुयात् । अन्यत् सर्वं हरेरुक्तविधिना कारयेत् ॥

अथाभासानां स्थापनाविधिः । तदभावे द्विविधं भवति पद्मौ चेति । तेषां मानाङ्गुलेन सप्ताङ्गुलान्यङ्गुलीमानेष्विष्टमानं विनिश्चित्य पश्चाद् देवानां तत्तदुक्ततालेन साङ्गोपाङ्गं तत्सुवर्णाम्बराभरणायुधैर्युक्तं नयनानन्दनं समालिख्य.... स्थापनां कारयेत् । तद्दिनात् पूर्वमङ्कुरानर्पयित्वा सम्भारान् सम्भृत्य पूर्वेद्युरेव पूर्वाह्णे तस्य देवाभिमुखे चौपसनाग्निकुण्डं कृत्वाघारान्ते वास्तुहोमं च हुत्वा पूर्ववदक्षिमोचनं कृत्वाग्निं संरक्ष्य बेरशुद्ध्यर्थमुदकुम्भोदकैः पवमानाद्यैः समभ्युक्ष्य पुण्याहं वाचयित्वा तद्रात्रौ तमग्निं प्रज्वाल्य परिषिच्य वैष्णवं व्याहृत्यन्तं हुत्वा तत्तद्देवाभिमुखे धान्योपरि तत्तत्कुम्भं संन्यस्य धान्योपरि सप्तकलशोदकैस्तत्कुम्भं बिम्बं चाभ्युक्ष्य व्रीहिभिः स्थण्डिलं कृत्वा वस्त्राण्यास्तीर्य प्रतिसरमाबध्य शयनं च समन्त्रं सङ्कल्प्याग्निं परिस्तीर्य हौत्रं प्रशंस्य मूर्त्तिमन्त्रेणावाहनादीनि कृत्वा देवेशं चोत्सवं सभ्याग्नौ सर्वमाचरेदिति तत्तन्मन्त्रेणाष्टाधिकशतं हुत्वा रात्रिशेषं विनीय प्रभाते स्नात्वा देवान् प्रणम्य सुमुहूर्ते सम्प्राप्ते तत्तन्मन्त्रैः स्थापनं सङ्कल्प्य बीजाक्षरं न्यस्य तत्तन्मन्त्रेण तत्तत्कुम्भोदकेनावाह्य पुण्याहान्तेऽभिमुखे पीठे बिम्बं सुवर्णकूर्चं वा संन्यस्य तस्मादावाह्याभ्यर्च्य हविर्निवेद्याथवा पीठे वा समावाह्याभ्यर्च्य केचित् । आचार्यादिभ्यो दक्षिणां दत्त्वा नित्यं समर्चयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
वासुदेवयोः पञ्चवीराणां चाभासदेवानां
स्थापनविधिर्नामैकषष्टितमः पटलः ॥

## अथ द्विषष्टितमः पटलः ।

अथ भूपरीक्षादीनां प्रायश्चित्तविधिर्नाम व्याख्यास्यामः । न्यूनातिरिक्तव्याघातेषु प्रायश्चित्तं कुर्यात् । न कुर्याच्चेद् विनाशाय भवति । तस्मात् प्रायश्चित्तं प्राचरेत् । प्राय इत्यनेन शब्देन दोषसम्पादनं चित्तं तस्य प्रतिषेधनं तस्मात् प्रायश्चित्तमित्युक्तम् । भूपरीक्षादिक्रियां यस्मिन्नहनि कारयेत्, तस्मिन्नहनि तदर्थमागमनकाले विघ्नं चेद् वैष्णवं वैघ्नं जप्त्वा, दुर्दर्शने सौरं रौद्रं, दुर्वाक्यश्रुते ब्राह्मं सारस्वतं जप्त्वा देवं ध्यायन् समागच्छेत् I........रुधिरस्रावाग्निदग्धे वैष्णवं सौम्यं वैष्वक्सेनं गारुडं च लौकिकाग्नौ हुत्वा पुनराहरेत् । भूपरीक्षणकाले तत्पांसुक्षये पूर्णाहुतीर्हुत्वा भूमेर्मन्त्रैः क्रमेण हुतं चेत् तस्मिन् शुद्धे देशे औपासनाग्निमाधाय वैष्णवं पञ्चभूमिदैवत्यं तदग्नौ हुत्वा, कर्षकाले वृषाङ्गहीनं चेद् रौद्रं ब्राह्मं हुत्वोक्तवृषालाभे प्रमाणहीने वैष्णवं सौरं सौम्यमाग्नेयं प्राजापत्यं हुत्वा, रज्जुच्छेदे वारुणसीतया दैवत्यं वालज्येष्ठान्मन्त्रमृषौ वायव्यं क्षीणे वसंयुगे शेषमन्त्रं वृतो याम्यं व्याहृतिपर्यन्तं हुत्वा, कर्षणकाले कपालास्थितुषकेशवल्मीकसङ्करादिदर्शने तद् व्यपोह्य तस्मिन् पञ्चगव्येनाभ्युक्ष्य सौम्यमाग्नेयं वैष्णवं वैष्णवं हुत्वा, विष्वक्सेनानपार्थिनां चार्चाहीने वैष्णवं तद्दैवत्यं च हुत्वा पुनरर्चयेत् । बीजवापनहीने वैष्णवं सौम्यं वायव्यं हुत्वा बीजदानं कृत्वा, गोगणनिवेदनहीने वैष्णवं वैष्वक्सेनं गारुडं सौदर्शनं हुत्वा, पलालभाराणि तृणानि वास्तीर्य गोगणेभ्यो निवेदयेत् । पददेवताबलौ हीने विपरीते वा तत्पददेवानां मन्त्रं पूर्वं वैष्णवं ब्राह्मं वासवं याम्यं वारुणं कौबेरं हुत्वाराध्य तथैव बलिमर्पयेत् । ब्रह्मपद्माघटक्रियाहीने कार्यमारम्भणं चेद् वैष्णवं ब्राह्मं वारुणं महीदैवत्यं च हुत्वारभेत् ॥

शकुनादिदिक्परिच्छेदनाहीनं क्रियायुक्ते दिग्दैवत्यं वैष्णवं हुत्वा दिक्परिच्छेदनं कृत्वारभेत् । विमानार्थं भूखननकाले शल्यलोष्टपाषाणादिदर्शने वैष्णवं ब्राह्मं पञ्चमभूमिदैवत्यं व्याहृतीर्हुत्वा आपे-

इष्टकाशिला वा प्रमाणहीनेऽधिके वैष्णवं विष्णुसूक्तं तेषामग्रविपर्यासेऽधोमुखे वा दिग्दैवत्यं वैष्णवं हुत्वा वेदादीन् जप्त्वा तस्मिन् रत्नन्यासहीने रत्नेशमन्त्रहीने विष्णुसूक्तं हुत्वा गर्भन्यासहीने वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं विधिना कारयेत् । गर्भभाजने प्रमाणहीनेऽधिके च सौम्याग्नेयं हुत्वा द्रव्याणां सङ्करे स्थानविपर्यासे वैष्णवं तत्तत्स्थानाधिपदैवत्यं हुत्वानुक्ते देशे संन्यस्यार्चे वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं हुत्वा तत्तत्स्थाने निवेशयेत् । अन्वष्टकानामाद्येष्टकावत् प्रायश्चित्तं हूयते । स्थूपिकीले देवाधारे च प्रमाणहीने चोक्तवृक्षालाभे वैष्णवं सौम्यमाग्नेयं श्रीभूमिदैवत्यं विधिना हुत्वा कारयेत् । उपानादिस्थूपिपर्यन्ताङ्गोपाङ्गानां प्रवेशनिर्गमनप्रमाणहीनाधिकं चेत् विमानप्रतिष्ठायां तत्तदङ्गानां मन्त्रमष्टाधिकशतमावर्त्य हुत्वा तत्तदङ्गी सुधया प्रमाणसमं तत्रयेदधिपत्य तच्छेदनिवेदनच्छेदयेत् (?) । अन्यत्प्रयोगं युक्तितः कारयेत् । प्रोक्षणैः प्रोक्षयेत् । विमाने समाप्ते कलशक्रियायां सुधावर्णानुलेपने विहीने वैष्णवं विष्णुसूक्तं श्रीसूक्तं भूमिदैवत्यं हुत्वालयदारुभेदे आलयस्य कवाटहीने धात्रादिषड्दैवत्यं वैष्णवं श्रीभूमिदैवत्यं हुत्वा प्राकारगोपुरादौ हीने महत्तरो दोषो भवति । वीशहीने रिपुवृद्धिर्विष्वक्सेनविहीने कुलोत्सादनं भूतपीठविहीने धनधान्यायुष्यहानिः कूपाराममहानसपुष्पसञ्चयस्नानपानीयस्थानमण्डपहीने तत्तत् सर्वं निष्फलं भवति । तस्मात् सर्वं प्रयत्नेन कारयेत् ॥

विष्णुसूक्तं पुरुषसूक्तं वैष्णवं श्रीभूमिदैवत्यं च हुत्वा स्थूपिकीलान्तमनुक्तप्रायश्चित्तमालयात् पुरतो दक्षिणे वा पश्चाग्नौ वैष्णवं विष्णुसूक्तं श्रीभूदैवत्यं च हुत्वा स्थूप्याद्युपानान्ताङ्गनामभिरङ्गहोमं तदङ्गयः स्वाहादीन् ब्राह्मं रौद्रं वैघ्नमाग्नेयं दुर्गासूक्तं प्राजापत्यं च हुत्वा समाप्ते विमानेऽज्ञानादर्थलोभाद्वा ध्रुवबेरं विना कौतुकस्थापनं चेदेकमूर्तिविषये ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य नाशनं भवति । तस्मान्महाशान्तिं त्र्यहं हुत्वा वैष्णवान् सम्पूज्य ब्राह्मणान् भोजयित्वा देवेशं क्षमस्वेति प्रणम्य देवं बालालये प्रतिष्ठाप्य ध्रुवबेरं ध्रुवार्चाबेरं वा संस्थापयेत् । ध्रुवबेरस्थापनाहीने मासातीते शान्तिं

हुत्वा वैष्णवं विष्णुसूक्तं श्रीभूदेवत्यं हुत्वा वैष्णवान् सम्पूज्याचार्यदक्षिणां दत्वारभेत् । द्विमासे द्विगुणं त्रिमासे त्रिगुणमेवं संवत्सरान्तं वर्धयेत् । संवत्सरेऽतीते महत्तरो दोषो भवति । सप्ताहं महाशान्तिमञ्जाग्नौ जुहुयात् । ब्राह्मणान् भोजयित्वाब्दं प्रति महाशान्तिमेकाहं सप्तवर्षान्तं वर्धयति । सर्ववर्षे कर्षणादिपुनःसंस्कारं कृत्वारभेत् । जलाधिवासात् पूर्वे ध्रुवबेराङ्गहीने वैष्णवं श्रीभूमिदैवत्यं दञ्यःस्वाहायं होमं च हुत्वाचार्यदक्षिणां दत्त्वा तद्वेरसन्धानं च कृत्वा युक्तं चेत् पुनर्बेरं समाहरेत् । शिलाग्रहणक्रियां हित्वा सलक्षणं शिल्पं चेत् वैष्णवं शान्तिं हुत्वा तद्वेरं भूमौ पिधाय वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां संशोध्य पश्चात् समन्त्रकं सङ्गृह्य विधिनैव स्थापयेत् जलाधिवासात् पूर्वे कौतुकस्य देव्यादीनामङ्गहीने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं महीसूक्तं ब्राह्मं रौद्रं मनिभ्यामन्त्रमन्येषां तत्तन्मन्त्रं हुत्वाङ्गहीनबेरसन्धानं कृत्वा युक्तश्चेद् विधिना त्यक्त्वा पुनर्बेरमाहृत्य स्थापनं कारयेत् । स्थापिते बेरे मासातीते तत्संस्कारहीनेऽब्जाग्नौ वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं पार्षदं हुत्वा द्विमासे द्विगुणं त्रिमासे त्रिगुणमेवं संवत्सरान्तं वर्धयति । संवत्सरेऽतीते पुनः पुनः स्थापनं कारयेत् । द्वादशवर्षातीते तद्विमानस्य कर्मणां पुनः संस्कारं बेरशिलाग्रहणशूलसंस्कारानन्यद्वेरसंस्कारक्रियां सर्वं कृत्वा पुनः स्थापनं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते भूपरीक्षादिप्रायश्चित्तविधिर्नाम द्विषष्टितमः पटलः ॥

---

## अथ त्रिषष्टितमः पटलः ।

कर्षणादिपुनःसंस्कारविधिः । तदालयं सर्वत्र तृणगुल्मादीन् संशोध्य शिलाप्रक्षेपणमिष्टकाप्रक्षेपणं दारुप्रक्षेपणं वर्णानुलेपनं कृत्वालयस्योत्तरे वास्तुहोमं हुत्वा पुण्याहान्ते पर्यग्निं कृत्वा पञ्चगव्यैः समभ्युक्ष्य कर्षणार्थमालयाभिमुखे व्रीहिभिः स्थण्डिलं कृत्वा देवेशं विष्वक्सेनं बीजवान्वानपादिनाभ्यर्च्य हविर्निवेद्य सुवर्णेन रत्नं

कृत्वाचार्यसमीपे दक्षिणहस्तेन गर्भागारादि सर्वत्र विष्णोर्नुकाद्यैः कर्ष-
यित्वा यथोक्तान् बीजान् भारवर्धं तदर्धं वाहृत्याभ्युक्ष्य तस्मिन्
सोममभ्यर्च्य विष्णुगायत्र्याभिमृश्य सोमं राजानमित्युक्त्वा सर्वत्र
बीजवापनं कृत्वा तस्योपरि दूर्वादीनि तृणान्यास्तीर्य तानि गोदान-
सूक्तेन गोगणेभ्यो निवेदयित्वालयं संशोध्य ब्रह्मादिपर्षद्देवानां सावि-
त्र्याद्यष्टदेवीशादिद्वात्रिंशद्देवानां नागभूतादिपञ्चविंशद्गर्भागारदेवानां च
रत्नादीनां चतुर्णां द्रोणैर्द्रोणार्धैराढकैर्वा तण्डुलैरेकपात्रे चरुं पक्त्वा
घृतमास्राव्य पूर्वमुदकं पुष्पं बलिमुदकं दत्त्वालयं संशोध्य कर्षणादिहोमं
तत्तत्संस्कारहोमं च जुहुयात् । आद्येष्टकार्थमौपासनाग्निं परिस्तीर्य
वैष्णवं विष्णुसूक्तं दिग्दैवत्यं च हुत्वा तत्संस्कारहोमं हुत्वाद्येष्टका-
स्थानं संस्पृश्य देवं ध्यायंश्चतुर्वेदादिमन्त्रैर्जपेत् । अग्निं परिषिच्य
पश्चादग्निं परिस्तीर्य गर्भन्यासार्थं विष्णुसूक्तं पुरुषसूक्तं महीसूक्तं दि-
ग्दैवत्यं च हुत्वा नागराजाय सर्वरत्नेभ्यः सर्वधातुभ्यः सर्वबीजेभ्यः
सर्वलोकेभ्यो नदीभ्यः पातालेभ्यो नागेभ्यो दिग्गजेभ्यः स्वाहेति
हुत्वा तत्तत्संस्कारहोमं जुहुयात् । अभ्यन्तरं प्रविश्याभ्यन्तरद्वार-
स्तम्भाद् दक्षिणे मेदिनीमभ्यर्च्य तत्स्थानं संस्पृश्य पुरुषसूक्तमेदि-
न्यादिमन्त्रं जपेत् । गर्भविनाशने चैवं हुत्वा गर्भं संशोध्य संस्थापयेत् ।
गर्भं विनाद्ययावेवं सर्वं निष्फलं तदाभिचारिकं भवति राज्ञो ग्राम-
यजमानाचकानाम् । तस्मात् सर्वयत्नेन गर्भं संस्थापयेत् । अन्त्येष्ट
कार्थं विष्णुसूक्तं विमानपालकदैवत्यं तत्तत्संस्कारहोमं जुहुयात् ॥

विमानोपरि स्तूपिकीलादधस्तादन्त्येष्टकास्थाने चतुर्वेदादि
मन्त्रान् स्तूपिकीले विष्णुसूक्तं जप्त्वाभ्यन्तरे ध्रुवबेररत्नन्यासहीनं चे
दग्निं परिस्तीर्य ध्रुवस्थानोक्तवद्धोमं हुत्वा पूर्ववद् रत्नानि विन्यस्य
स्थापनासूक्तं चोच्चार्य संस्थाप्य तत्रनवीकरणं कृत्वा कौतुकाद्यैः सह
प्रतिष्ठां कारयेत् । ध्रुवे नष्टे पूर्ववद् द्रव्यैर्बेरं सलक्षणं प्रतिष्ठां कारयेत् ।
नरवलक्षणाद्युक्तपादितमहाबेरं हीनाङ्गं चेद् तच्छुद्ध्यर्थं जलाधिवासादिकं
कृत्वा शान्तिहोमं हुत्वा तत्स्थाने रत्नन्यासं कृत्वा स्थापनोक्तहोमं
हुत्वा संस्थापयेत् । अन्यालयस्याप्यपहोममतिनिष्फलम् । क्रियान्वितं
बेरं स्याचेत् , तद् बेरं भूमौ पिधाय विधिनाहृत्य शेषक्रियां कृत्वा
विधिना स्थापयेत् ॥

यथाविधि यथास्थाने स्थापितं महाबेरं निर्दोषं चेत् तन्न चालयेत् । अज्ञानाच्चलितं चेद् राजराष्ट्रविनाशाय भवति । तद्दोषशमनाय पौण्डरीकाग्नौ महाशान्तिं हुत्वा विप्रशतं भोजयित्वा सुवर्णदानं गोदानं च हुत्वा पुनः प्रतिष्ठां कारयेत् । आचार्याद्यैरज्ञानेन स्थापितं चेदाभिचारिकं भवति । तद्दोषशमनार्थं महाशान्तिं हुत्वा यथाविधिज्ञैः पुनः स्थापनां कारयेत् । रत्नन्यासार्थं वा रत्नानामलाभे सुवर्णं निक्षिप्य विष्णुसूक्तं वैष्णवं जुहुयात् । बीजानामलाभे यवं शालिधान्यं वा निक्षिप्य सौम्यं वैष्णवं जुहुयात् । विमानार्थे शिलाग्रहणे दारुग्रहणे च क्रियाहीने विपर्यासे वैष्णवं विष्णुसूक्तं इन्द्राहुतिं विच्छिन्नं व्याहृत्यन्तं जुहुयात् । द्वारस्तम्भभुवङ्गपतङ्गकवाटवोधिकाचोत्तरतुलास्तम्भानामन्यदनुक्तानां प्रमाणहीने दुष्टेऽग्निदग्धे जीर्णे कृमिकृष्टे च तं त्यक्त्वान्यमाहृत्य पूर्ववत् संयोज्याभ्युक्ष्य नित्याग्नौ वैष्णवं सौम्यमाग्नेयं हुत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा तत्तदधिदैवत्यं जुहुयात् । प्रमादान्मण्डपप्राकारगोपुरादिष्वग्निना दग्धेऽशनिपाते वाताहते च शीघ्रं पुनःसन्धानं कृत्वा हवनीयाग्निकुण्डं कृत्वा वास्तुहोमविधिना वास्तुहोमं हुत्वा विष्णुसूक्तं पुरुषसूक्तं वैष्णवमाग्नेयं व्याहृत्यन्तं जुहुयात् । आलयेऽग्निदाहादिसम्भवेऽब्जाग्नौ पारमात्मिकमीङ्काराद्यष्टाशीतिविच्छिन्नमिन्द्राहुतीं आग्नेयं विमानाङ्गहोमं व्याहृत्यन्तं जुहुयात् । देवं कलशैः संस्नाप्य चन्दनेन तनुमालिप्य विशेषतोऽभ्यर्च्य हविर्निवेदयेत् । ध्रुवबेरादिबेरेष्वग्निदाहादिसम्भवे देवं क्षमामन्त्रेण क्षमस्वेति प्रणम्य याचयेत् । कुम्भं संसाध्य देवं कुम्भे समावाह्याब्जाग्नौ कुम्भं संस्थाप्य महाशान्तिं हुत्वा देवं बालालये नीत्वा संस्नाप्याभ्यर्च्य शीतकुम्भं निदध्यात् । ध्रुवबेरादिबेराणां युक्त्या यथोक्तविधिना संस्कारं कृत्वा पुनः प्रतिष्ठामाचरेत् ॥

चोरशत्रुभयादर्चनं कर्तुमशक्तश्चेद् बेरमाहृत्यान्यालये प्रपानस्थानादन्यत्र यावत् तत्रार्चनायुक्तं तावत्कालं यथालाभमर्चयेत् । तदयुक्तश्चेदन्यस्मिन्नालये प्रतिष्ठाप्यार्चनं कारयेत् ॥

नदीतटाकसमुद्रसम्बाधे ग्रामादिविनाशने च वनपार्श्वे पर्वतपार्श्वे मनुष्यैरगोचरे चोरशत्रुदुष्टैश्चिरकालसङ्कुले देशे च चण्डालाद्यशुच्यधिष्ठितस्थाने च राजाज्ञया वान्यत्र मनोरमे च निर्भये विस्तीर्णदेशे ग्रामादौ तत्समीपे सति तस्मिन् विमानं विधिना कृत्वा तद्बेरं सपर्षदमाहृत्य प्रतिष्ठाप्यार्चयेत् ॥

पूर्वालयध्रुवबेरं नष्टं चेत् कौतुकादीन् समाहृत्य विधिना ध्रुवबेरं च कृत्वा तत्तत्कौतुकादीनेवं संस्थापयेत् ॥

सर्वस्मिन्नालयेऽर्चनं कर्तुमशक्तश्चेत् कूर्चनं विन्यस्य यथालाभमर्चयेत् ॥

राजा राष्ट्रान्तराधिष्ठितबेरमाहृत्य स्थापनं यदीच्छेत् स्वराष्ट्रे मनोरमे देशे विमानं विधिवत् कृत्वा विधिना संस्थाप्याभ्यर्च्य विमानाङ्गवास्तुविन्यासं कृत्वाथवा ग्रामादौ वास्त्वङ्गालये वान्यस्मिन्नालये वा संस्थापयेत् । अन्यस्मिन् पर्षद्देवावाससमीपे पर्षद्विमानं कर्तुमशक्तश्चेत्, तस्मिन् प्रारभ्यान्तरे तद्बाह्ये वा भूमिशुद्धिं विना प्रसादप्रतिमां कृत्वा प्रतिष्ठाप्यार्चने कृते तस्य मूलस्थानार्चनाफलमचिरादेव सिध्यतीत्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते कर्षणादिपुनः-
संस्कारविधिर्नाम त्रिषष्टितमः पटलः ॥

अथ चतुःषष्टितमः पटलः ।

अथ ध्रुवबेराणां संस्कारप्रायश्चित्तं वक्ष्ये । प्रमाणहीनं बेरमज्ञानात् स्थापितं चेद् राजराष्ट्रविनाशाय भवति । तद्दोषशमनार्थाय महाशान्तिं हुत्वा तद् विमानं तद् बेरं विधिवत् स्थापयेत् ॥

बेरार्थे दारुग्रहणक्रियाहीने कल्पनाविपर्यासे च ब्राह्मं वैष्णवं रौद्रं व्याहृत्यन्तं हुत्वा विधिवत् कारयेत् । शूलानां प्रत्येकं तत्तदुक्तमानादित्रिचतुष्पञ्चषड्यवमात्रहीनं चेत् ताम्रेण रज्जुना वा सम्पूर्य वैष्णवं पुरुषसूक्तं दद्भ्यःस्वाहाद्यङ्गहोमं हुत्वा पुनरारभेत् ॥

स्नेहद्रव्यचूर्णकषायद्रव्यौषधिहीने प्रयोगविपर्यासेऽष्टबन्धनमृदा-
लेपनपटाच्छादनाभरणादीनि क्रमहीने विपर्यासे वर्णव्यतिक्रमणे वै-
ष्णवं ब्राह्मं रौद्रमैन्द्रमाग्नेयं महाभूतदैवत्यं .... .... .... .... ....
व्याहृत्यन्तं हुत्वा यथाविधि यथाक्रमेण कारयेत् । मृण्मयं महाबेरं
मध्यचित्रं न कुर्वीत । तथा सौवर्णं राजतं ताम्रजं च कुर्याच्चेदाभि-
चारिकं भवति । तद् बेरं शीघ्रं परित्यज्य शान्तिहोमं हुत्वा विधिवत्
कारयेत् ॥

शैलजं दारवं रत्नजमर्धचित्रं वा कारयेत् । बेरेऽनुक्तवर्णानुले-
पने कृत्रिमवर्णैर्निर्यासाद्भिः प्रक्षाल्य पञ्चाग्नौ वैष्णवं विष्णुसूक्तं पुरुष-
सूक्तं जयाद्यैर्हुत्वा पश्चादुक्तवर्णाँल्लेपयेत् । इष्टकाकल्पितं सुधया कृत्वा
ध्रुवबेरं नपुंसकशिलया कृतं स्त्रीपुंशिलया विपर्यासकृतमायसपाषाण-
चूर्णं लशुनहिङ्गुकतैलाद्यैः संयुक्तं बेरं पक्वं मृण्मयं शूलोपरि रज्जुब-
न्धनमृदालेपनघटिशर्करालेपनपटाच्छादनादिहीनेऽज्ञानादर्थलोभाद्वा
स्थापितं चेदाभिचारिकं भवति । तच्छीघ्रमपहाय पञ्चाग्नौ वैष्णवं वि-
ष्णुसूक्तं श्रीभूमिदैवत्यं यद्देवादीन् ब्राह्मं रौद्रमैन्द्रमाग्नेयं वारुणं सर्व-
दैवत्यं हुत्वा चेतन्महाशान्तिः सर्वदोषोपशमनं भवति । पश्चात् तद्
बेरं विधिवत् संस्कृत्य विधिना स्थापयेत् । कौतुकादिबिम्बेष्वायसक-
पित्तललोहाद्यनुक्तद्रव्यैर्मिश्रीकृतं प्रतिमां कृत्वाऽज्ञानात् स्थापितं चेत्
तदाभिचारिकं भवति । तद्दोषशमनार्थं महाशान्तिं हुत्वा सलक्षणं
बेरं कृत्वा विधिना स्थापयेत् । स्थानकासनशयनानां कौतुकं स्थान-
कमासनं वा शयानं नैव कारयेत् । दैविके चार्षे क्षेत्रे पौराणिके
यथापूर्वं तथाचरेत् । अन्यथा महत्तरो दोषो भवति । कौतुकादिषु
बेरे निर्दोषेऽर्च्यमाने लोहगौरवसंवेशं नैव कारयेत् । अन्यथा यजमा-
नविनाशो भवति । अर्च्यमानेषु कौतुकादिषु विवर्णरूपे विवर्णे शर्क-
राद्यैर्युक्ते तच्छक्तिं महाबेरे समारोप्य विकृतबिम्बशुद्धिं कृत्वा पुनः
स्थापनमाचरेत् ॥

अभ्यर्च्य परिस्तीर्याज्येन चरुणा वैष्णवं धात्रादिपद्दैवत्यं
दौवारिकमन्त्रं च हुत्वा मार्जनोपलेपननिर्माल्यशोधने हीने वैष्णवं

वारुणं वायव्यं वैष्वक्सेनं च हुत्वा देवेशस्य स्नानहीने वैष्णवं वारुणं हुत्वापोहिष्ठामयाद्यैरभ्युक्षणं मन्त्रस्नानं वा कृत्वा ध्रुवबेरस्य पुष्पन्यासं हित्वा कौतुकस्यार्चने कृते वैष्णवं विष्णुसूक्तं जुहुयात् । तथैव पुष्पन्यासं कारयेत् ॥

यात्रादिपर्षदेवार्चनाहीने वैष्णवं शतशो जुहुयात् । पुनरर्चयेत् । एककालार्चनाहीने वैष्णवं विष्णुसूक्तं हुत्वा द्विगुणमर्चयेत् । द्विकाले द्विगुणं त्रिकाले त्रिगुणमेकाहार्चनाहीने वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं हुत्वा द्व्यहे द्विगुणं त्र्यहे त्रिगुणमेवं द्वादशाहान्तं वर्धयेत् । द्वादशाहातीते चौपासनाग्निमाधाय वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं हुत्वा देवेशमष्टचत्वारिंशत्कलशैर्देवं संस्नाप्याभ्यर्च्य निवेदयेत् । मासातीते यदि भवेदालयाभिमुखे सभ्याग्निमासाद्य वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं सर्वदैवत्यं च हुत्वा देवेशं शताष्टकलशैः संस्नाप्य प्रभूतं च निवेदयेत् । एवं मासे प्रकुर्वीत । द्विमासे द्विगुणं त्रिमासे त्रिगुणमेवं संवत्सरान्तं वर्धयेत् । संवत्सरेऽतीते पञ्चाग्नौ महाशान्तिं सकृद्धुत्वा वैष्णवान् ब्राह्मणांश्च भोजयित्वा देवेशं प्रतिष्ठाकलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत् । अस्य पुनः प्रतिष्ठायामक्ष्युन्मेषाधिवासौ हित्वान्यत् सर्वं पूर्ववत् समाचरेत् । एककाले हविर्निवेदने हीने वैष्णवं श्रीभूमिदैवत्यं हुत्वा द्विगुणं निवेदयेत् । द्विकाले द्विगुणं त्रिकाले त्रिगुणं निवेद्य पश्चान्मूर्त्तिहोमविहीने वैष्णवं शतशो हुत्वाष्टकलशैः संस्नाप्य यथोक्तहीनं द्विगुणं हुत्वाग्निं संरक्षयेत् । अशक्तश्चेच्चुल्ल्यामग्निं समिध्यारोपयेत् । अथवा स्वात्मन्यारोप्य लौकिकाग्नावुपावरोहेयोवा गविष्ठ इत्यहरहर्जुहोति । सोपदंशं हविरप्रत्यक्षमपक्वं शीतं पर्युषितं स्थालिशेषयुतं पात्रान्तरगतं लङ्घितं विसृतमन्त्यजातिदर्शितमग्न्यादिगर्हितं निवेदितं चेत् त्यक्त्वा वैष्णवं श्रीभूमिदैवत्यमाग्नेयं वारुणं वायव्यं दशशो हुत्वा पुनर्देवं निवेदयेत् । अशुचिना स्पृष्टे निवेद्यं चेत् तत् त्यक्त्वा देवमानयेत् (१) । कौतुकादिस्वादि नृपादिभिर्वापहृतं चेत् तद्देशं शुद्धिं कृत्वा शान्तिहोमं हुत्वा तस्मिन् रत्नं सुवर्णं कूर्चं वा संन्यस्य ध्रुवे वार्कमण्डले वा देवमावाह्य नित्यं समभ्यर्च्य

पूर्वद्रव्येणोत्कृष्टद्रव्येण पूर्ववत् प्रमाणेनोत्कृष्टप्रमाणेन वा बेरं सलक्षणं कृत्वा कान्तावेक्षणं पूर्ववत् प्रतिष्ठापयेत् । देव्योर्विना देवस्य बिम्बमपहृतं चेत् पूर्वद्रव्येण पूर्वप्रमाणेन बेरं कृत्वा प्रतिष्ठाप्य विवाहक्रियां नैव कारयेत् । देव्योर्बिम्बमपहृतं चेत् तथैव कृत्वा विवाहक्रियां च कारयेदित्येके ॥

मधूच्छिष्टक्रियाहीने विपर्यासे च वैष्णवं ब्राह्मं रौद्रं सौरमाग्नेयं व्याहृत्यन्तं हुत्वा पुनःसंस्कारं कारयेत् । कौतुकादिपीठसङ्घाते ध्रुवस्थापने च दक्षिणावनते मृत्युः पश्चिमेऽर्थहानिरुत्तरे वृद्धिहानिः पूर्वे द्रव्यहानिस्तिर्यग्गते चाग्नेयादिकोणेषु चैवं क्रमेण फलानि भवन्ति । तच्छिरःकुक्षिच्छिद्रे मनःक्षयं बेरोऽतिकृशं क्षयरोगाय भवति । स्थूले महाव्याधिर्ह्रस्वेऽप्यनायुष्यादि दीर्घे त्वनावृष्टिर्भवत्यन्याङ्गेषु सर्वहानिस्तस्मात् सर्वप्रयत्नेन बेरं सलक्षणं सुन्दरं कृत्वा विधिना संस्थापयेत् । ध्रुवस्थापनादिमहाप्रतिष्ठायाः पूर्वमनुक्तदोषप्रायश्चित्तं कापिलेन घृतेन पञ्चाग्नौ विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं व्याहृत्यन्तं यजेत् । सर्वदोषस्य शान्तिर्भवति ॥

इति श्रीवैखानसे मरीचिप्रोक्ते तद्ध्रुवबेरादिसंस्कार-
प्रायश्चित्तविधिर्नाम चतुःषष्टितमः पटलः ॥

## अथ पञ्चषष्टितमः पटलः ।

अथ पात्रपरिच्छदाद्याभरणादीनां दोषदुष्टं चेत् तत्तत्स्थाने संयोज्य सन्धानं कृत्वा प्रोक्षणैः प्रोक्ष्याहरेत् । अयोग्यश्चेत् तद् द्रव्यं विसृज्य पचनालयेऽग्निकुण्डेऽग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं तदधिदैवत्यं जुहुयात् । निर्दोषानाहृत्य पूर्वोक्तेन मन्त्रेण संस्कारहोमं हुत्वा तद् देवेशाय दद्यात् । तत्तत्संस्कारहीने दोषदुष्टद्रव्येण कृतं कार्यं सर्वं निष्फलं भवति । तस्मात् सर्वप्रयत्नेन निर्दोषोक्तप्रमाणेन संयुक्तं सर्वसंस्कारं कृत्वैवाहरेत् ॥

प्रतिष्ठाप्रायश्चित्तं वक्ष्ये । अङ्कुरार्पणकाले ब्रह्मसोमादिदिग्देवानामर्चनाहीने हविर्हीने च तत्तद्दैवत्यं वैष्णवं हुत्वा पुनरभ्यर्च्य

निवेदयेत्। अन्यस्मिन् सर्वदोषेषु वैष्णवं ब्राह्मं सौम्यं चान्यदेवतानां तत्तद्दैवत्यं च हुत्वाचरेत्। अङ्कुरार्पणहीने चाभिचारिकं भवति। तस्मात् सर्वकर्मणामङ्कुरार्पणं कृत्वाचरेत्। अज्ञानादर्थलोभादकृत्वा कर्म समाचरेद् यदि, विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं वैष्णवं ब्राह्मं सौम्यं व्याहृत्यन्तं हुत्वाऽङ्कुरार्पणोक्तदेवानां मूर्तिमन्त्रैश्च जुहुयात्। कालापेक्षा न पुनरप्यङ्कुरार्पणं कृत्वा कर्माचरेदिति। देवस्य यानि कर्माणि अङ्कुरार्पणे कृते तानि सर्वाणि निष्ठतानि सर्वाणि निर्वितान्तं समाचरति। अक्षिमोचनात् पूर्वं पीठसङ्घातकाले रत्नानामलाभे सुवर्णं निक्षिप्य वैष्णवं विष्णुसूक्तं जुहुयात्॥

अक्षिमोचनहीने चार्कराहुसौराणामुदये चैकनेत्रेऽर्धे वाक्षिमोचने कृते सर्वं नाशाय भवति। तद्दोषशमनार्थं वैष्णवं विष्णुसूक्तं पुरुषसूक्तमेकाक्षरादिनवग्रहदैवत्यं हुत्वा पुनरक्षिमोचनं कारयेत्। गवादिदर्शनद्रव्यहीने गोदानसूक्तं तद्द्रव्याधिदैवत्यं वैष्णवं च हुत्वा तत्तद् द्रव्यं विधिवद् दर्शयेत्। अधिवासपञ्चगव्याधिवासहीने वैष्णवं रुद्रदैवत्यं क्षीराधिवासे वैष्णवमाथर्वणं च हुत्वा तत्तत् सङ्कल्प्य जलाधिवासनं कारयेत्। अथवा शान्तिं हुत्वैकाहं वाधिवासयेत्। अधिवासनहीने महाशान्तिं हुत्वाधिवासयेत्। अथवा कुम्भोदकैरभिषेचयेत्। यज्ञशालां महावेदिप्रमाणहीने चाधिकेऽनुक्तदेशे वा कृतेऽलङ्कारहीने तद्देशाधिपदैवत्यं वैष्णवं विष्णुसूक्तं श्रीदैवत्यं च जुहुयात्। ध्रुवबेरस्याक्षिमोचनान्ते बेरशुद्धिक्रियाहीने विपरीते च वैष्णवं विष्णुसूक्तं पुरुषसूक्तं रौद्रमारुपं वारुणं च हुत्वाचरेत्। यथोक्तेऽग्निकुण्डं हीनाधिकेन माने तत्कृतश्चेद् ब्राह्मं सौम्यमाग्नेयं जुहुयात्। परिस्तरणकूर्चपरिधिसमित्प्रणिध्याज्यपात्रस्रुवादीनां प्रमाणहीने न्यूनेऽपि मिन्दाहुतीसावित्रीं व्याहृत्यन्तं जुहुयात्। उत्तरतः स्थानेऽग्नीन् परिकल्प्य प्रोक्षणोल्लेखनं कृत्वा मथितालाभे वैष्णवं भूमिदैवत्यमाग्नेयं व्याहृत्यन्तं हुत्वाचार्यागारादन्यश्रोत्रियागाराद् वाग्निमाहृत्य गार्हपत्याग्निकुण्डे निधायाघारं हुत्वाघारान्ते तमग्निं वर्धयित्वान्वाहार्याग्निकुण्डेऽग्निं प्रणीय पश्चादाहवनीये

तत्पश्चादावसथ्ये तत्पश्चात् सभ्ये च पश्चादब्जाग्नौ चाग्निं प्रणीय तं कृत्वा विपरीते तत्तन्मन्त्रे हीने वैष्णवमाग्नेयं ब्राह्मं सौम्यं च हुत्वा तण्डुलैरेकजातीयैर्द्विप्रस्थैः पक्वैश्चरुं नवनीतं गव्यं लौकिकाग्नौ पक्वमाज्यमेतौ पुनस्तद्धोमे समन्त्रकं संस्कृत्य जुहुयात् । आज्यचरौ च माक्षिककृमिरोमपिपीलिकादिपतने तद् व्यपोह्य हव्यमाहृत्य प्राजापत्यमाग्नेयं ब्राह्मं वैष्णवं जुहुयात् । अन्यालाभे तद्दोषमपोह्य दर्भैरुत्पूयोद्दीप्य पूर्ववत् प्रायश्चित्तं हुत्वा पुनरुत्पूयाहरेत् । आघारे कृतेऽग्न्यनुगते अयं ते योनिरिति समिधौ तद् भस्म समारोप्य तस्मिन् लौकिकाग्नौ निधाय समिधाग्निं विनिक्षिप्योज्ज्वाल्य परिषिच्य मिन्दाहुती विच्छिन्नं वैष्णवं व्याहृत्यन्तं यजेत् । परिस्तरणादिसम्भारेषु परिधीनूर्ध्वसमिधौ चाग्निदाहे च्छेदे भेदे विच्छिन्ने नाशे पुनस्तत्तत् प्रयुञ्जीत । महाव्याहृतिमाग्नेयं वैष्णवं हुत्वा विशेषेऽनुक्ते सर्वत्र स्रुवेण होतव्यहविर्विशेषेऽनुक्ते तदाज्येनाज्यालाभे चाज्यचरुणा होममाचरेत् । उक्तद्रव्यालाभे कापिलेन घृतेन वैष्णवं विंशतिर्यजेत् । प्रायश्चित्ते होमाग्निकुण्डेऽनुक्तेन नित्याग्निकुण्डे चुल्ल्यां वाग्निं परिषिच्य प्रायश्चित्तं जुहुयात् । रत्नादि पूर्ववत् वस्त्राणां लक्षणे हीने दोषच्छेदादियुते तं त्यक्त्वान्यत् प्रयुक्तश्रीमन्त्रं वैष्णवं यजेत् । अण्डलाजिनलाभे प्रत्येकं वस्त्रमाहृत्य वैष्णवं श्रीभूमिदैवत्यं जुहुयात् । तोरणानां प्रमाणहीने न्यूने च पृथक् पृथग् द्वाराधिपदैवत्यं विंशतिर्यजेत् । दर्भमालाहीने त्वार्षं वैष्णवं जुहुयात् । कुम्भस्य प्रमाणहीने खण्डस्फुटितकालादियुते तन्तुवस्त्रयुग्मविहीने च रत्नगजताक्ष्यायुधाष्टसुवर्णचिह्नादिकुम्भप्रक्षेपणार्थसौवर्णादिहीने तस्मिन् देवे.......... । तस्माद् यत्नेन प्रक्षिपेत् । तेषां यथोक्तालाभे प्रत्येकं सुवर्णशकलं वा निक्षिप्य पुरुषसूक्तं वैष्णवं ब्राह्मं त्रयस्त्रिंशन्मुनिमन्त्रं विंशतिराग्नेयं दशकृत्वो जुहुयात् । कुम्भे साधिते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं त्रिंशदाग्नेयमार्षं त्रिंशद् पर्यायतो जुहोति । अन्यत् कुम्भं सङ्गृह्य पूर्ववत् साधयेत् । साधिते कुम्भे च कुक्कुटकाकाद्यस्पृश्यस्पृष्टे तद् व्यपोह्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं सौरमाग्नेयमब्जाग्नौ प्रत्येकं शताष्टकं हुत्वान्यं कुम्भं सङ्गृह्य पूर्ववत् साधयेत् । अस्पृश्य-

स्पर्शने बिम्बे स्नपनोक्तक्रमेण स्नपनं कृत्वा पूर्ववत् प्रायश्चित्तं हुत्वा, श्वकुक्कुटाद्यैर्होमे स्पृष्टे तत् संशोध्य पूर्ववत् कुण्डं कृत्वाघारं हुत्वाग्नेयं वैष्णवं वारुणं मूले होमं शतशो जुहुयात् । स्रुवादीनामलाभे तद्रूपं ध्यात्वा स्रुवेणैवं कुर्यात् । वैष्णवं ब्राह्मं सौरमाग्नेयं जुहुयात् । आजमाहिषदधिक्षीराज्यं गृहीतं चेद् वैष्णवं ब्राह्ममाग्नेयं सौरं हुत्वा व्याहृत्यन्तं पृथक् पृथग् यजेत् । अग्निकुण्डार्थं सिकतमृदौ चाशुभे देशे समाहृतं चेद् वारुणं वैष्णवं हुत्वा, इन्धने सधूमजन्तुकण्टकोपयुतेऽग्नौ प्रक्षिपेच्चेत्, तत् त्यक्त्वान्यं प्रक्षिप्याग्नेयं वैष्णवं व्याहृतीर्जुहुयात् । वस्त्रादिद्रव्येषु प्रपायां वान्यस्मिन् देवार्थं कल्पितेष्वग्निना दग्धे वैष्णवं ब्राह्मं सौरमाग्नेयं व्याहृत्यन्तं दशकृत्वो जुहोति । कौतुकादिबेराणां चतुर्दशकलशविन्यासविपर्यासे वैष्णवं पक्षीशदैवत्यं हुत्वा स्नानकाले बेरविपर्यासे पञ्चवारुणं वैष्णवं, शयनस्थानविपर्यासे वैष्णवं श्रीभूमिदैवत्यं प्रत्येकं दशपर्यायतो जुहोति । हौत्रशंसने विपरीते ब्राह्मं हुत्वा पर्षद्देवानामावाहनजुष्टाकारस्वाहाकारार्चनाविहीने च वैष्णवं विष्णुसूक्तं ब्राह्मं रौद्रं त्रयस्त्रिंशद्धुत्वा सर्वेषां होमानां यथोक्तविपर्यासे हीने च वैष्णवं विष्णुसूक्तं च सकृद्धुत्वा यथोक्ते जुहुयात् । शयनस्थं देवं प्रमादाद्धुतं चेत्, श्रीदैवत्यं च हुत्वा यजेत् । तथैव शाययेत् । अध्ययनहीने सारस्वतमष्टाधिकशतं .... .... .... मोचनहोमौ द्वौ वास्तुहोमस्यैकं पञ्चाग्नीनां पञ्चपौण्डरीकाग्नेरेकं ब्राह्मस्य ऋत्विजौ द्वौ स्नपने चैकं वास्तुदेवार्चनस्यैकं स्थापनार्थं द्वौ चैते षोडश ऋत्विजा भवन्ति । एतेषामलाभे यथालाभं सङ्गृह्य तन्त्रयित्वा कुर्यात् । कुण्डानां लक्षणं चाख्यामाघारविशेषं तत्तल्लोकाधिदैवत्यं जातवेदस्स्वरूपं ब्राह्मासनस्य लक्षणं होमद्रव्ययुक्तमृषिच्छन्दोदैवतं सङ्ख्यासमायुक्तमाहुतीप्रथमावारं प्रयोगं सर्वं संस्मृत्य विधिना कारयेत् । प्रतिष्ठोत्सवस्नपनोत्सवादीनि देवस्य नैमित्तिककार्येषु पुरश्चरणप्रदानादूर्ध्वं तत्कर्मवशात् पूर्वमाचार्यस्य ऋत्विजादीनामाशौचं न लिप्य तद्दोषाय वैगुण्यं न स्यात् । आचार्यस्थापकादीनि ऋत्विजो यजमानश्च भवेत्यद्धसनं हसनं शपनं वा कृते वैष्णवं विष्णुसूक्तं ब्राह्ममारिषं सारस्वतं यजित्वा तदनुज्ञाप्य कार्य-

मारभेत् । आचार्यादिभ्यो दक्षिणाकालातीते वैष्णवं मुनिमन्त्रमष्टोत्तरशतं यजित्वा यथोक्तदक्षिणां दत्वाल्पदक्षिणो यागो यजमानं दहति । यज्ञं सदक्षिणं फलायत्तम् । तस्माद् यज्ञस्य दक्षिणा जीवो भवेत् । कौतुकादिपीठे रत्नादीनामलाभे रत्नं सुवर्णं वा निक्षिप्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वायव्यमग्निदैवत्यं हुत्वा सभ्याग्नौ शेषहोमे हीने वैष्णवमाग्नेयं दशशो हुत्वा नित्याग्निकुण्डे सभ्याग्निस्थापनाहीने पूर्ववत् प्रायश्चित्तं हुत्वा श्रोत्रियागारतोऽग्निं निधायाघारं हुत्वा नित्यहोमं निशा चरेत् ॥

कौतुकादिभ्यो ध्रुवबेराद् दीपाद् दीपमिवावाहयेत् । अज्ञानात् तत्कुम्भजलेन तेषामावाहने कृते महत्तरो दोषो भवति । ततः शीघ्रं शुद्धोदकेन इषेत्वोर्जेत्वादिना संस्नाप्य देवमनुमान्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा पूर्ववद् ध्रुवबेरादावाहयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते प्रतिष्ठाप्रायश्चित्तविधिर्नाम
पञ्चषष्टितमः पटलः ॥

## अथ षट्षष्टितमः पटलः ।

अथ नित्यार्चनाप्रायश्चित्तम् । प्रातरादित्योदयान्मध्याह्ने मध्याह्नादस्तमये च कवाटोद्घाटने हीने शीघ्रमुद्घाटनं कृत्वा नित्याग्नौ चुल्ल्यां वा संस्नाप्य वैष्णवं मन्त्रं त्रिशद्धुत्वा द्विगुणं निवेदयति । शर्करागारव्रीहितुषाङ्गारयुतं चेद् वैष्णवं रौद्रं वायव्यं व्याहृत्यन्तं हुत्वा पश्चान्निवेदयेत् । माक्षिककेशवल्मीककृमिकूटपतङ्गान्यनेकशावैः सम्भवे देवं संस्नाप्य वैष्णवं विष्णुगायत्रीं श्रीभूमिदैवत्यमष्टोत्तरशतं हुत्वा तद्द्विगुणं निवेदयेत् । प्रातरर्चनामेवमर्कोदयात् पूर्वं पक्वं हविरुपदंशं सोष्णं चादित्यास्तमयात् पश्चाद् देवस्य सार्चनं कृत्वा तद्धविर्निवेदयति । ताम्बूलमुपसङ्कृतसलेपकेशार्पितजन्तुस्पृष्टं निवेदयेच्चेद् वैष्णवं श्रीभूमिदैवत्यं च हुत्वा पुनस्ताम्बूलं निवेदयेत् ॥

अथ बलिप्रायश्चित्तम् । सुरर्षिमनुष्याणां यस्माद् बलं विवर्धते, तस्माद् बलिरिति ख्यातम् । तदर्थं देवेशं निवेद्य तं त्रिकाले-

पूक्तद्रव्येष्वाबाह्याभ्यर्च्य बलिभूषणं कारयेत् । एवं कर्तुमशक्यत्वात् तस्मादुक्ते पात्रे केवलं बलिद्रव्यं निक्षिप्य तस्योपरि यथोक्तं बलिबेरं संन्यस्य शिरसा धारयेत् । त्रिकालं द्विकालं वा देवालयं प्रदक्षिणं कारयेत् । बलिद्रव्यं विना शिबिकादियाने गजे वारोप्य देवालयं प्रदक्षिणं कारयेत् । त्रिकालं बलिभ्रमणे हीने वैष्णवं सौरं सौमं प्राजापत्यं हुत्वोक्तप्रदक्षिणे हीनेऽधिके च वैष्णवं गारुडं हुत्वा मध्याह्ने हीने सायं त्रिगुणमेकाहे हीने नित्याग्नौ चुल्ल्यां वाग्निं परिस्तीर्य वैष्णवं विष्णुसूक्तं तत्तद्दैवत्यं हुत्वा विधिना प्रदक्षिणं कारयेत् । देवस्यालङ्कारहीने श्रीदैवत्यं चित्रपिञ्छाद्यलाभे वारुणं चामराद्यलाभे दीपहीने चाग्नेयं वैष्णवं च प्रत्येकं व्याहृत्यन्तं हुत्वा द्व्यहे त्र्यहे त्र्यहे त्रिगुणमेवं द्वादशाहान्तं वर्धयेत् । द्वादशाहातीते चौपासनाग्निमाधाय वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं दिग्दैवत्यं हुत्वा पूर्ववद् बलिभ्रमणं कारयेत् । मासहीने यदि भवेत्, पौण्डरीकाग्निमाधाय वैष्णवं विष्णुसूक्तं पारमात्मिकमोङ्कारादितदालयगतपर्षद्दैवत्यं हुत्वा तथैव बलिभ्रमणं कारयेत् । द्विमासे द्विगुणं त्रिमासे त्रिगुणमेवं संवत्सरान्तं वर्धयेत् । संवत्सरातीते देवालयाभिमुखे दक्षिणे वा सभ्याग्निं संसाध्य तस्मिन् वैष्णवं विष्णुसूक्तं श्रीभूमिदैवत्यं सर्वदैवत्यं सकृद्धुत्वाचार्यदक्षिणां दत्त्वा बल्युद्धरणं कारयेत् । अग्नवलौ भूमौ पतिते भिन्ने शीर्णे पूर्ववद् बलिमापाद्य वैष्णवं गारुडं प्राजापत्यं हुत्वा प्रदक्षिणं कारयति । बल्युद्धरणकाले येनकेनचिद् विघ्नं चेत् सौरं सौम्यं वैष्णवं हुत्वा पुनरारभेत् । हविःपात्रं समादाय वैष्णवं हुत्वा प्रमाणहीनमग्नवलौ वैष्णवं प्राजापत्यं हुत्वा दोषदुष्टे पात्रे हविर्निवेदनप्रायश्चित्तोक्तमेव कारयेत् ॥

अथ स्नपनप्रायश्चित्तम् । स्नपनं त्रिविधम् । नित्यं नैमित्तिकं काम्यं चेति । अयनद्वये विषुवे स्नपनमेतन्नित्यम् । चन्द्रस्य सूर्यस्य वा राहुग्रहणेन यत् स्नपनं (तत्) नैमित्तिकम् । शेषाणां यत् स्नपनं, तत् काम्यम् । नित्यस्नपनविहीने वैष्णवं पुरुषसूक्तं वारुणं दशशो हुत्वा शुद्धोदकैर्वाभिषेचयेत् । आलयाभिमुखे चोत्तरे वा स्नपनस्थानमुत्तमम् । ऐशान्ये मध्यमम् । दक्षिणपश्चिमयोराग्नेयादिकोणेषु स्नपनं चेद्

वैष्णवं विष्णुसूक्तं वारुणं तत्तद्दैवत्यं हुत्वा पुनः स्नपनं कारयति। तत्सन्ध्याकाले नैमित्तिके स्नपने प्राप्ते नैमित्तिकं समाप्य पश्चान्नित्यपूजां समाचरेत्। पूर्वरात्रौ प्रतिसरबन्धनशयनहीने वैष्णवं श्रीभूमिदेवत्यं सौदर्शनं हुत्वा तत्कालात् पूर्वं शयनाधिवासनं कृत्वा सद्यः प्रतिसरबन्धनं कारयेत्। एकबेरेऽपि शयनं विना प्रतिसरबन्धनं सद्य एव कारयेत्। अङ्कुरार्पणे कृते स्नपनहीने वैष्णवं सौम्यं श्रीदैवत्यं वैघ्नं हुत्वा पुनः स्नपनं कारयेत्। स्नानश्वभ्रौ पङ्क्तौ वा प्रमाणहीनेऽधिके वैष्णवं श्रीभूमिदैवत्यं पङ्क्तीशदेवमन्त्रं विष्णुविष्वक्सेनार्चनाहीने वैष्वक्सेनं वैष्णवं पङ्क्तीशस्यार्चनाहीने तत्तन्मन्त्रं वैष्णवं यजेत्। कलशानां प्रमाणहीनेऽधिके वैष्णवं वायव्यमाग्नेयं हुत्वा सूत्रहीने वैष्णवं महीदैवत्यं पर्वतानां तत्तद्गुणे प्रमाणहीने वैष्णवमाग्नेयं सन्यान्येषु वैष्णवं वायव्यमङ्कुरे हीने गारुडं व्याहृतीर्हुत्वा पञ्चगव्यक्रमहीने वैष्णवं रौद्रं हुत्वा ................मन्त्रहीने वैष्णवं रौद्रं हुत्वा पञ्चगव्यादिद्वादशद्रव्येषूक्तपरिमाणे हीने तत्तदधिदैवत्यं वैष्णवं हुत्वा द्रव्याणां सङ्करे विपर्यासे तत्तदधिदेवार्चनाहीने मन्त्राणां सङ्कुले हीने च नित्याग्नावष्टोत्तरशतं वैष्णवं यजेत्। पुण्यपुष्पाद्यनुद्रव्यालाभे यथालाभं सङ्गृह्य तत्तदधिदैवत्यं च वैष्णवं हुत्वा साधिते कलशे भिन्ने चान्यकलशमादाय तथैवापूर्याभ्यर्च्य वैष्णवं दशशो हुत्वा विपर्यासो घृतद्रव्ये स्नापयेत्। वैष्णवं तत्तद्द्रव्याधिदैवत्यं हुत्वा द्रव्यं संसाध्य शुद्धोदकं वा स्नापयेत्। कलशन्यासे कृते श्वकाकाद्यस्पृश्यस्पर्शेऽन्यं कलशमादाय पूर्ववत् संसाध्य शान्ति वैष्णवं हुत्वा यथोक्तद्रव्येषु क्रिमिकीटादिपतने तं त्यक्त्वान्यद्रव्यं सङ्गृह्य वैष्णवं द्रव्याधिदैवत्यं हुत्वा द्रव्याणामलाभे वैष्णवं हुत्वा सुवर्णनिक्षेपे उक्तद्वादशवस्त्रालाभे वैष्णवं श्रीभूमिदैवत्यं हुत्वा चत्वारो वाच्छाद्य भक्त्यैव स्नपनं कारयेत्॥

अथोत्सवप्रायश्चित्तम्। ध्वजारोहणहीने चोत्सवे कृते तदुत्सवं निष्फलं भवति। तस्मात् सर्वप्रयत्नेन ध्वजारोहणं कृत्वोत्सवं कारयेत्। उक्तमासे चोक्तनक्षत्रेऽवभृथं सङ्कल्प्य ध्वजारोहणं कृत्वाज्ञानादर्थलोभाद्वा येनकेनचिदुत्सवं कुर्याच्चेद् द्वितीयमासे तद्दिनेऽवभृथं

कर्मतीर्थात् पूर्वतीर्थात् पूर्वे तीर्थमङ्कुरार्थं मृद्ग्रहणं कृत्वोत्सवमारभेत् । अस्य प्रायश्चित्तं चरेत् । वैष्णवं विष्णुसूक्तं ध्वजं गारुडं वैष्वक्सेनं सौदर्शनं प्रतिदिनोत्सवाधिपदैवत्यं व्याहृत्यन्तं सकृद्धुत्वा वैष्णवान् सम्पूज्योत्सवं कारयेत् । अस्योत्सवस्यावभृथं नक्षत्रतिथिवारदैवत्यं तद्दिनोत्सवाधिपदैवत्यं च हुत्वा ब्राह्मणान् भोजयेत् । ध्वजारोहणकाले तु ध्वजं गरुडप्रतिष्ठाहीने वैष्णवं विष्णुसूक्तं ध्वजं गारुडं दशशो हुत्वा पुनः प्रतिष्ठां कारयेत् । तस्मिन् काले ध्वजदेवं चक्रं विष्वक्सेनं तद्दिनेशार्चनाहीने वैष्णवं तद्दैवत्यं हुत्वा पुनरभ्यर्च्य निवेदयेत् ॥

भेरीताडने हीने रौद्रं व्याहृत्यन्तं महाहुतीर्हुत्वा भेरीताडनं कारयेत् । ध्वजारोहणे कृते पश्चाद् गरुडस्य निवेदने हीने वैष्णवं ध्वजं गारुडं सकृद्धुत्वा द्विगुणं निवेदयेत् । तस्य मुद्गान्ननिवेदन हीने रौद्रं वैष्णवं ध्वजं गारुडं हुत्वा यत्नेन मौद्गिकान्नं निवेदयेत् । ध्वजे चोराद्यपहृते वातातपभिन्ने शीर्णे नष्टेऽशनिपाते वा वैष्णवं वायव्यमाग्नेयं गारुडं ध्वजं हुत्वा पूर्ववद् ध्वजमाहृत्यालयं प्रदक्षिणीकृत्य पूर्ववद् ध्वजमारोहयेत् । ध्वजगरुडस्याकाशचारित्वात् तस्य वर्षातिबाधा न दोषाय भवतीत्येके । कालोत्सवे चोक्तमासहीनेऽन्यमासे तद्दिनेऽवभृथं सङ्कल्प्योत्सवं कारयेत् । अस्य प्रायश्चित्ते वैष्णवं विष्णुसूक्तं ध्वजं गारुडं दशशो हुत्वा वैष्णवान् सम्पूज्याचार्यदक्षिणां दापयेत् ॥

उत्सवादौ स्नपने हीनं वैष्णवं वारुणं हुत्वा शुद्धोदकैराभिषेचयेत् । उत्सवार्थप्रतिसरबन्धने हीने वैष्णवं वैष्वक्सेनं गारुडं सौदर्शनं हुत्वा पुनस्तथैव बध्नीयात् । यागशालायां कुम्भवेदीप्रमाणहीनेऽधिके च वैष्णवमाग्नेयं भूमिदैवत्यं तोरणानामलाभे दौवारिकदैवत्यं दर्भमालाविहीने त्वार्षमलङ्कारविहीने श्रीदैवत्यं प्रातःकाले बलिं निर्वापोत्सवे हीने वैष्णवं वैष्वक्सेनं तस्योत्सवाधिदैवत्यं हुत्वा सायं द्विगुणमुत्सवं कारयेत् । सायं हीने वैष्णवं बलिरक्षणदैवत्यं हुत्वा बलिदानं कारयेत् । बलिद्रव्यपात्रे भिन्ने नष्टे भूमौ पतिते पूर्ववत् प्रायश्चित्तं हुत्वा भूतपीठे बलिं क्षिपेत् । देवस्य द्विगुणार्चने हविर्निवेदने हीने वैष्णवं विष्णुसूक्तं वैष्वक्सेनं शान्तिं हुत्वा तच्चतुर्गुणं कारयेत् । यथोक्त-

होमे हीने वैष्णवं विष्णुसूक्तं अर्थाच्चिदुद्धृत्य यथोक्तं जुहुयात् । चक्रवीशामितानां कुम्भदेवानामर्चनहविर्निवेदनहीने वैष्णवं विष्णुसूक्तं वैष्वक्सेनं गारुडं सौदर्शनं सकृदुधृत्वा पुनरभ्यर्च्य निवेदयेत् । देवेऽस्यालङ्कारहीने वैष्णवं श्रीदैवत्यं हुत्वा नृत्तगेयविहीने वैष्णवं रौद्रं स्तोत्रध्वनिहीने ब्राह्मं सारस्वतं भक्तैः परिवृतिहीने वैष्णवं वैष्वक्सेनं अपिच्छाद्यैर्विहीने वैष्णवं सौम्यं चामराद्यैर्हीने वैष्णवं वायव्यं धूपहीने वैष्णवं श्रीदैवत्यं दीपहीने वैष्णवं वायव्यमाग्नेयमास्थाने देवस्य स्नानहीने वैष्णवं त्रिस्रो निवेदने हीने वैष्णवं विष्णुसूक्तं तद्दिनाधिपदैवत्यं हुत्वा पुनरुत्सवं कारयेत् ॥

चक्रवीशामितानां पतने तथैवोद्धृत्य स्नापयित्वा तद्दैवत्यं वैष्णवं हुत्वा भूमौ पतितानामर्घ्यपुष्पलोपे पूर्ववद् बलिमापाद्य वैष्णवं बलिरक्षकदैवत्यं हुत्वा पुनराचरेत् । पतिते बिम्बेऽङ्गहीने पद्माग्नौ महाशान्तिं हुत्वा तच्छक्तिं ध्रुवबेरे समारोप्यार्चयेत् । बेरं स्नापनं बलिबेरं वाऽलङ्कृत्योत्सवं कारयेत् । अङ्गहीनं बेरं पुनःसन्धानविधिना पुनःसन्धानं कृत्वा पुनःप्रतिष्ठां कारयेत् । नदीसमुद्रपार्श्वे पर्वतपार्श्वे वा विमानो यत्रैव दृश्यते, तत्र विस्तीर्णे मृष्टेऽमृष्टे ध्वजारोहणं कृत्वा तस्यालयस्य परितो बलिदानमुत्सवं च कारयेत् । तत्समीपे ग्रामादौ सत्यन्तबलिदानमुत्सवं च कारयेदित्येके । गानं तु न वदेत् । श्रीदैवत्यं वैष्णवं वादित्राणां पतने ब्राह्मं रौद्रमाचार्यादीनां पतने......
.........ध्वजादीनां पतने ध्वजं वायव्यं वारुणं हुत्वा तत्काले कलहे रुधिरस्रावेऽग्निदग्धे च वैष्णवमाग्नेयं ब्राह्मं रौद्रं तद्दिनाधिपदैवत्यं हुत्वा तीर्थादिनात् पूर्वं रात्रौ प्रतिसरशयनौ हीने वैष्णवं श्रीभूमिदैवत्यं सौम्यं तौ समाचरेत् । तीर्थस्नाने कालातीते वैष्णवं वारुणं स्कन्ददैवत्यं हुत्वा ध्वजावरोहणे हीने वैष्णवं गारुडं हुत्वावरोहणं च बलौ हीने वैष्णवं तदालयगतपर्षद्दैवत्यं हुत्वा ध्वजावरोहणादुत्सवान्तस्नपने हीने वैष्णवं विष्णुसूक्तं जयादीनां मूर्त्तिमन्त्रैश्च जुहुयात् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
नित्यार्चनाबलिस्नपनोत्सवविधिप्रायश्चित्तं
नाम षट्षष्टितमः पटलः ॥

## अथ सप्तषष्टितमः पटलः ।

अथातोऽद्भुतशान्तिः । महाबेरे स्वेदरुधिरस्रावरोदनजल्पनहसनचलनधूम्रीकृताद्यैः सत्यालयाभिमुखे पौण्डरीकाग्निं साधयित्वा वैष्णवं विष्णुसूक्तमीङ्कारादीन् हुत्वा देवेशं शताष्टकलशैः संस्नाप्याभ्यर्च्य निवेद्याचमनं दक्षिणां दत्त्वा कृमिकीटवल्मीकतृणाद्युद्भवे पञ्चाग्नौ पूर्ववद्धुत्वा ब्राह्मणभोजनं च कृत्वा देवं बालालये प्रतिष्ठाप्य नवीकरणं कारयेत् । विमानाद्वा देवे पतितेऽशनिपाते महामाक्षिकसमुद्भूते देवेशं शताष्टकलशैः संस्नाप्य विशेषपूजां कृत्वा प्रभूतं निवेद्य पुनःसन्धानं कारयेत् । आकाशे प्रतिसूर्यदर्शने सौरमन्त्रान् वैष्णवं दशशो हुत्वा दिग्दाहे तदाग्नेयं तत्तद्दैवत्यं वैष्णवं तथैव हुत्वा वर्षे वारुणं वैष्णवं त्रयस्त्रिंशद्धुत्वाकाले चन्द्रक्षये पूर्णे प्रतिपद्दर्शने महोत्पाते महाशान्तिं हुत्वा देवेशं विशेषतोऽभ्यर्च्य निवेद्य ब्राह्मणभोजनं च कारयेत् । रक्तस्रीदर्शने आलयाभ्यन्तरे बाह्यबेरप्रदेशे वा तद्देशं संशोध्य वैष्णवं भूदैवत्यं शतशो हुत्वा देवालये चण्डालादिप्रवेशे तथालयं सम्यक् संशोध्य देवेशं संस्नाप्य शान्तिं हुत्वा शावसूताशौचयुक्तैर्वेददूषकपाषण्डैर्दीक्षितैर्देवब्राह्मणगुरुराजनिन्दकैः स्पृष्टे तैः स्पृष्टहविर्निवेदने च देवेशं चतुर्विंशत्कलशैः संस्नाप्य वैष्णवं विष्णुसूक्तं दौवारिकदैवत्यं हविःपालकदैवत्यं च हुत्वा विधिनाभ्यर्च्य द्विगुणं निवेदयेत् । खद्योतघटककाकाद्यैः सरीसृपाद्यैः कृकलासाद्यैरन्तर्गृहे प्रविष्टे सम्मार्ज्योपलिप्य पञ्चगव्यैः समभ्युक्ष्य दौवारिकं वैष्णवं दशशो हुत्वालयाद् बाह्ये प्राकाराभ्यन्तरे सर्वत्र महापातकादिस्पृष्टिलोकशत्रुभिर्वसत्याः सम्भवे सूतिकोदक्याद्यस्पृश्ये प्रविष्टे तत्रोच्छिष्टमूत्रपुरीषविसर्जने च सर्वं संशोध्य मृदा च गोमयेनोपलिप्य सिकताभिर्वा तस्माद् विष्ण्वर्चनमेव कर्तव्यमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
अद्भुतशान्त्यादिप्रायश्चित्तविधिर्नाम
सप्तषष्टितमः पटलः ॥

---

## अथ अष्टषष्टितमः पटलः ।

अथातो नारायणस्य दिव्यभवनं वक्ष्ये । परमात्मनः स्वप्रकाशाद्धैरण्यमण्डमभवत् । तदन्तर्भूतानां सर्वेषामण्डानामुपरि सनातनं नित्यमचिन्त्यं देवैरप्यनभिलक्ष्यं नित्यशुद्धमुक्तस्वभावैः पुरुषैरनुभूयमानं वैष्णवं धाम । तत्र विष्णुलोकाश्चत्वारः । आमोद प्रमोदः सम्मोदो वैकुण्ठमित्येकैकोपरि यथाक्रमेण भवति । तस्मिन् हेममयप्राकारगोपुरतोरणशतसहस्रैः कनककुसुमादिभिरलङ्कृताममृतजलपरिपूर्णवापीभिः सर्वतः प्रभासमाने दिव्यलोके सहस्रादित्यसङ्काशं हेममयं द्वादशतलयुतं नित्यज्ञानक्रियैश्वर्यैर्दिव्यपरिजनैर्युतं मन्दिरम् । तस्मिन् व्योमनिलये परमात्मा स्वयं कल्पिते देवीभूषणायुधैः सहामोदे विष्णुः प्रमोदे महाविष्णुः सम्मोदे सदाविष्णुर्वैकुण्ठे सर्वव्यापी परमात्मा नारायणाद्या आसीना भवेयुः । तमीश्वराणां परमं महेश्वरं तं देवानां परमं च दैवतमिति । यदा यदा प्रजाः सृजेयेति सोऽकामयत, तदा तदा स्वाभिमतानुरूपस्वरूपगुणस्थितशक्त्या स्वलीलयैवेदं प्रपञ्चकार्यं कारणभावेन यथापूर्वं ससर्ज । सर्वेषां जीवानां प्रभोः सिसृक्षोस्तद् ब्रह्मणः स्वेच्छया महाभूतानि सम्भवन्त्यात्मन आकाशः सम्भूत आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योऽन्नमन्नाद् भूतानि जायन्त इत्येकदा प्रलीनकाले भुजङ्गशयने शयितस्य नारायणस्य नाभिकमलाद् ब्रह्माभवत् । भगवदंशाच्चतुर्मुखो जगत् सर्वं सृजतीति विज्ञायते ॥

अथ देहोत्पत्तिः । ओषधीभ्योऽन्नमुपजायते । तदन्नं पुरं प्राप्य व्यतिष्ठत् । तत् त्रिविधं भवति । एकं मूत्रपुरीषमेकं पुरुषाणां शुक्रमेकं स्त्रीणां शोणितमेकं शुक्लशोणितयोः क्षीरे सर्पिरिव सर्वव्यापी मायाशक्तिर्भवति । पुरुषबीजमूलसमन्वितं शुक्लं, स्त्रीकुचमूलसमन्वितं शोणितम् । तौ च संयोगकाले देवयोगेन वायुना गर्भालयं प्रविशति । तत्रैकरात्रोषितं कललं, द्विरात्रोषितं बुद्बुदं, त्रिरात्रोषितं मांसं, चतूरात्रोषितं पेशलं, पञ्चरात्रोषितं घनं, षड्रात्रोषितं पक्ष्मं, सप्तरात्रोषितं बन्धनम्, अष्टरात्रोषितं कुमारं, नवरात्रोषितं यौवनं, दशरात्रोषितमवयवम्, अर्धमासे पिण्डाकृतिर्मासे शरीराकृतिः, मासद्वये

शिरोपादुप्रदेशास्त्रिमासे जठरकटिप्रदेशाश्चतुर्मासे पादद्वयं, पञ्चमासे रोमकूपानि, षष्ठमासेऽस्थिसङ्घातः, सप्तममासे जीवसंकाशोऽष्टममासे प्रचलनं करोति । अत ऊर्ध्वं जायते । स्नायुमज्जास्थिरेतोमयानि त्वक्रक्तमांसानि शोणितमयानीत्येवं षट्कोशविकृतं त्वगुधिरमांसमेदोऽस्थिमज्जाशुक्ल इति क्रमेणैकैकशोऽन्तर्भूत्वा सप्तधातुमयं गात्रम् । शुक्राधिके पुरुषः, शोणिताधिके स्त्री, द्वयोस्तुल्यं नपुंसकं भवति । पुंसो वा स्त्री वा परस्परभावेन स्त्रीपुंसो रेतोगर्भवर्णं इति विज्ञायते ॥

अथातः पृथिव्यादिमहाभूतानां समवायः । शरीरं यद् दृढं सा पृथिवी । यद् द्रवं तदम्भः । यदुष्णं तत् तेजः । यः सञ्चरति, सोऽनिलः । यद् सुषिरं तदाकाशम् । श्रोत्रादीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौ त्वगग्नौ चक्षुरप्सु जिह्वा पृथिव्यां घ्राणमेवेन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धा विषयाः । वाक्पाणिपादपायूपस्थाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः कर्मेन्द्रियाणि । तेषां क्रमेण वचनादानगतिविसर्गानन्दाश्च विषयाः । मनोबुद्ध्यहङ्कारचित्ता इत्यन्तःकरणचतुष्टयाः । तेषां क्रमेण सङ्कल्पविकल्पाध्यवसायानामात्मावबोधनानुस्मृतात्यर्थं मनःसंस्थानं गलान्तरं बुद्धेर्वेदनमहङ्कारस्य हृदयं चित्तस्य नाभिरित्यस्थिचर्मनाडिरोममांसानि च पृथिव्यंशानि । मूत्रश्लेष्मरक्तशुक्लस्वेदान्यपाम् । क्षुत्तृष्णानिद्रालस्यमोहमैथुनान्यग्नेः । प्रचरणविलेखनस्थूलाद्युन्मेषादीनि वायोः । कामक्रोधलोभमोहभयान्याकाशस्य । शब्दस्पर्शरूपरसगन्धाश्चैते पृथिवीगुणाः । तेषु गन्धविहीनाश्चत्वारोऽपां गुणाः । गन्धरसविहीनास्त्रयोऽग्नेः । शब्दः स्पर्श इति द्वौ वायोः । शब्द एवाकाशस्य । सात्त्विकराजसतामसा इति त्रयो गुणाः । अहिंसा सत्यमस्तेयं ब्रह्मचर्यविकल्पनाक्रोधशुश्रूषास्तिक्यार्जवमिति सात्त्विकलक्षणानि । अहं कर्ताहं भोक्ता इत्यभिमानगुणा राजसलक्षणानि । निद्रालस्यतन्द्र्यादीनि तामसलक्षणानि । ऊर्ध्वे सात्त्विकं मध्ये राजसं तिमिरान्धकाराज्ञानं तामसमिति । जाग्रत्स्वप्नसुषुप्तितुर्यमिति चतुर्विधावस्थाः । ज्ञानकर्मेन्द्रियान्तःकरणचतुष्टयचतुर्दशकरणैर्युक्तं जाग्रत् । अन्तःकरणचतुष्टयैरेव संयुक्तं स्वप्नम् । चित्तविहीनान्तःकरणैर्युक्तं सुषुप्तिः । केवलयुक्तं

तुर्यमिति । उन्मीलनिमीलितं जीवमध्यस्थपरमात्मजीवात्मनोर्मध्य-स्थोऽतो जीवात्मा क्षेत्रज्ञ इति विज्ञायते ॥

सोऽपि पञ्चभूतेन्द्रियदेहगुणाहङ्कारचतुष्टया इत्येते पञ्चविंशात्मकः पुरुषः पञ्चविंशात्मको देहः पञ्चविंशात्मकं परमात्मनो देहमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते दिव्यभवनादि-
देहलक्षणविधिर्नाम अष्टषष्टितमः पटलः ॥

---

## अथ एकोनसप्ततितमः पटलः ।

अथातो नाडीचक्रं वक्ष्यते । कन्दोद्भूताः सप्तविंशतिः सहस्रा नाड्यः । तेषु ख्याताश्चतुर्दश । इडा पिङ्गला सुषुम्ना सरस्वती वारुणा पूषा हस्तिजिह्वा यशस्विनी विश्वोदरा कुहूः पयस्विनी शङ्खिन्यलम्बुषा गान्धारीति । आसामादौ तिस्रो मुख्याः । तिसृषु सुषुम्नैव प्रधाना । व्यक्ता वैष्णवी सात्त्विकी मुक्तिमार्गेति विद्वद्भिः कथिता । सा कन्दमध्ये मूर्धान्तं स्थिता । तस्या दक्षिणे भागे दक्षिणनासान्तं स्थिता पिङ्गला । तस्यां भास्करश्चरति । इडा वामभागे वामनासान्तं स्थिता । तस्यां चन्द्रश्चरति । तौ राजसतामसौ विषामृतौ स्याताम् । सुषुम्नायाः पूर्वभागे चोर्ध्वाधोगता मेढ्रान्तं स्थिता कुहूः । अपरे चोर्ध्वभागे जिह्वान्तं स्थिता सरस्वती । पिङ्गलायाः पूर्वभागे चोर्ध्वादधोगता दक्षिणपादान्तं स्थिता यशस्विनी । अपरे दक्षिणनेत्रान्तं स्थिता पूषा । इडायाः पूर्वभागे चोर्ध्वाधोगता वामपादान्तं स्थिता हस्तिजिह्वा । अपरे वामनेत्रान्तं स्थिता गान्धारी । हस्तिजिह्वाकुह्वोर्मध्येऽधश्चोर्ध्वं गता सर्वगामिनी विश्वोदरा । यशस्विनीकुह्वोर्मध्येऽधश्चोर्ध्वं गता सर्वगामिनी वारुणा । पूषासरस्वत्योर्मध्ये दक्षिणकर्णान्तं स्थिता पयस्विनी । गान्धारीसरस्वत्योर्मध्ये वामकर्णान्तं स्थिता शङ्खिनी । अलम्बुषा कन्दमध्यादधोगता सर्वगामिनी

पायुमूलान्तं स्थिता । एतास्त्वन्याः सिराश्चाश्वत्थपत्रवत् सन्त्येवा इति विज्ञायते ॥

अथातो नाडीचक्रेषु प्राणापानव्यानोदानसमाना नागकृकर-कूर्मदेवदत्तधनञ्जया इति दश वायवः सञ्चरन्ति । एतेषु प्राणादयः पञ्च वायवो मुख्याः । तेषु प्राण एव मुख्यः । प्राणस्थानमास्यना-सिकयोर्मध्यं हृन्मध्यं नाभिमध्यं पादाङ्गुष्ठमिति । पञ्जरवावर्तमणि-प्रभो निश्वासोच्छ्वासकांश्च प्राणो हृत्पद्मं मांसमेत्यावर्तमानो नासिके करोति । अपान इन्द्रनाभिं समावर्त्य विण्मूत्रविसर्जनं करोति । व्यानः सन्धिगतोऽग्निवर्णः पादानि चेष्टादीन् करोति । उदानः किञ्जल्क-सदृशः कण्ठमाश्रित्यान्नपानादिपोषणक्रियां करोति । समानो व्योमाभः क्षीरे सर्पिरिव सर्वान् व्यापकश्चरणशयनादिकं करोति । नागः श्वेतः कण्ठं समाश्रित्योद्गारादीनि करोति । कूर्मो रक्तो नेत्रं समाश्रित्य निमीलनोन्मेषणादि करोति । कृकरः कृष्ण उदरं समा-श्रित्य क्षुत्पिपासादीनि करोति । देवदत्तः पीतवर्णः सर्वगतस्तन्द्रीं करोति । धनञ्जयः श्यामाभः सर्वशोफादि कर्म करोति । जीवात्मा जननो नित्यः शुद्धः सर्वगतोऽक्लेद्योऽदाह्योऽच्छेद्योऽशोष्य इत्येवं भूतदेहं प्रविश्य शुभाशुभकर्माणि करोति । तत् कर्म द्विधा भवति । ऐहिकप्रदं दानाहिंसा चेति । आमुष्मिकप्रदमन्यानि पुण्यपापानि सर्वाणि भवन्ति । देवयोगाद् देहावसाने स्वकर्मानुरूपं प्राप्य तत्कर्म-फलं भक्षयित्वा फले निर्व्यक्ताकाशं प्रविशति । आकाशो भूत्वा वायुं प्रविशति । वायुर्भूत्वाग्निं प्रविशति । अग्निर्भूत्वापः प्रविशति । आपो भूत्वाभ्रं प्रविशति । अभ्रो भूत्वा भूमौ वर्षति । तत ओषधिषु वनस्पतीन् प्रविशति । ओषधीभ्योऽन्नमन्नाद् रेतो मांसशोणितो भवति । ततः स्वविषयां योनिं प्रविशति । दिवसवृद्ध्या च परिणतो जायते चैवं क्षेत्रज्ञस्य परस्परसम्बन्ध इति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते नाडीचक्रलक्षणं

नामैकोनसप्ततितमः पटलः ॥

## अथ सप्ततितमः पटलः ।

अथ देहमयं जन्म कृत्वा मयामयपाशबन्धितो भगवन्मायया कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि करोति । द्वारे निष्क्रम्य पापीयसीं योनिं प्रपद्य पुनर्जायमानः स्वर्गनरकफलेषु प्रवर्तते । तस्मात् भगवन्मायया तिरोहितत्वात् भगवन्तं समाश्रित्य नारायणमुपास्य, उपासनात् सोऽपि भक्तवत्सलत्वात् स्वमायां विमोचयति । ततः सम्यग् ज्ञानं प्रविशति । पश्चादाश्रमधर्मसंयुक्तो भगवदाराधनं करोति । तदाराधनेन संसारांस्तरति । मग्नो जीवात्मा परमात्मानं नारायणं प्रविशति । सोऽप्यपुनरावृत्तिकं प्रसादयति । पश्चात् कृतकृत्यो भवति संसारविमुक्तः सोऽपि । समाराधनविशेषाच्चतुर्विधपदावाप्तिः, सालोक्यसामीप्यसारूप्यसायुज्यमिति । आमोदप्राप्तिः सालोक्यम् । प्रमोदप्राप्तिः सामीप्यम् । सम्मोदप्राप्तिः सारूप्यम् । वैकुण्ठप्राप्तिः सायुज्यमिति । नित्यानवद्यममृतरसपानवत् सदा तृप्तिकरं परमात्मनो नित्यनिषेवणं तद् विष्णोः परमं पदं मध्ये(?)कुलादूर्ध्वं देहमध्यं तस्मिन् हेमाभं त्रिकोणं वह्निमण्डलं तन्मध्ये बिन्दुना सह रेफबीजान्वितं ज्वलते तन्मध्ये मण्डलपुरुषो यज्ञपुरुषो यज्ञमूर्तिः पिङ्गलाभो द्विशीर्षश्चतुःशृङ्गः सप्तहस्तो(?) हस्तेषु दक्षिणेष्वभयस्रुक्शक्तियुतो वामेषु वरदस्रुवखड्गयुतस्त्रिपादः पीताम्बरधरः किरीटादिसर्वाभरणसंयुक्तो दक्षिणवामयोः स्वाहास्वधाभ्यां सहितः सर्वदेवैः परिवृतः । तदूर्ध्वे नवाङ्गुलं कन्दोत्सेधं चतुरङ्गुलोत्सेधायामं त्वगादिभिर्भूषितं मण्डलाकृतिः कन्दमध्ये न........ळद्वारयुतं चक्रम् । तच्चक्रे पुण्यपापैः प्रचोदितः प्राकारपो भ्रमते जीवः तस्योर्ध्वे तिर्यङ्नोर्ध्वमधोगताष्टप्रकृतिरष्टधा कुटिला नागरूपा........ ..............मुक्तिद्वारमध्यं कन्दपार्श्वस्थं ता कुण्डलिनी नाभ्यामुपरि वितस्त्या हृदयं तत्र सर्वं प्रतिष्ठितं हृदयेऽर्कमण्डलं तस्मिन् सकारबीजान्वितं सहस्रज्वालायुतं ज्योतिर्ज्वलति । तन्मध्ये मण्डलपुरुषो विष्णुमूर्तिस्तरुणादित्यसङ्काशो हेमाभो हिरण्यश्मश्रुकेशनखयुक्तः पीताम्बरधरः श्रीवत्साङ्कश्चतुर्भुजः शङ्खचक्रधरोऽभयकट्यवलम्बितहस्तो रक्तास्यनेत्रपाणिपादः सृष्टिस्थित्यन्तकरणो देवीभ्यां स्वपरिषदैः सहितः स्थितः । तदूर्ध्वे नासाग्रे शुद्धस्फटिकसङ्काशं चन्द्र-

बिम्बं तस्मिन् ऋकारबीजान्वितममृतं स्रवन् श्वेतरोचिः । तन्मध्ये मण्डलपुरुषो नारायणमूर्तिः शुद्धस्फटिकसङ्काशः पीताम्बरधरः श्रीवत्साङ्कश्चतुर्भुजः शङ्खचक्रधरोऽभयकट्यवलम्बितहस्तः पद्मोदरदलाभनेत्रो रक्तास्यपाणिपादः किरीटकेयूरहारादिसर्वाभरणभूषितो देवीभ्यां स्वपर्षद्गणैः सहितः स्थितः । तस्योपरि मूर्ध्नि सुषुम्नाया अग्रे मुक्तिद्वारम्'' तस्मिन् शिरःपद्ममधोमुखमूलं षोडशदलैर्युक्तममृतधारासहस्राभिमण्डितं पुरुषं प्लावयतीति विज्ञायते ॥

अथ कन्दादुत्थितं द्वादशाङ्गुलं ज्ञाननालमणिमा महिमा लघिमा गरिमा ऐशित्वं वशित्वं प्राप्तिः प्राकाम्यमित्यष्टैश्वर्यदलोपेतं विद्यात्मकर्णिकं विद्याकेसरसंयुक्तमधोमुखं हृदयकमलं प्राणायामैर्विकसितमूर्ध्वमुखं भवति । तस्यान्तःकर्णिकायां मध्ये महाग्निरिव ज्वलन् विश्वाग्निर्विश्वतोमुखमापादतलमस्तकं सन्तापयति । तन्मध्ये नीवारशूकवत् तन्वी वह्निशिखा । तस्याः शिखायाः मध्ये ज्वलन्तं ज्योतीरूपमेवं सङ्कल्प्य तप्तजाम्बूनदप्रभः पीताम्बरधरः परमात्माख्यो रक्तास्यपाणिपादश्चतुर्भुजः शङ्खचक्रधरः स्वपर्षद्गणैः सह संस्थित इति नीवारशूकवत् तन्वी पीताभा स्यात् तनूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थित इति श्रुतिः । तं विज्ञेयं ध्यानयोगेषु ध्यानचक्षुषा पश्येत् । सदा पश्यन्ति सूरय इति श्रुतिः । विश्वव्यापिनं विष्णुं ध्यानमथनेनाविर्भूतं तेजोभासुरं भक्त्या सकलं सङ्कल्प्यावाह्यार्चयेत् । ..........
.......... शूराय विष्णवे चार्चतेति श्रुतिः । तस्माद् विष्ण्वर्चनमेव कर्तव्यमिति विज्ञायते ॥

अथ समाराधनं चतुर्विधं भवति । जपो हुतमर्चना ध्यानमिति । सावित्रीपूर्ववैष्णवमष्टाक्षरं द्वादशाक्षरं वा भगवन्तं ध्यात्वाभ्यसेत् । स जपः । अग्निहोत्रादिहोमे हुतम् । गृहे देवायतने चोक्तमार्गेण प्रतिमादिषु पूजनमर्चनम् । निष्कलसकलविभागं च ज्ञात्वाष्टाङ्गयोगमार्गेण जीवात्मना परमात्मानुचिन्तनं ध्यानम् । एतेष्वर्चनं सर्वार्थसाधनं स्यात् । तत्र परमात्मेति पञ्चधा भवति । स एव पुरुषः पञ्चधा पञ्चात्मेति श्रुतिः । तस्मात् पृथिव्यादिमहाभूतानां क्रमेण परमात्मनि भेदे वा

सभ्याहवनीयान्वाहार्यगार्हपत्यावसथ्यादिपञ्चाग्निवत् पञ्चधाग्नीन् व्यक्रामद् विराट्..................... इति श्रुतिप्रमाणादिः । पञ्चवायुभेदो पञ्चमूर्तिभेदैर्भिद्यते । पोपूयमानः पञ्चभिः स्वगुणैः प्रसन्नैः सर्वानिमान् धारयिष्यसीति ॥

तस्माद् विष्णुपुरुषसत्याच्युतानिरुद्धानामिति पञ्चानामादिमूर्तिर्विष्णुः । तद्भिन्नाश्चतस्रो मूर्तयः तद्विष्णोः श्रमापनोदाय चतुर्गुणायेति । तस्माद् ब्रह्म चतुष्पाद् भवति । पदार्थत्रिपात्क्रमेण धर्मज्ञानैश्वर्यवैराग्या इति चतुर्मूर्तयो भवन्ति । आदिमूर्तेश्चतुर्मूर्त्तित्वात् क्रमेण विष्णुर्महाविष्णुः सदाविष्णुः सर्वव्यापीति ख्यातो नारायण इति चतुर्मूर्तयो भवन्ति ॥

विष्ण्वंशः पुरुषः सत्यः । सदा विष्ण्वंशोऽच्युतः । सर्वव्यापिनोंऽशोऽनिरुद्ध इति धर्मादिगुणैश्चतुर्धा भिद्यते । पुरुषः पुरुषात्मकः परंपुरुषो धर्ममयमिति । सत्यः सत्यात्मको ज्ञानः सर्वतेजोमयमिति । अच्युतोऽपरिमितोऽपरिमितैश्वर्यः श्रीपतिरिति । अनिरुद्धो महान् वैराग्यः संहार इति ॥

एतेषां रूपं पुरा वर्णेन विधिना चोक्तम् । एवं पञ्चमूर्तिनामभिर्गुरूपदेशसंयुक्तोऽष्टाङ्गयोगमार्गेण ध्यात्वावाह्यार्चयेदित्याह मरीचिः ॥

इति वैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे
देहलक्षणपञ्चमूर्तिभेदविधिर्नाम
सप्ततितमः पटलः ॥

---

वैखानसागमः समाप्तः ॥

शुभं भूयात् ॥

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*) | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Desamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19 मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 22—**मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गाति Madhyamavyayoga-Duta-vakya-Dutaghatotkaca-Karna-bhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—**नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—**जानकीपरिणयः Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—**काणादसिद्धान्तचन्द्रिका Kanadasiddhanta-candrika** (Nyāya) by Gaṅgādhara-sūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—**अभिषेकनाटकम्** **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—**वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—**नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—**वास्तुविद्या Vastuvidya** (Śilpa) (*out of stock*) | 0 | 12 | 0 |
| No. 31—**नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—**वाररुचसंग्रहः Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—**मणिदर्पणः Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—**मणिसारः Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—**आशौचाष्टकम् Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—**चारुदत्तम् Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—**अलङ्कारसूत्रम् Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—**अध्यात्मपटलम् Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—**प्रतिमानाटकम् Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—**तन्त्रशुद्धम् Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyakarana) by Nilakantha Diksita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedanta) by Krsnananda Sarasvati (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotisa) by Paramesvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alankara) by Singa Bhupala. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Ksirasvamin and Tikasarvasva of Vandyaghatiya Sarvananda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kosa) by Amarasimha with the commentary Tikasarvasva of Vandyaghatiya Sarvananda (Part IV, 3rd Kanda). | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः **Sabdanirnaya** (Vedanta) by Prakasatmayatindra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavicara** (Vyakarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nataka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Silpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kavya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedanta) by Krsnananda Sarasvati (Part III). | 2 | 0 | 0 |

| | RS. | AS | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhâravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidâsa with the commentary Pradīpa of Dakṣiṇâvartanâtha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikâ of Śrī Kumâra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyaścittâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part III). | 2 | 0 | 0 |
| No 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûḍâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsas). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Poddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—**नारदीयमनुसंहिता Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumāra. (Part II) | 2 | 8 | 0 |
| No. 99—**मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—**आर्यभटीयम् Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda) | 2 | 8 | 0 |
| No. 102—**दत्तिलम् Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—**हंससन्देशः Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—**साम्बपञ्चाशिका Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—**निधिप्रदीपः Nidhipradipa** of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—**प्रक्रियासर्वस्वम् Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—**काव्यरत्नम् Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—**बालमार्ताण्डविजयम् Balamartandavijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—**न्यायसारः Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatiya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan. (Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara. | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilopakhyana** (Saṅgīta) by **H. H.** Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Māharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II 2nd Adhyaya in 1st Aṣṭaka.) | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadiya** (Vyākaraṇa) with the commentary Prakīrṇakaprakāśa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikantabharana** (Vyākarṇa) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |
| No. 118—बालरामभरतम् **Balaramabharata** (Nāṭya) by Bālarāma Varma Vanci Maharaja. | 2 | 8 | 0 |
| No. 119—विवेकमार्ताण्डः **Vivekamarthanda** (Vedanta) of Visvarupadeva | 0 | 8 | 0 |
| No. 120—शौनकीयम् **Saunakiya** | 0 | 8 | 0 |
| No. 121—वैखानसागमः **Vaikhanasagama** (Tantra) of Marichi. | 2 | 0 | 0 |

***Apply to:—***

*The Superintendent,*

*Government Press,*

*Trivandrum.*